ओ३म्

# क्षीर-तरङ्गिणी

## क्षीरस्वामि-विरचिता

[पाणिनीयधातुपाठस्य पश्चिमोत्तरपाठस्य व्याख्या

सम्पादकः—युधिष्ठिर मीमांसकः

सहयोगी—रामशङ्करो-भट्टाचार्यः

प्रकाशकः—
रामलाल कपूर ट्रस्ट
बहालगढ़ (सोनीपत-हरयाणा)

मुद्रकः—
शान्तिस्वरूप कपूर
रामलाल कपूर ट्रस्ट प्रेस
बहालगढ़ (सोनीपत-हरयाणा)

द्वितीयावृत्ति ५००]　　संवत् २०४२　　[मूल्य-

ओ३म्

# प्रकाशकीय वक्तव्य

क्षीरतरङ्गिणी पाणिनीयव्याकरण के धातुपाठ की उपलब्ध वृत्तियों में सब से प्राचीन वृत्ति है। यह सर्वप्रथम सन् १९३० ई० में जर्मन विद्वान् लिबिश द्वारा रोमन अक्षरों में जर्मन भाषा में लिखित टिप्पणियों सहित छपी थी। इस पर पं० युधिष्ठिर मीमांसक ने बहुत परिश्रम किया और कई योग्य व्यक्तियों को इस कार्य के लिए प्रेरणा भी की। जो अनेक कारणों से सफल न हो पाई। अन्त में उन्होंने स्वयं ही स्वास्थ्य ठीक न रहने पर भी और बहुत सी प्रतिकूलताएँ होते हुए भी इस पुस्तक का सम्पादन बहुत सफलता और योग्यता पूर्वक किया है जो इन के सम्पादकीय वक्तव्य तथा ग्रन्थ में लिखी विद्वत्तापूर्ण टिप्पणियों से प्रकट है।

देखने को यह व्याकरण का एक छोटा सा ग्रन्थ धातुपाठ और उसकी वृत्ति ही प्रतीत होता है। पर गहरी दृष्टि से देखा जाये तो इस विषय पर इतना प्रकाश आज तक किसी विदेशी या स्वदेशी विशेषज्ञ ने नहीं डाला हैं। इसकी गहराई को कृतभूरि परिश्रम विद्वान् ही समझ सकेंगे, ऐसा मेरा मत है। विद्वान् इनकी सब मान्यताओं के साथ सहमत न भी हों, तो भी यह कार्य बहुत ही उत्कृष्ट कोटि का हुआ है ऐसा मानना होगा।

श्री रामलाल कपूर ट्रस्ट अमृतसर के संचालकों ने ऐसे ग्रन्थरत्न को प्रकाशित कर भारतीय प्राचीन साहित्य की महती सेवा की है। यह ट्रस्ट इस दिशा में महान् कार्य कर रहा है। ट्रस्ट ने इस ग्रन्थ के तैयार कराने और दूरी पर छापने आदि में भारी कष्ट सहन किया है। ट्रस्ट की ओर से पं० युधिष्ठिर जी को धन्यवाद देता हूं जो इन्होंने इतना भारी काम ट्रस्ट की ओर से किया। उनके सहायक पं० रामशंकर भट्टाचार्य व्याकरणाचार्य एम० ए० को भी उनकी सहायता के लिए धन्यवाद देता हूं।

ग्रन्थ को शीघ्र प्रकाशित करने का श्रेय श्री बा० हंसराज जी कपूर, मन्त्री रामलाल कपूर ट्रस्ट को है।

**मोती झील,** **ब्रह्मदत्त जिज्ञासु**

**वाराणसी (भारत) [सं० २०१४] प्रधान—श्री रामलाल कपूर ट्रस्ट,**

# क्षीरतरङ्गिण्याः प्रस्तुतं संस्करणम्

अस्माभिः पण्डितरामशङ्करभट्टाचार्यस्य साहाय्येन क्षीरस्वामिविरचितायाः क्षीरतरङ्गिण्याः प्रथमं संस्करणं २०१४ तमे वैक्रमाब्दे (=१९५७तमे क्रैस्तवाब्दे) प्राकाशि। तत्संस्करणं पञ्चदशवर्षेभ्यो दुर्लभमभूत्। पूनानगरस्थे भण्डारकरशोधप्रतिष्ठाने क्षीरतरङ्गिण्या द्वौ शारदालिप्यां लिखितौ प्राचीनतमौ हस्तलेखौ स्तः। तयोः साहाय्येनास्य ग्रन्थस्य पुनः संपादनस्य मनीषाऽऽसीत्, परन्तु प्रयत्ने कृतेऽपि शारदालिपिज्ञस्य देवनागरीलिप्यां प्रतिलिपिकर्तुरनुपलम्भात् पूर्वसंस्करणस्यैव सम्प्रति पुनः प्रकाशनं क्रियते।

यद्यप्यस्य ग्रन्थस्य पुनः सम्पादनस्यास्ति महत्यपेक्षेत्यहमनुभवामि, तथापि चिरकालिकैरनेकैः क्षेत्रियै रोगैः क्षीणस्वास्थ्योऽहं तावत् परिश्रमं कर्तुं न समर्थो यावदत्रास्त्यपेक्षितः। पुनरपि यथासामर्थ्यं भूयो निरीक्ष्य प्रकाश्यते। अत्र पूर्वसंस्करणे विद्यमाना अशुद्धयः संशोधिताः, उपपञ्चाशच्च नूतनाष्टिप्पण्यः संवर्धिताः।

**एका त्रुटिः**—हिन्दीभाषायां दीर्घ ॠकारो तदीया मात्रा च न प्रयुज्यते। अतः सामान्येन देवनागरीमुद्रणाक्षरनिर्मातारो दीर्घस्यर्कारस्य मात्रां न निर्मान्ति। सूक्ष्माक्षरेषु (ह्वाइट मोनो) दीर्घस्यर्कारस्य या मात्रा समुपलब्धा सैवेह यत्र यत्र दीर्घर्कारस्य मात्राया प्रयोग आसीत् प्रयुक्ताः, परन्त्वियं मात्राऽत्यन्तं सूक्ष्मा सामान्येनादृश्येव। **मन्येऽनेन पाठका प्रायेण भ्रान्ता भविष्यन्ति, परन्त्वन्यत् साधनमपि नासीत्।**

**अपरा त्रुटिः**—क्षीरतरङ्गिण्या यत्र तत्र धातुव्याख्याने सैव धातुः पुरस्तादुपरिष्टाद्वा पुनः पठ्यते, तस्य निर्देशो ग्रन्थकारः प्रायेण सर्वत्र विदधाति। पूर्वसंस्करणे एतादृशस्थाननिर्देशाय प्रयुक्ता धातुसूत्रसंख्या यत्र तत्राशुद्धा आसन्, विशेषतो यत्रोत्तरगणस्थानां धातूनां निर्देश आसीत्। अस्मिन् संस्करणेऽष्टचत्वारिंशत्पृष्ठपर्यन्तं पूर्वसंस्करणानुरूपमेवोत्तरधातुसूत्रसंख्या मुद्रिताः, तासु यत्र क्वचिदशुद्धं मुद्रणमजायत, तस्य संशोधनमन्ते शुद्धिपत्रे कृतम्। अत्र या अन्या अप्यशुद्धयो मुद्रणकाले मुद्रणपत्रनिरीक्षणे दृष्टिदोषादजायन्त, तासामपि संशोधनं तत्रैव प्रदर्शितम्। पाठकान् प्रार्थयेऽहं यत्संशोधनपत्रानुसारं पूर्वं संशोध्य तदनुपठनीयम्।

**युधिष्ठिरो मीमांसकः**

# विषय-सूची

# पाणिनीयो धातुपाठस्तद्वृत्तयश्च[1]

अस्ति संस्कृत-व्याकरण-वाङ्मये धातुपाठस्य विशिष्टं स्थानम् । नह्येतस्य प्रवचनं विना कश्चिदप्याचार्यः शब्दानुशासनप्रवचने समर्थो भवति । अत एव पाणिनेरौत्तरकालिकाः कातन्त्र-चान्द्र-जैनेन्द्र-शाकटायन-हैमप्रभृतिशब्दानुशासनाना सर्वं एव प्रवक्तारः स्वं स्वं धातुपाठं प्रोचुः । पाणिनेः पौर्वकालिकैः सर्वैः शब्दशास्त्र-प्रवक्तृभिर्धातुपाठस्य प्रवचनं कृतं नवेत्यत्र यद्यपि न शक्यते याथातथ्येन वक्तुम्, तथापि पाणिने. प्राचीनस्यापिशलेर्बहवो धातवो यत्र तत्र ग्रन्थेषूपलभ्यन्ते[2], तेन तस्य धातुपाठप्रवक्तृत्वं स्पष्टमेव । ततोऽपि प्राक्तनस्य भगवतः काशकृत्स्नस्य सम्पूर्णो धातुपाठश्चन्नवीरकविकृतया कन्नडटीकया सनाथीकृत एषु पञ्चषेषु वर्षेषु[3] प्रकाशतामुपगतः । एवं भागुरेराचार्यस्य यानि मतानि ग्रन्थेषूपलभ्यन्ते तेष्वनेकधातूनां निर्देशात्[4]

---

१. अस्माभिः पणिनेः पूर्ववर्तिनामुत्तरवर्त्तिनां सर्वेषामपि धातुपाठप्रवक्तृणामाचार्याणा तत्तद्धातुपाठस्य वृत्तिकाराणां चेतिवृत्तं 'संस्कृत व्याकरण शास्त्र का इतिहास' इति नाम्नो ग्रन्थस्य २०-२१-२२ तमेष्वध्यायेषु (भाग २, पृष्ठ २६—१४३) विस्तरेण लिखितम्, तत् तत्रैवावलोकनीयम् । इह तु पाणिनीयधातुपाठस्य तद्वृत्तीनां च विषये किञ्चिल्लिख्यते ।

२. सकारमात्रमस्तिं धातुमापिशलिराचार्यः प्रतिजानीते । न्यास १।१।२२, पृष्ठ २२६ । एवमन्यत्रापि (न्यास पृ० ६९८, ६९९,७०१) द्रष्टव्यम् । उषिजिघर्त्ती छान्दसौ धातू, व्याकरणस्य शाखान्तरे आपिशलादौ स्मरणात् । स्कन्द-निरुक्तटीका भाग, २ पृष्ठ २२ ।। [तु] छान्दसोऽयमित्यापिशलिः । धातुप्रदीप पृष्ठ ८० ।

३. क्षीरतरङ्गिण्याः प्रथमसंस्करणप्रकाशनसमयानुसारम् (प्र० स० काले वै० २०१४) । २०२२ तमे वैक्रमाब्दे चन्नवीरकृतायाः टीकायाः संस्कृतरूपान्तरं 'काशकृत्स्न-धातुव्याख्यानम्' इति नाम्ना मया प्रकाशितम् ।

४. भागुरेः शब्दानुशासनस्योपलब्धान्युद्धरणान्यस्माभिः स्वीये 'संस्कृत व्याकरण शास्त्र का इतिहास' नाम्नि ग्रन्थे सकलितानि । द्र० भाग १, पृष्ठ २०६—२०७ (सं० २०४१) ।

तत्प्रोक्तो धातुपाठोऽप्यासीदिति संभाव्यते। सर्वनाम्नां धातुजत्वप्रतिपादकस्य वैयाकरणमूर्धन्यस्य शाकटायनस्य धातुपाठप्रवचने शङ्कैव नोदेति। एवं पाणिनेरुत्तरवर्तिनां पूर्ववर्तिनां च शब्दशास्त्रप्रवक्तॄणां तत्तद्धातुपाठस्य प्रवक्तृत्वे[1] निश्चिते शक्यत ऊहितुं यद् भगवता पाणिनिनाऽपि शब्दानुशासनं प्रवचता धातुपाठस्यापि प्रवचनमवश्यं कृतं स्यात्।

## पाणिनेर्धातुपाठः

यं धातुपाठं पाणिनीया वैयाकरणा आद्रियन्ते व्याचक्षते च, स पाणिनि-प्रोक्त इति समेषां पाणिनीयानां मतम्।

**एतस्य पाणिनीयत्वे न्यासकारस्याक्षेपः**—पाणिनीयेषु वैयाकरणेषु काशिकाव्याख्याता न्यासकारो जिनेन्द्रबुद्धिरेक एव तादृशो वैयाकरणो य एतस्य धातुपाठस्य पाणिनीयत्वं न स्वीकरोति। तथा ह्याह—

१. **प्रतिपादितं हि पूर्वं[2] गणकारः[3] पाणिनिर्न भवतीति। तथा चान्यो गणकारोऽन्यश्च सूत्रकारः।** न्यास भाग २ पृष्ठ ८४०।

२. **यद्यत्र त्रिग्रहणं क्रियते, निजादीनामन्ते वृत्करणं किमर्थम्? एतद् गणकारः प्रष्टव्यः, न सूत्रकारः। अन्यो हि गणकारोऽन्यश्च सूत्रकार इत्युक्तं प्राक्।** न्यास भाग २ पृष्ठ ८७३।

**न्यासकारस्य स्ववचनविरोधः**——धातुपाठस्यापाणिनीयत्वप्रतिपादके न्यासकारस्य द्वे वचने पुरस्तादुद्धृते। परमेकत्राऽऽपिशलधातुपाठमालोचयन्नयं न्यासकारः 'किञ्चिद् धातुगणं पाणिनीयम्' इत्यपि प्रतिपेदे। तथा चाह—

---

१. पाणिनेः पूर्वोत्तरवर्तिभि. प्रोक्तानां धातुपाठानामितिवृत्तमास्माकीनस्य 'सं० व्या० शास्त्र का इतिहास' ग्रन्थस्य द्वितीयभागे विंशतितमेऽध्याये (पृष्ठ २६-४३; सं० २०४१) द्रष्टव्यम्।

२. नहि क्वचित् पूर्वं न्यासे धातुगणकारस्यान्यत्वप्रतिपादकं वचनमुपलब्धम्। प्रातिपदिकगणकारस्यान्यत्वं तु पूर्वं बहुत्रोक्तम्। प्रातिपदिकगणमपि पाणिनीयमिति 'संस्कृत व्याकरण शास्त्र का इतिहास' ग्रन्थस्य द्वितीये भागे सप्रमाणं २३ तमेऽध्याये प्रतिपादितम्।

३. गणकारशब्देनात्र धातुगणकारोऽभिप्रेतः, एवमुत्तरत्रापि।

**न तस्य पणिनेरिव अस भुवि इति गणपाठः ।** न्यास भाग १ पृष्ठ २२६ ।

अनेन स्ववचनविरोधेन निग्रहस्थाने निपतितस्य न्यासकारस्यापाणिनीयत्वमतं कथंकारं प्रमाणतां भजेत् ।

**न्यासकारस्य भ्रान्तिः**—अपि चास्मन्मते न्यासकारस्य धातुपाठस्यापाणिनीयत्वप्रतिपादकौ हेतू हेत्वाभासावेव । नहि खल्वयं न्यासकारः प्रोक्तकृतयोर्ग्रन्थयोरन्तरं वेत्ति इत्यपि तदीयपूर्ववचनालोचनया विज्ञायते । स हि खलु अष्टाध्यायी धातुपाठश्च पाणिनिना कृतौ ग्रन्थावित्यास्थायालोचयांचकार । यदि हि नाम केवलामष्टाध्यायीमपि तदीयां कृतिं मत्वाऽऽलोचयेम तर्हि तस्यामपि पदे पदे विरोधः शक्य उपस्थापयितुम् । तथाहि—

१. **औङ आपः** (अ० ७।१।१८) इत्यत्र **औङ्**-पदेन **औ-औट्** इत्येतौ सुप्प्रत्ययावभिप्रेतौ । न च पाणिनिना क्वचिदप्यष्टाध्याय्यां औ-औट् इत्येतयोरौङ् संज्ञा विधीयते ।

२. **आङि चापः, आङो नाऽस्त्रियाम्** (अ० ७।३।१०५, १२०) इत्यनयोराङ् पदेन तृतीयैकवचनं **टा** निर्दिश्यते । न च क्वचित् पाणिनिना टाया[1] आङ् संकेतः प्रतिज्ञातः ।

एवमन्यत्रापि द्रष्टव्यम् । सति चैवं विरोधेऽष्टाध्याय्या अपि पाणिनीयत्वं दूरेऽपाकृतं स्यात् । यदि हि नाम पूर्वसूत्र[2]-निर्देश-हेतुनाऽष्टाध्याय्यां विरोधपरिहारः कर्तुं शक्यः, तर्हि तेनैव हेतुनाऽष्टाध्यायीधातुपाठयोरपि विरोधपरिहारः कथंकारं न भवेत् । पूर्वसूत्र-

---

१. अत्र 'क्त्वायां कित्प्रतिषेधश्च' (महा० १।२।१) इति वार्त्तिकवचनं, 'टाया आदेशः, टायामादेशः' इति कैयटवचनं चानुसन्धेयम् (महा० प्रदीप १।१।३९); 'क्त्वायां विकल्पः', 'क्त्वायां च' इति वामनः (काशिका ७।२।५०) 'क्त्वायामिडविकल्पार्थः······' इति धातुवृत्तौ (पृष्ठ ३८८) सायणः । सूत्रपाठे तु भगवान् पाणिनिराकारलोप शास्ति । यथा—जृव्रश्च्योः क्त्वि (अ० ७।२।५५) ।

२. निर्देशोऽयं पूर्वसूत्रेण वा स्यात् । महा० ७।१।१८।। एवमन्यत्रापि महाभाष्ये १।१ झभञ्सूत्रे; १।२।६८; ४।१,१४; ६।१।१६३; ८।४।७ पूर्वसूत्रनिर्देश उपलभ्यते ।

निर्देशा अप्यष्टाध्याय्याः पाणिनेः कृतित्वमपाकृत्य तत्प्रवक्तृत्वमेव प्रतिपादयन्ति ।

**प्रोक्तकृतयोर्भेदः**—वैयाकरणैः सर्वमपि संस्कृतवाङ्मयं दृष्ट-प्रोक्त-उपज्ञात-कृत-व्याख्यानभेदैः पञ्चधा विभज्यते[1] । अत एव ते प्रोक्त-कृतयो. **तेन प्रोक्तम्** (अ० ४।३।१०१), **कृते ग्रन्थे** (अ० ४।३।११६) इति भेदेन प्रत्ययविधानमूचुः । कृतेषु ग्रन्थेषु सर्वा अपि तदीयो वर्णानुपूर्वी तद्ग्रन्थकारस्यैव भवति । प्रोक्तग्रन्थेषु तु इतोऽन्यथा परिस्थितिः । प्रवक्तारस्तु खलु पूर्वतो विद्यमानस्य शास्त्रस्य परिष्कारका एव भवन्ति, न तु तस्याद्यन्तवर्णानुपूर्व्या रचयितारः । प्रोक्तग्रन्थेषु तत्तत्प्रवक्तृणा स्वोपज्ञांशो वर्णानुपूर्व्यंशश्च स्वल्पमात्रो भवति । अयमेव प्रोक्तविभाग आयुर्वेदीयचरकसंहितायां संस्कृतपदेनोच्यते । तत्रोक्तं संस्कृतलक्षणम्—

**विस्तारयति लेशोक्तं संक्षिपत्यतिविस्तरम् ।**
**संस्कर्ता कुरुते तन्त्रं पुराणं च पुनर्नवम् ॥**
**अतस्तन्त्रोत्तममिदं चरकेणातिबुद्धिना[2] ।**
**संस्कृतं[3] तत्**..................॥ सिद्धि० १२।६६,६६॥

इयं तावत् वास्तविकी स्थितिः, यत्समग्रे संस्कृतवाङ्मये ये मूलभूताः शास्त्रपदालङ्कृता विद्याग्रन्था सम्प्रत्युपलभ्यन्ते ते सर्वेऽपि तत्तदाचार्याणां प्रवचनरूपा एव, न तु तत्कृतयः ।

सति चैवम्, अष्टाध्यायीधातुपाठावपि पाणिनेः प्रोक्तौ ग्रन्थौ ! अतोऽनयोर्यत्र क्वचिदपि विरुद्धांशो निरर्थकांशो वा दृश्यते तत्र विभिन्नस्रोतोभ्यां संगृहीतौ तावित्येवं समाधेयम् । अयमेव च राजमार्गोऽष्टाध्याय्यामप्युपलभ्यमानानां विरोधादीनां परिहारे द्रष्टव्यः ।

---

१. द्रष्टव्य यथाक्रमम्—४।२।७; ४।३।१०१; ४।३।११५; ४।३।७७. ११६; ४।३।६६॥

२. अयं चरको वैशपायननाम्ना प्रसिद्धो महर्षिः । चरक इति वैषम्पायनस्याख्या इति वृत्तिकृत् (का० ४।३।१०४) । अत एव सर्वेऽपि वैशम्पायनशिष्याश्चरका इत्युच्यन्ते । त एव शतपथादिषु चरकाध्वर्यु-नाम्ना स्मर्यन्ते । द्र० कविराज-सूरमचन्द्रकृतः, 'आयुर्वेद का इतिहास' नामा ग्रन्थः ।

३. इदमेव प्रतिसंस्कृतशब्देनाप्युच्यते । तथा च चरकसंहितायां प्रत्यध्यायान्ते पठ्यते—अग्निवेशकृते तन्त्रे चरकप्रतिसंस्कृते ।

**भ्रान्तेरपरं कारणम्**—योऽयं खलु पाणिनीयो धातुपाठः सम्प्रत्युपलभ्यते, तस्याऽद्य यावद् बहुकृत्वः परिष्करणात् तत्पाठे महत्यव्यवस्थाऽभूत् (एतद्विषय उपरिष्टाद्वक्ष्यते)। अनया पाठाव्यवस्थयाऽपि बहुत्र विरोधस्य संभवः।

## धातुपाठस्य पाणिनीयत्वे प्रमाणानि

भगवता पाणिनिना शब्दानुशासनस्य प्रवचनं कुर्वता **भूवादयो धातवः** (अ० १।३।१) इति सूत्रविज्ञापितस्तत्खिलरूपो[1] धातुपाठोऽपि प्रोक्त इत्यत्र सन्ति बहूनि प्रमाणानि। तेषु कानिचिदुच्यन्ते—

१—पुषादिद्युताद्य्लृदितः परस्मैपदेषु (अ० ३।१।५५), किरश्च पञ्चभ्यः (अ० ७।२।७५), शमामष्टानां दीर्घः श्यनि (अ० ७।३।७४) इत्यादिषु बहुषु सूत्रेषु धातुपाठान्तर्गताया धात्वनुपूर्व्याः स्मरणात्, धातुपाठस्थैर्विविधैरनुबन्धैः सूत्रेषु कार्यविधानाच्चा[2]नुमीयते यत् पाणिनिना सूत्रपाठ-प्रवचनात् प्रागेव प्रातिपदिकगणवद्[3] धातुपाठस्यापि प्रवचनं व्यधायि। यतो नहि तत्प्रवचनाभावे कथमपि सूत्रपाठस्य प्रवचनं सभवति।

महाभाष्यकारस्तु भगवान् पतञ्जलिरिमं धातुपाठं पाणिनीयमेव स्वीकरोति। तथाहि—

२ **आगमाः शुद्धाः पठ्यन्ते······विकाराः······प्रत्ययाः·········धातवोऽपि शुद्धाः पठ्यन्ते**। महा० १।१। आ० १, अन्ते।

अत्र सर्वत्र 'पठ्यन्ते' क्रियायाः कर्ता समान एव। तेन आगम-

---

१. सूत्रपाठातिरिक्ता धातुपाठगणपाठोणादिलिङ्गानुशासनग्रन्थाः खिलशब्देनोच्यन्ते। द्र० काशिका १।२।३; महाभाष्यदीपिका भर्तृहरिकृता, पृष्ठ १४६।

२. अनुदात्तङित आत्मनेपदम् (अ० १।३।१२) स्वरितञितः कर्त्रभिप्राये क्रियाफले (अ० १।३।७२) ड्वितः क्त्रिः (अ० ३।३।८८) ट्वितोऽथुच् (अ० ३।३।८९) इति सूत्रभाष्यमनुसन्धेयम्।

३. सूत्रपाठात पूर्वं गणपाठस्य प्रवचनमभूदित्यत्र 'पूर्वपरावर' (अ० १।१।३४) इति सूत्रभाष्यमनुसन्धेयम्।

विकारप्रत्ययादीनां पाठको यदि पाणिनिस्तर्हि नूनं धातूनां प्रवक्ताऽपि स एव ।

**३—एवं तर्हि सिद्धे सति यदादिग्रहणं करोति तज्ज्ञापयत्याचार्यः—अस्ति च पाठो बाह्यश्च सूत्रात्** । महा० १।३।१॥

अत्र स्पष्टमेव धातुपाठस्य सूत्रवत् पाणिनीयत्वमुपपादितम् । अत्र ह्याचार्यपदेन पाणिनिरेवाभिप्रेतः, यतो हि तस्यैव **भूवादयो धातवः** (अ० १।३।१) इति सूत्रनिर्दिष्टाऽऽदिग्रहणेनैतज्ज्ञापनमुक्तम् ।

**४—अथवाऽऽचार्यप्रवृत्तिर्ज्ञापयति नैवं जातीयकानामिद्विधिर्भवति । यदयमिरितः कांश्चिन्नुमनुषक्तान् पठति—उबुन्दिर् निशामने, स्कन्दिर् गतिशोषणयोः** । महा० १।३।७॥

अस्मिन्नुद्धरणे य एव खल्वाचार्यो ज्ञापयति-क्रियायाः कर्ता, स एव पठति-क्रियाया अपि, इत्यनया वाक्यरचनया विस्पष्टम् । तथा च सति नुमनुषक्तानाम् उबुन्दिर् आदिधातूनां पाठकः पाणिनिरेव ।

**५—तथाजातीयकाः खल्वाचार्येण स्वरितञितः पठिता य उभयवन्तः, येषां कर्त्रभिप्रायं चाकर्त्रभिप्रायं च क्रियाफलमस्ति** । महा० १।३।७२॥

भाष्यकारो हि आचार्यपदेन पाणिनिं वा स्मरति कात्यायनं वा । उक्तवाक्ये कात्यायनस्य निर्देशो न कथमपि संभाव्यतेऽतो व्यतिरेकेण पाणिनिरेवात्राचार्योऽभिप्रेतः । तथा सति पाणिनिनैव स्वरितञितो धातवः पठिता इति व्यक्तम् । स च पाठो धातुगण एव सम्भवति, नान्यत्र ।

**६—कृतमनयोः साधुत्वम् । कथम् ? वृधिरस्मायविशेषेणोपदिष्टः प्रकृतिपाठे, तस्मात् क्तिन्प्रत्ययः**······ ॥ महा० १।१।१॥

**७—मृजिरस्मायविशेषेणोपदिष्टः** । महा० १।१।१॥

**८—घरतिरस्मायविशेषेणोपदिष्टः** । महा० ७।१।६७॥

**९—रशिरस्मायविशेषेणोपदिष्टः** । महा० ६।१।६७॥

अत्र हि षष्ठ उद्धरणे भाष्यकृता प्रकृतिपाठस्य साक्षादुल्लेखः कृतः । तत्र च वृधेरुपदेष्टा स एव, येन क्तिन्प्रत्ययस्य विधानमुक्तम् ।

क्तिन्प्रत्ययस्य च विधाता पाणिनिरेव, अतः प्रकृतिपाठे वृधेरुपदेष्टाऽपि स एव भवितुमर्हति, नान्यः । एवंमुत्तरेष्वप्युद्धरणेषु विज्ञेयम् ।

सप्तमोद्धरणस्य व्याख्यायां **शिवरामसरस्वत्याह**—

**मृजिरस्मा इति—अस्मै साधुशब्दबुभुत्सवे पाणिनिना धातुपाठे मृजूष् शुद्धौ इत्युपदिष्ट इति ।**

उद्द्योतस्य छायाव्याख्याकारो **वैद्यनाथपायगुण्डोऽप्याह**—

**पाणिनिना प्रत्ययविशेषानाश्रयेण मृजूष् शुद्धौ इति धातुपाठ उपदिष्टः ।**

१०—बहवो हि वैयाकरणाः सूत्रपाठमिव धातुपाठमपि पाणिनीयं मन्यमानास्तत्रस्थप्रयोगसामर्थ्यादनेकेषां प्रयोगाणां साधुत्वमातिष्ठन्ते । तथाहि—

**क—कथमुद्यमोपरमौ ? अड उद्यमने** (क्षीरत० १।२४६) **यम उपरमे** (क्षीरत० १।७ १) **इति निपातनादनुगन्तव्यौ ।** काशिका ७।३।३४।।

**ख—धू विधूनने** (क्षीरत० ६।९८), **तृप प्रीणने** (क्षीरत० पृ० ३१६ टि० ५) **इति निपातनादेतयोर्नुग् भविष्यति ।** न्यास भाग २ पृष्ठ ७९२।।

**ग—'व्याजीकरणे' लिङ्गाद् घञि कुत्वाभावः—व्याजः ।** क्षीरत० ६।१६।।

**घ—शुभ शुम्भ शोभार्थे** (क्षीरत० ६।३४) **अत एव निपातनाच्-शोभा साधुः ।** क्षीरतरङ्गिणी ६।३४।।

**ङ—शोभेति निपातनात्** इति वामनः काव्यालङ्कारे (५।२।४१)।

एतैः प्रमाणभूतानामाचार्याणां वचनैर्धातुपाठस्य पाणिनिप्रवक्तृत्वं सर्वथा विस्पष्टम्, नात्र कश्चिच्छंकालवोऽप्युदेतुं समर्थः ।

## धात्वर्थनिर्देशः पाणिनीयोऽपाणिनीयो वा

ये खलु धातुपाठं पाणिनीयमुररीकुर्वन्ति, तेऽपि धात्वर्थानां पाणिनीयत्वापाणिनीयत्वयोर्विप्रवदन्ते । तेषां पाणिनीयत्वापाणिनीयत्वयोर्यानि प्रमाणानि, तान्यधस्तान्निर्दिश्यन्ते । तथाहि—

**अपाणिनीयत्वप्रतिपादकानि प्रमाणानि**—यैः प्रमाणैर्धात्वर्थ-निर्देशानामपाणिनीयत्वं प्रतीयते, तान्युच्यन्ते—

१—**परिमाणग्रहणं च कर्तव्यम् । इयानवधिर्धातुसंज्ञो भवति इति वक्तव्यम् । कुतो ह्येतद् भूशब्दो धातुसंज्ञो भवति, न पुनर्भ्वेधशब्दः ।** महा० १।३।१॥

यदि हि नाम **भू सत्तायाम् एध वृद्धौ** इत्येवं सार्थको धातूनां पाठो भवेत्, तर्हि **भ्वेध**समुदायस्य धातुसंज्ञायाः शङ्कैव नोदेति, **भू** शब्दानन्तरं **सत्तायाम्** पदस्य पाठात् । अत एव एतद्भाष्यव्याख्याने **कैयट** आह—

**न चार्थपाठः परिच्छेदकः, तस्यापाणिनीयत्वात्, अभियुक्तैरुपलक्षणतयोक्तत्वाद् इति ।**

अत्रैव अभियुक्तपदव्याख्याने **नागेशः**—**भीमसेनेनेत्यैतिह्यम्** इत्युक्तम् ।

२—**पाठेन धातुसंज्ञायां समानशब्दानां प्रतिषेधो वक्तव्यः । या इति धातुः, या इत्याबन्तः । वा इति धातुः, वा इति निपातः । नु इति धातुः, नु इति प्रत्ययः । दिव इति धातुः, दिव इति प्रातिपदिकम् ।** महा० १।३।१॥

यदि हि नाम धातुपाठेषु **या प्रापणे, वा गतिगन्धनयोः** इत्येवं सार्थो धातूपदेशः स्यात्, तर्हि शङ्कैवेयं नोदियात् । यः खलु प्रापणेऽर्थे या-शब्दः स धातुसंज्ञो भविष्यति । आबन्तस्तु नैव प्रापणार्थकः, कुतस्तस्य धातुसंज्ञायाः प्राप्तिः, यस्य प्रतिषेधः कर्तव्यो भवेत् । एवं वा नु-दिव आदिष्वप्यूह्यम् ।

३—(क) **न ह्यर्था आदिश्यन्ते क्रियावचनता च गम्यते ।** महा० ३।१।८, ११, १९॥

(ख) **कः खल्वपि पचादीनां क्रियावचनत्वे यत्नं करोति ।** महा० ३।१।१९॥

(ग) **को हि धातुप्रातिपदिकनिपातानामर्थानादेष्टुं समर्थः ।** महा० २।१।१॥

द्वितीयवाक्यं व्याख्ययन् नागेश आह—**पचादीनामर्थरहितानामेव पाठात् ।**

४—**भट्टोजिदीक्षितोऽपि** भूवादिसूत्रकौस्तुभे ( १।३।१ ) ऽर्थ-रहितानामेव धातूनां पाठं स्वीचकार । तथाहि—

**न च या प्रापणे इत्याद्यर्थनिर्देशो नियामकः,तस्यापाणिनीयत्वात् । भीमसेनादयो ह्यर्थं निर्दिदिक्षुरिति स्मर्यते । पाणिनिस्तु भ्वेध इत्याद्य पाठीत् इति भाष्यकैयटयोः स्पष्टम् ।**

५—स एव पुनराह—

**तितिक्षाग्रहणं ज्ञापकं भीमसेनादिकृतोऽर्थनिर्देश उदाहरणमात्रम् ।** शब्दकौस्तुभ १।२।२०॥

एभिः प्रमाणैरिदं विस्पष्टं यत्पाणिनीयधातुपाठे योऽर्थनिर्देशः सोऽपाणिनीयः । पाणिनिस्तु **भ्वेधस्पर्ध** इत्येवमर्थविरहितानेव धातून् पपाठेति ।

**पाणिनीयत्वप्रतिपादकानि प्रमाणानि**—तत्र यैः प्रमाणैर्धात्व-र्थनिर्देशानां पाणिनीयत्वं सिध्यति, तान्युच्यन्ते—

१—महाभाष्ये केचन धातवोऽर्थनिर्देशपुरःसरमुद्ध्रियन्ते । तेन ज्ञायते महाभाष्यात् प्राक् पाणिनीयधातुपाठेऽर्थनिर्देशो वर्तमान आसीत् ।

२—**चुटू-सूत्रव्याख्याने महाभाष्यकारः पठति**—

**अथवा आचार्यप्रवृत्तिर्ज्ञापयति—नैवं जातीयकानामिद्विधि-र्भवति इति यदयमिरितः कांश्चिन्नुमनुषक्तान् पठति–उबुन्दिर् निशा-मने, स्कन्दिर् गतिशोषणयोः, इति ।** महा० १।३।७॥

पाणिनिना धातुपाठस्य प्रवचनं कृतमित्यनेन वचनेन ज्ञापितं पुरस्तात् । अतो येन खल्वाचार्येण **उबुन्दिर् स्कन्दिर्** धातू इरितौ नुमनुषक्तौ च पठितौ, तेनैव तयोरत्र निर्दिष्टौ निशामने गतिशोषणे चार्था अपि पठिता इति विस्पष्टम् ।

३—भूवादिसूत्रेऽप्याह भाष्यकृत्—

**वपिः प्रकिरणे दृष्टः, छेदने चापि वर्तते—केशश्मश्रु वपतीति ।**

**ईडिः स्तुतिचोदनायाच्ञासु दृष्टः, प्रेरणे चापि वर्तते—अग्निर्वा इतो वृष्टिमीट्टे मरुतोऽमुतश्च्यावयन्ति इति। करोतिरभूतप्रादुर्भावे दृष्टः, निर्मलीकरणे चापि वर्तते -पृष्ठं कुरु, पादौ कुरु, उन्मृदानेति गम्यते।** महा० १।३।१॥

अत्र महाभाष्यकृता केषाञ्चिदर्थानां दृष्टत्वमुक्तम्, केषाञ्चिच्च वर्तनत्वम्। तत्र **दृष्टः-वर्तते**-पदयोरैकार्थ्यं नेति तु वाक्यविन्यासादेव स्पष्टम्। तेन योऽर्थो दृष्ट इत्युक्तस्तस्यायमेवाभिप्रायो यत् स धातुपाठे पठितो दृश्यत इति[1]। यस्त्वर्थो वर्तते-क्रियया निर्दिष्टः, स खलु धातुपाठेऽपठितोऽपि लोकेवेदयोरुपलभ्यत इति।

४—बहवो हि वैयाकरणा धातुपाठे पठितानामर्थनिर्देशानां सूत्रवत् प्रामाण्यं स्वीकुर्वन्ति। तद्यथा—

**क—कथमुद्यमोपरमौ? अड उद्यमे यम उपरमे इति निपातनादनुगन्तव्यौ**। काशिका ७।३।१४॥

**ख—धू विधूनने तृप प्रीणने इति निपातनादेतयोर्नुग् भविष्यति।** न्यास भाग २ पृष्ठ ७९२॥

**ग—शुभ शुम्भ शोभार्थे। अत एव निपातनात् शोभा साधुः।** क्षीरत० ६।३४॥

**घ—शोभेति निपातनात्** इति काव्यालङ्कारे (५।२।४१) वामनोऽपि।

यदि हि नाम धात्वर्थनिर्देशः पाणिनीयो नाभविष्यत् तर्हि वैयाकरणानां तत्र सूत्रवत् प्रामाण्यबुद्धिरपि नोदैष्यत्[2]। दृश्यते च यतस्तत्र सूत्रवत् प्रामाण्यबुद्धिस्तस्मात् स्पष्टमेव यद् धात्वर्थनिर्देशान् प्रमाणीकुर्वन्तो वैयाकरणास्तानार्थनिर्देशान् पाणिनीयानेव मन्यन्ते।

---

१. इह बीजसन्तानस्य प्रकिरणशब्देन, करणस्याभूतप्रादुर्भावशब्देनार्थतो निर्देशो द्रष्टव्यः। ईडेः चोदनायाच्ञाऽर्थौ धातुपाठे पठितौ नोपलभ्येते। तत्र कारणमुपरिष्टाद् वक्ष्यते।

२. यथा हि न्यासकारो धातुपाठमपाणिनीयं मन्यमानोऽप्येकत्र तस्य पाणिनीयत्वमभ्युपगतवान् (तत्प्रमाणं पूर्वं निर्दिष्टम्, पृष्ठ २-३)। तथैवेह धात्वर्थनिर्देशानामपि सूत्रवत् प्रामाण्यं स्वीचकार (द्र० ख-वचनम्)।

५—धातुवृत्तिकारा बहुत्र धातुसूत्राणां संहितापाठस्य प्रामाण्यमाश्रित्य सूत्रविच्छेदे विप्रवदन्ते। यथा—

क—**तपऐश्वर्येवावृतुवरणे** (क्षीरत० ४।४८, ४९) इति दैवादिकपाठे मध्ये पठ्यमानं **वा** पदं पूर्वसूत्रस्यावयवः, उतोत्तरस्य। पूर्वावयवे भौवादिकस्य **तप सन्तापे** (क्षीरत० १।७१२) इत्यस्यैश्वर्ये वा दिवादित्वमाचष्ट इत्येके मन्यन्ते। उत्तरावयवेऽपि **वा** इति पृथक् पदं सद् भौवादिकस्य **वृतु** धातोः (क्षीरत० १।५०४) वरणे वा दिवादित्वं ब्रूते इत्यपरे संगिरन्ते, धात्वेकदेशो **वावृतु** इति धातुरित्यन्य आतिष्ठन्ते।[1]

ख—**पतगतौवापशअनुपसर्गात्** (क्षीरत० १०।२४९, २५०) इत्यत्रापि **वा** पदं पूर्वसूत्रावयवः, उतोत्तरस्येति विवादः। केचन पूर्वसूत्रावयवं मन्यमानाः पत-धातोर्गतौ वा णिजुत्पद्यत इत्याहुः। अपर उत्तरसूत्रावयवं मन्यमाना अपि **वा** पदं स्वतन्त्रमभ्युपगम्य पशोऽनुपसर्गाद् वाऽदन्तत्वमाहुः, अन्ये तु **वा** शब्दं धात्ववयवं ब्रुवाणा **वापश** इति धातुं स्वीचक्रुः।[2]

ग—**तत्रिकुटुम्बधारणे** (१०।१२८) अत्र व्याख्यातारो विवदन्ते '**तत्रि कुटुम्बधारणे**' उत '**तत्रि कुटुम्ब धारणे** इति द्वौ धातू।

अयं सर्वोऽपि विवादो धात्वर्थनिर्देशानां पाणिनीयत्वमुररीकृत्यैवोपपद्यते। यदि हि नामैतादृशेषु स्थलेषु **भ्वेधस्पर्ध-**वत् केवलो धातुनिर्देश एव पाणिनीयोऽभविष्यत् तर्हि **तपवावृतु पतवापश** इत्येवं संहितापाठे वा-शब्दे पठ्यमानेऽपि **वावृतु** धातोः **वापश** धातोश्च स्वरूपे सन्देह एव नोत्पद्यते, वा-रहितपाठे तु नतराम्। यदि हि **तपवावृतु पतवापश**, इत्यर्थविरहिते पाठे सन्देहावसरः स्यादपि तदा तपवावृतु यद्वा तपवा—वृतु, एवं पत—वापश यद्वा पतवा-पश इत्येवं सन्देहः स्यात्, न तु यथा वृत्तिकारा आहुस्तथा।

सायणः सार्थपाठं पाणिनीयं मन्यमानः **तपऐश्वर्येवावृतुवरणे**

१. अत्र क्षीरतरङ्गिणी (४।४८, ४९), धातुप्रदीपः (पृष्ठ ९३), पुरुषकारः (पृष्ठ ९३); धातुवृत्तिः (पृष्ठ २९३) सिद्धान्तकौमुदी च द्रष्टव्याः।

२. अत्र क्षीरतरङ्गिणी १०।२४९, २५० द्रष्टव्या।

इत्यत्र तप ऐश्वर्ये वा—वृतु वरणे इत्येवं, तप ऐश्वर्ये वावृतु वरणे इत्येवं चोभयथा सन्धिविच्छेदमपि पाणिनीयमाह। तथापि—

**अस्माकं तूभयमपि प्रमाणमाचार्येणोभयथा शिष्याणां प्रतिपादनात्**। धातुवृत्ति पृष्ठ २९३।

६—यदि हि पाणिनीये धातुपाठेऽर्थनिर्देशोऽपाणिनीयः स्यात् तर्हि समाने प्रघट्टके एकस्यैव धातोर्द्विः पाठो नोपपद्यते। धातुस्वरूपनिदर्शनाय सकृत् पाठ एव पर्याप्तः स्यात्। तथाहि—

क—अट्टादिषु **हुडेः**—हुडि संघाते, हुडि वरणे (क्षीरत० १।१७२, १८०)।

ख—शौट्टादिषु **किटः**- किट खिट त्रासे, इट किट कटी गतौ (धातुवृत्ति पृष्ठ ७७,७९)।

ग—मव्यादिषु **खेलः**— केलृ खेलृ क्ष्वेलृ वेल्ल चलने, पेलृ खेलृ शेलृ षेलृ गतौ (द्र० धातुवृत्ति पृष्ठ १०५,१०६)[1]।

७—एवमेव धात्वर्थानामपाणिनीयत्वे समानार्थकेषु धातुषु सकृत् पठितस्य धातोरुत्तरसूत्र एवान्यार्थनिर्देशाय पुनः पाठो नोपपद्यते। यथा—

क—रघि लघि गत्यर्थाः, लघि भोजननिवृत्तावपि (क्षीरत० १। ७६, ७७)।

ख—गज गजि······शब्दार्थाः, गज मदने च (क्षीरत० १।१५६, १५७)।

ग—तय नय गतौ, तय रक्षणे च (क्षीरत० १।३१८, ३१९)।

एवमन्यत्रापि द्रष्टव्यम्।

धात्वर्थनिर्देशस्यापाणिनीयत्वे एकस्य धातोः समाने प्रघट्टके सकृत् प्रवचनमेव संभवति, न द्विः। अर्थनिर्देशाभावेऽर्थभेदात् पुनः पाठ इति हेतोरभावात्। यदि हि नाम केनचिद् अर्वाक्कालिकेनार्थविरहिते पाणिनीये पाठे धातुभिः सहार्थसंयोजनं कृतं स्यात्तर्हि एकस्य धातोर्द्वावर्थावेकस्मिन्नेव स्थाने निर्दिशेत्, न तु पाणिनिना सकृत् पठितस्य

---

१. अत्र पेलृ शेलृ फेलृ गतौ इति सूत्रव्याख्या द्रष्टव्या।

धातोरर्थभेदात् द्वयोः स्थानयोः पाठं कुर्यात् । अनेन ज्ञायते, यथा पाणिनिना सूत्रपाठे **बहुलं छन्दसि** इति समानवर्णानुपूर्विकं सूत्रमर्थभेदात् चतुर्दशसु स्थानेषु पठितं, तथैव धातुपाठेऽपि एक एव धातुरर्थभेदाद् द्विस्त्रिर्वा पठित इति ।

एतैः प्रमाणैर्धातूनामर्थनिर्देशः पाणिनीय इति विस्पष्टमुक्तं भवति ।

## धातुपाठस्य द्विधाप्रवचनम्

**उभयोर्वादयोर्निर्णयः**—धातुपाठस्थोऽर्थनिर्देशः पाणिनीय उतापाणिनीय इत्यत्रोभयथाऽपि प्रमाणानि निर्दिष्टानि । तत्र त्वेष निर्णयः—उभयथा ह्याचार्येण भगवता पाणिनिना धातुपाठस्य प्रवचनमकारि । तत्र केचन शिष्या अर्थनिर्देशं विना **भ्वेधस्पर्ध** इत्येवं धातून् एव संहितापाठेन प्रतिपादिताः, अपरे **भू सत्तायाम् उदात्त, एध वृद्धौ** इत्येवं सार्थान् । अत एव महाभाष्य उभयथा निर्देशा उपलभ्यन्ते ।

**लघुपाठो वृद्धपाठश्च**—तत्रार्थनिर्देशं विना धातूनां यः पाठः स लघुपाठो ज्ञेयः, सार्थपाठो वृद्धपाठः ।

**अष्टाध्याय्या द्विधापाठः**—यथा धातुपाठस्य द्विविधः पाठः पाणिनीयः, एवमष्टाध्याय्या अपि द्विविधः पाठ उपलभ्यते । एको वार्त्तिकभाष्याश्रयभूतः, अपरः काशिकादिवृत्तिकाराश्रितः । तत्र वार्त्तिकभाष्याश्रयभूतोऽष्टाध्याय्या लघुपाठः, काशिकाकाराश्रितो वृद्धपाठः । अष्टाध्याय्या द्विविधपाठविषयेऽस्माभिः 'संस्कृत व्याकरण शास्त्र का इतिहास' नाम्नि ग्रन्थे विस्तरेण प्रतिपादितम्[1], तत्तत्रैव द्रष्टव्यम्, विस्तरभिया नेह प्रपञ्च्यते । एवमेवान्येष्वपि निघण्टुनिरुक्त-स्मृति-नाटयशास्त्रादिषु द्विविधः पाठ उपलभ्यते ।

**वार्त्तिकपाठस्याश्रयः**—यथा वार्त्तिककारोऽष्टाध्याय्या लघुपाठमाश्रित्य वार्त्तिकं सूत्रयामास, तथैव धातुपाठस्यापि सोऽर्थरहितं लघुपाठमेवाशिश्रयदिति **परिमाणग्रहणं च** (१।३।१) इति तदीयवार्त्तिकात् पातञ्जलव्याख्यानाच्च सुवचनम् ।

**भट्टनागेशस्य भ्रान्तिः**—धातूनामर्थनिर्देशविषये महाभाष्ये द्विःप्रकार-

---

१. द्र० सं० व्या० शा० का इतिहास, भाग १, पृष्ठ २३७-२३९; सं० २०४१ ।

कान् निर्देशानुपलभ्य पातञ्जले वचसि कृतभूरिपरिश्रमः[१] प्रमाणितशब्दशास्त्रस्तत्र भवान् नागेशभट्टोऽपि भ्रान्तस्तत्रान्येषां का कथा । स हि '**कांश्चिन्नुमनुषक्तान् पठति—उबुन्दिर् निशामने स्कन्दिर् गतिशोषणयोः** इति भाष्यपाठं (१।३।७) व्याचक्षाण आह—

**नुमेति—एतद्भाष्यात् केषाञ्चिद् धातूनामर्थनिर्देशसहितोऽपि पाठ इति विज्ञायते ।** भाष्यप्रदीपोद्द्योत १।३।७॥

**किम् अर्थनिर्देशो भीमसेनीयः**—औत्तरकालिका अनेके पाणिनीया विद्वांसो मन्यते यत् पाणिनीये धातुपाठे ये धात्वर्था उपलभ्यन्ते ते केनचिद् भीमसेननामकेन वैयाकरणेन पठिताः । तथाहि—

१—नागेशभट्टः 'न चार्थपाठः परिच्छेदकः, तस्यापाणिनीयत्वात्' इति प्रदीपवचनं व्याचक्षाण आह—

**भीमसेनेनेत्यैतिह्यम्** । प्रदीपोद्द्योत १।३।१॥

२—भट्टोजिदीक्षितोऽप्याचष्टे—

क—**तितिक्षाग्रहणं ज्ञापकं भीमसेनादिकृतोऽर्थनिर्देश उदाहरणमात्रम्** । शब्दकौस्तुभ १।२।२०॥

ख —**न च या प्रापणे इत्याद्यर्थनिर्देशो नियामकः । तस्यापाणिनीयत्वात् । भीमसेनादयो हि अर्थं निर्दिदिक्षुरिति स्मर्यते ।**[२] श० कौ० १। ३।१॥

३—धातुप्रदीपकारो मैत्रेय आह—

**बहुशोऽमून् यथा भीमः प्रोक्तवांस्तद्वदागमात्** । धातुप्रदीप पृष्ठ १।

४—उमास्वातिभाष्यव्याख्याता सिद्धसेनगणी ( सं० ७०० ) प्रोवाच—

**भीमसेनात् परतोऽन्यैर्वैयाकरणैरर्थद्वयेऽपठितोऽपि [चिति] धातुः संज्ञाने विशुद्धौ च वर्तते ।** पृष्ठ २६४ ।

---

१. तत्र भवान् नागेशभट्टोऽष्टादशवारं गुरुमुखाद् भाष्यं शुश्रावेति वैयाकरणनिकाये प्रसिद्धिः ।

२. तुलनीयम्—न च प्रापणादिरर्थो नियामकोऽनार्षत्वात् । अभियुक्तैरुत्तरकालनिर्दिष्टत्वात् । पदमञ्जरी १।३।१ पृष्ठ २११ ।

पूर्वनिर्दिष्टैः प्राचीनैः सुदृढैश्च प्रमाणैर्धात्वर्थनिर्देशानां पाणिनीयत्वे सिद्धे नागेशादीनां वचनानि भ्रममूलान्येव। 'भीमसेनकृतोऽर्थनिर्देशः' इति नहि कस्मिश्चिदपि प्रामाणिके ग्रन्थ उपलभ्यते। अतः 'इत्यैतिह्यम्' 'इति स्मर्यते' इत्यादिनिर्देशोऽपि भ्रान्तिमूलक एव। तृतीयचतुर्थयोरुद्धरणयोस्तु नैतद् व्यक्तमुक्तं यद् भीमसेनोऽर्थनिर्देशक इति। ताभ्यां त्वेतावदेव ज्ञायते यदस्ति भीमसेनस्य पाणिनीयधातुपाठेन सह कश्चित् सम्बन्ध इति।

**भ्रान्तेः कारणम्**—भीमसेननामा कश्चिद् वैयाकरणो धातुपाठस्य वृत्तिकारो व्याख्याता वाऽऽसीद् इत्युपरिष्टाद् वक्ष्यते। सम्भाव्यतेऽनेनैव संबन्धेन पूर्वनिर्दिष्टा भ्रान्तिरुत्पन्ना स्यात्।

**अन्या भ्रान्तिः**—केचनेतिहासानभिज्ञा एनं भीमसेनं पाण्डुपुत्रं वृकोदरापरनामानं मन्यन्ते। तदतीवाविचारितरमणीयम्। भगवान् पाणिनिरेव भारतयुद्धात् सार्धद्विशतवर्षेभ्य उत्तरतो बभूव[1], तत्र पाणिनेः पूर्वभाविनो वृकोदरस्य पाणिनीयधातुपाठेऽर्थनिर्देशो न कथमपि संभाव्यते।

### लघुपाठस्योच्छेदः

यः खलु धातूनामर्थविरहितो भ्वेधस्पर्ध इत्येवंविधो लघुपाठः, स इदानीं नोपलभ्यते। मन्ये पठनपाठने सार्थस्य वृद्धपाठस्योपयोगाल्लघुपाठो नाशं गत इति।

### वृद्धस्य त्रिविधः पाठः

भारतीये वाङ्मये बहूनां ग्रन्थानां देशभेदेन विविधाः पाठा उपलभ्यन्ते। पाणिनीयव्याकरणेऽपि केषाञ्चिद् ग्रन्थानामियमेव दशोपलभ्यते। तथाहि—

**अष्टाध्याय्याः**—पाणिनेरष्टाध्याय्याः पौर्वः पश्चिमोत्तरदेशीयो दाक्षिणात्यश्चेत्येवं त्रयः पाठा उपलभ्यन्ते। काश्यां भवा काशिकावृत्तिर्यं पाठमाश्रयति स पूर्वदेशीयः। क्षीरस्वामी क्षीरतरङ्गिण्यां यं

---

१. पाश्चात्त्या विद्वांसो हि पाणिनिर् ईसवीयाब्दात् प्राक् चतुर्थशतया आषष्ठशतिं व्यवस्थापयन्ति। तदैतिह्यविरुद्धम्। द्र० 'सं० व्या० शास्त्र का इतिहास' प्रथम भाग, पृष्ठ २०५-२२१ (सं० २०४१)।

सूत्रपाठं निर्दिशति स पश्चिमोत्तरदेशीयः। दाक्षिणात्यस्तत्र भवान् कात्यायनो[1] यं सूत्रपाठमनुसृत्य वार्त्तिकपाठं प्रोवाच, स खलु दाक्षिणात्यः। एषु पूर्वदेशीयो वृद्धपाठः, अपरौ तु लघुपाठौ। इमौ च प्रायेण समानौ।

**पञ्चपाद्युणादेः** –पाणिनीयसम्प्रदायसंबद्धानां पञ्चपाद्युणादि-सूत्राणामपि त्रिविधः पाठो दृश्यते।[2] उज्ज्वलदत्तादीनां पौर्वः पाठः। क्षीरस्वामिना क्षीरतरङ्गिण्यामुद्धृतः पश्चिमोत्तरदेशीयः।[3] नारायणश्वेतवनवासिनोर्दाक्षिणात्यः। अत्रापि पौर्वो वृद्धपाठः, अपरो लघुपाठौ। अनयोरल्पीयानेव विशेषः।

**धातुपाठस्य** ––एवं सार्थस्य धातुपाठस्यापि देशभेदेन त्रयः पाठा दृश्यन्ते। तथाहि --

**पूर्वदेशीयः**—धातुपाठस्य प्राच्या व्याख्यातारो मैत्रेयप्रभृतयो यं पाठमाद्रियन्ते, स पौर्वः पाठो द्रष्टव्यः। न्यासकारोऽपि पौर्वपाठमेवोद्धरित।

**पश्चिमोत्तरदेशीयः** पश्चिमोत्तरदेशीयाः क्षीरस्वाम्यादयो[4] यं पाठसाश्रयन्ति, स पश्चिमोत्तरशीयः।

---

१. प्रियतद्धिताः दाक्षिणात्याः। महाभाष्य १।१, आ० १॥

२. पञ्चदाद्युणादिसूत्राणां त्रिधा विभागोऽस्माभिरेवोपज्ञातम्। एतद्विषये जैनेन्द्रमहावृत्तेरादौ 'जैनेन्द्र व्याकरण और उस का खिलपाठ' नामाऽस्मदीयो लेखो द्रष्टव्यः (द्र० भारतीय ज्ञानपीठ काशी संस्क०)। अयं पञ्चपादी पाठोऽपि कंचित् त्रिपादीपाठमनुरुणद्धि। एतच्च सर्व 'सं० व्या० शास्त्र का इतिहास' ग्रन्थस्य द्वितीयभागे विस्तरेण प्रपञ्चितम्। द्र० पृष्ठ २१५-२१६, सं० २०४१।

३. क्षीरतरङ्गिणीसम्पादनकाल एतद्रहस्याविदितत्वाद् यत्र पौर्वपाठात् पाठभेद उपलब्धस्तत्र दशपादीसूत्राणा निर्देशोऽकारि। दशपाद्या द्वौ पाठौ स्तः। तत्र अस्मत्संगृहीतहस्तलेखेषु कसंज्ञकस्य पाठः क्षीरस्वामिनः पाठेन सह प्रायेण संवदति। इतरहस्तलेखपाठाः पञ्चपाद्या दाक्षिणात्यपाठेन सह संगच्छन्ते।

४. तुलनोयम् —याष्टीकपारश्वाधिकौ यष्टिपरशुहेतिकौ (अमर २।८।७१) अत्र क्षीरस्वामी—'परशौ न दृष्टः, अतो यष्टिस्वाधिति-हेतिकौ' इति काश्मीराः पठन्ति। पृष्ठ १८६,१६०।

**दाक्षिणात्यः**—अयं पाठोऽस्माभिर्न साक्षादुपलब्धः । परन्तु दाक्षिणात्यः पाल्यकीर्तिराचार्यो यं पाणिनीयं धातुपाठमाश्रित्य स्वीयं धातुपाठं प्रोवाच, स दाक्षिणात्यपाठः सम्भाव्यते । पाल्यकीर्त्तेर्धातुपाठो न तथा पौर्वपाठेन संवदति यथा पश्चिमोत्तरपाठेन । तेनानुमीयते—यथा पञ्चपाद्युणादिसूत्राणां दाक्षिणात्यः पाठः पश्चिमोत्तरपाठेन विशेषतः संवदति, तथैव धातुपाठस्यापि दाक्षिणात्यपाठः पश्चिमोत्तरपाठेन प्रायः समान एव बभूवेति शक्य ऊहितुम् ।

**धातुपाठचित्रम्**—धातुपाठस्य ये विविधाः पाठाः पुरस्तादुपवर्णितास्तेषां सौकर्येण ज्ञानाय चित्रं चित्रीयते—




**साम्प्रतिकः पाठः**-सम्प्रति पाणिनीयैर्यो धातुपाठ आद्रियते स पूर्वनिर्दिष्टेभ्यस्त्रिविधेभ्योऽपि भिन्नः सायणपरिष्कृतो वर्तत इत्यनुपदं वक्ष्यामः ।

### पाठाव्यवस्था

यः खल्वर्थनिर्देशसहितो धातुपाठः सम्प्रत्युपलभ्यते, तत्र पाठानां महत्यव्यवस्था दृश्यते । तत्र केषांचिद् धातूनां क्रमविपर्यासः, केषाञ्चिदर्थविपर्ययः, केषाञ्चिदभावः, केषांचित् पुनराधिक्यमपि दृश्यते । नहि धातुपाठस्य कयोरपि द्वयोर्व्याख्यानयोः समानः पाठ उपलभ्यते । एषा चाव्यवस्था चिरकालादेव प्रसृता, उत्तरोत्तरं च वृद्धिं गता । तथाहि—

१—**जक्षित्यादयः षट्**······**नवार्थः परिगणनेन, आगणान्तमभ्यस्तसंज्ञा । इहापि तर्हि प्राप्नोति आङः शासु**······। महा० ६।१।६॥

एतेन भाष्यवचनेन स्पष्टं यद्भगवतः पतञ्जलेः काले **आङः शासु इच्छायाम्** इत्यस्य धातोः **वेवीङ् वेतिना तुल्ये** (क्षीरत० २।७८) इत्य-

नन्तरं क्वचित् पाठ आसीत् ।[1] भाष्यव्याख्यातुः कैयटस्य कालेऽपि आङः शासु-धातोः वेवीङ उत्तरं पाठो नासीदिति तदीयव्याख्यानाद् विज्ञायते[1] । एतेन कैयटात् प्रागेव केनचिद् विदुषा आङः शासु धातोः **आस उपवेशने** (क्षीरत० २।१४) इत्यनन्तरं पाठः परिवर्तितः स्यात् ।[2]

२—आगणान्तायामभ्यस्तसंज्ञायां येऽन्ये तत्र धातवस्तेभ्योऽप्यभ्यस्तकार्यं प्राप्नोति, तत् परिहरन्नाह भाष्यकारः—**षसिवशी छान्दसौ** ६।१।६॥

अत्राह कैयटः—**षस शस्ति स्वप्ने इति ये न पठन्ति, केवलं षस स्वप्ने वश कान्तौ इति तन्मतेनैतदुक्तम् ।**

एतेन कैयटकालेऽत्र द्विविधः पाठ आसीदिति स्पष्टम् । अयं द्विविधः पाठोऽद्याप्युपलभ्यते । क्षीरतरङ्गिण्यां **षस स्वप्ने वश कान्तौ** (२।८१,८२) इति पाठो दृश्यते, धातुप्रदीपे **षस सस्ति स्वप्ने वश कान्तौ** इति ।

३— क्षीरस्वामी धातुपाठागमस्य भ्रंशात् खिन्नमना आह—

**पाठेऽर्थे चागमभ्रंशान्महतामपि मोहतः,**
**न विद्मः किन्नु जह्मिः किं वात्रादध्महे वयम् ।**
चुरादिगणारम्भे ।

४—धातुवृत्तिकारः सायणो बहुत्रेत्थं लिलेख—

क—**यद्यपि मैत्रेयेणादितस्त्रय इदित उखिवखिमखयः, मूर्धन्यादिर्नखिरनिदित इखिश्च न पठ्यते, तथापि इतरानेकव्याख्यातॄणां प्रामाण्यादस्माभिः पठितः** । धातुवृत्ति पृष्ठ ५६ ।

ख—**इह केचित् धृञ् धारणे इति पठन्ति, सोऽनार्षः**............। **अस्माभिस्तु मैत्रेयाद्यनुरोधेन ञित्प्रकरणे हरतेरनन्तरं पठित्वाऽयमुदाहृतः**[3] । धातुवृत्ति पृष्ठ १८४ ।

ग—**गाङ् गतौ......'गापोष्टक्' इत्यत्र न्यासपदमञ्जर्योरयं धातु-**

१. महाभाष्यप्रदीपोऽत्र द्रष्टव्यः ।

२. भाष्यकारेणात्रान्यदीयधातुपाठमाश्रित्यायं दोषनिर्देशस्तत्परिहारश्चोक्तः स्यादित्यपि संभाव्यते । अस्माभिस्तु कैयटाद्यनुरोधेन पाठभ्रंशोऽयमुदाहृतः ।

३. काशीसंस्करणेऽत्र पाठोऽशुद्धो वर्तते ।

**रादादिक इति स्थितम् । शपि पाठे चास्य प्रयोजनं नास्ति । अस्माभिस्तु क्वाप्ययं पठितव्य इति मैत्रेयाद्यनुसारेणेह पठितः ।** धातुवृत्ति पृष्ठ १८५ ।

घ—**षच समवाये······एवं च न्यासकारादीनां बहूनामभिमतत्वादयं धातुरस्माभिः पठितः ।** धातुवृत्ति पृष्ठ २०२ ।

ङ—**यथा तु भाष्यवृत्तिन्यासपदमञ्जर्यादिषु तथाऽयं धातुर्नेति प्रतीयत इति जीर्यंतावुपपादितम् । आत्रेयमैत्रेयपुरुषकारादिषु दर्शनादिहास्माभिर्लिखितम् ।** धातुवृत्ति[1] ।

च—**एते पञ्चदश स्वामिकाश्यपानुसारेण लिख्यन्ते ।** धातुवृत्ति पृष्ठ २६३ ।

छ—**तत्राद्यो बृहिश्च मैत्रेयानुरोधेनास्माभिर्दण्डके पठितः ।** धातुवृत्ति पृष्ठ ३६३ ।

ज—**डुकृञ् करणे इति भूवादौ पठ्यते । ······अनेन प्रकारेणास्माभिर्धातुवृत्तावयं धातुर्निराकृतः[2] ।** ऋग्भाष्य १।८२।१।। इत्थमेव ऋग्भाष्य १।४२।७ अपि द्रष्टव्यम्

५—महाभाष्ये (१।३।१) पठ्यते—**ईडिः स्तुतिचोदनायाच्ञासु दृष्टः······ ।**

सम्प्रति धातुपाठे 'ईड स्तुतौ' इत्येवं पठ्यते, चोदनायाच्ञार्थौ नोपलभ्येते ।[3]

एभिः प्रमाणैर्हस्तामलकवद् विस्पष्टं भवति, यत्पाणिनीये धातुपाठे चिरकालात् पाठविपर्यासारम्भोऽभूत् । सायणेन तु धातुपाठे महत्या स्वच्छन्दतया पाठपरिवर्तनं परिवर्धनं च व्यधायि ।

**साम्प्रतिकः पाठः सायणपरिष्कृतः**—पाणिनीयवैयाकरणेषु यः

---

१. अयं पाठः चौखम्बासंस्करणे 'जॄ वयोहानौ' (पृष्ठ ३६४) इत्यत्र नोपलभ्यते । मैसूरसंस्करणे (भाग ४, पृष्ठ २६४) तु दृश्यते । मन्ये काशीसंस्करणे ग्रन्थपातः संजातः ।

२. अत्र 'धृञ् धारणे' इति धातु-व्याख्यानन्तरं धातुवृत्तौ (पृष्ठ १६३) पठितः 'अत्र केचित् कृञ् करणे धातुं पठन्ति·········इत्यादिपाठो द्रष्टव्यः ।

३. तन्त्रान्तरनिर्देशोऽप्यत्र भाष्ये संभाव्यते ।

सार्थो धातुपाठः सम्प्रत्युपयुज्यते, न स प्राचीनो आर्षपाठः, अपि तु विविधग्रन्थसाहाय्येन सायणद्वारा परिष्कृतः। सायणपरिष्कारस्तु पूर्वोदाहृतैस्तदीयवचनैः स्पष्ट एव। तदनु भट्टोजिदीक्षितेनापि तत्र स्वल्पः संस्कारो विहितः। एताभ्यामुभाभ्यां संस्कृतो धातुपाठ एवाद्यत्वे पाणिनीयत्वेनाभ्युपगम्यते वैयाकरणैः। तत्र सायणेन तन्त्रान्तरप्रसिद्धानां भूयिष्ठानां धातूनां प्रक्षेपात् स्वशास्त्रपठितानां च परित्यागान्नायं पाणिनीयशब्देन व्यवहर्तुं योग्यः। भूयसा व्यपदेश इति न्यायेन तादृशपाठस्य **सायणपाठः** इत्येव समीचीनाऽऽख्या स्यात्।

**भोटलिङ्गीयः पाठः**—संप्रति पाश्चात्त्यलेखकैस्तदुपजीविभिर्भारतीयैश्च यो धातुपाठः प्रामाणिकत्वेन स्वीक्रियते, स जर्मनदेशीयेन भोटलिङ्गेन संगृहीतः, न स पाणिनीयः। तेन हि तन्त्रान्तरप्रसिद्धानामपि यथासम्भवं सर्वेषां धातूनां तत्र विना विचारं संग्रहो व्यधायि। अतोऽयं पाठः सायणपाठादपि भ्रष्टतरः, प्रमाणविरहितश्च वर्तते।

## संहितापाठस्य प्रामाण्यम्

यथाऽष्टाध्याय्यां सूत्राणां संहितापाठस्यैव प्रामाण्यमभ्युपगम्यते पतञ्जलिप्रभृतिभिराचार्यैस्तथा धातुपाठेऽपि धातुसूत्राणां संहितापाठस्यैव प्रामाण्यमुररीक्रियते व्याख्याकारैः। अत एव यत्र तत्र धातुसूत्रविच्छेदे विवदन्ते वृत्तिकाराः तथाहि—

क—'रादाने' इति संहितापाठस्य 'रा दाने' 'रा आदाने' इत्युभयथा विच्छेदो दृश्यते। अत्रास्यैव (२।५०) धातोरधस्तात् १८६ तमे पृष्ठे प्रथमा टिप्पणी द्रष्टव्या।

ख—**तपऐश्वर्येवावृतुवरणे** इति संहितया दिवादौ पठ्यते। तत्र **वा** पदं **'तप ऐश्वर्ये'** इत्यनेन संबध्य भौवादिकस्य **तप संतापे** इत्यस्यैवैश्वर्ये दैवादिकत्वं विकल्प्यत इत्येके मन्यन्ते। **वा** पदमुत्तरसूत्रेण संवध्यत इत्यपरे। तत्रापि **वा** पदं भौवादिकस्यैव **वृतु वर्तने** धातोर्वरणेऽर्थे दैवादिकत्वं विभाषा विधीयत इत्येक आहुः, धातोरेकदेशे **वावृतु**-धातुरित्यन्ये[1]।

---

1. अत्र क्षीरतरङ्गिणी (४।४८, ४९), धातुप्रदीपः (पृष्ठ ९३) पुरुषकारः (पृष्ठ ९३) धातुवृत्तिश् (पृष्ठ २९३) च द्रष्टव्या।

**ग—पतगतौवापशानुपसर्गात्** इति संहितया चुरादौ पठ्यते। अत्राह क्षीरस्वामी—

**पतयति, पतति···। वा शब्दस्तूत्तरैकदेशार्थः, वावृतुवत्।** १०।२४६।

उत्तरसूत्रे पुनराहः—

**पशोऽनुपसर्गाद् वादन्तत्वमित्येके—पशयति पाशयति।** १०।२५०।

अयं व्याख्यानभेदो संहितापाठमाश्रित्यैव संभवति, नान्यथा। अत एव स्पष्टमाह सायणः—

**अत्र स्वामी संहितायां धातुपाठाद् वाशब्दमुत्तरधातुशेषं वष्टि इति।** धातुवृत्ति पृष्ठ ३९७॥

**उभयथा धातुसूत्रविच्छेदोऽपि पाणिनीयः** यः पूर्वत्र संहितापाठं प्रमाणीकृत्य विविधरूपः सूत्रविच्छेदः प्रदर्शितः, स पाणिनीय इति वैयाकरणानां मतम्। इदमेवोररीकृत्य **तपऐश्वर्यवावृतुवरणे** इत्यत्राह सायणः—

**अस्माकं तूभयमपि प्रमाणमाचार्येणोभयथा शिष्याणां प्रतिपादनात्।** धातुवृत्ति पृष्ठ २९३॥

अस्यायं भावः--धातुपाठं प्रवचता भगवता पाणिनिना केचन शिष्याः 'तप ऐश्वर्ये वा, वृतु वरणे' इत्येवं विच्छिद्य प्रतिपादिताः, अपरे 'तप ऐश्वर्ये, वावृतु वरणे' इत्येवम्[1]।

**धातुपाठः सस्वरः**

धातुपाठे पुरा उदात्त-उदात्तेद्-अनुदात्त-अनुदात्तेत्-स्वरितेतानां धातूनां पाठः सस्वर आसादिति धातुपाठ व्याख्यातॄणां वचनाद् विज्ञायते। तद्यथा--

**क—अत एव चुरादिभूतान् स्वरान्वितान्नाकरोत्।** क्षीरतरङ्गिणी (१०।१३१), पृष्ठ ३०६।

ख—सायणोऽप्याह—**तथा च काश्यपः——कार्याभावादेकश्रुत्या पठ्यन्त इति।** धातुवृत्ति पृष्ठ ३७७। आभ्यां प्रमाणाभ्यां ज्ञायते यदन्यत्र धातुपाठे धातवः सस्वराः पठ्यन्ते स्म।

---

१. तुलनीयम्—कुतः पुनरयं सन्देहः।? उभयथा ह्याचार्येण शिष्याः सूत्र प्रतिपादिताः। केचिद् 'आकडारादेका संज्ञा' इति केचित् 'प्राक्कडारात् परं कार्यम्' इति महाभाष्य १।४।१॥

## पूर्वधातुपाठानामनुवादः

धातुपाठः पाणिनेः प्रोक्तरूपो ग्रन्थो न तु कृतरूपः। प्रोक्तग्रन्थेषु प्रवक्ता पूर्वग्रन्थेभ्य एवोपयोगिनोंऽशान् शब्दतोऽर्थतश्च प्रायेणानुवदति, न तत्र सर्वा वर्णानुपूर्वी प्रवक्तुर्भवतीत्युक्तं पुरस्तात्। अतो यथा पाणिनिना प्रायेण प्राचामाचार्याणां सूत्राण्येवादाय स्वकीयं शब्दानुशासनं प्रोक्तम्, तथैव धातुपाठेऽपि स प्रायेण प्राचामाचार्याणां धातुसूत्राण्येवानूदितवान् इत्यत्र नास्ति लेशतोऽपि संदेहावसरः। तथाहि—

१—यथाऽष्टाध्याय्याः सूत्राणि ततः प्राचीनैरापिशल-काशकृत्स्नादिसूत्रैः संवदन्ति,[1] तथैव पाणिनेः धातुसूत्राणि धातूनामाधिक्ये क्रमवैपरीत्येऽपि तत्प्राचीनैः काशकृत्स्नधातुसूत्रैः प्रायेणाक्षरशः संवदन्ति।

२—यथाष्टाध्याय्यां यत्र तत्र केषांचित् प्राचीनानां श्लोकबद्धसूत्राणां सद्भाव उपलभ्यते,[2] तथैव पाणिनीये धातुपाठेऽपि केषांचित् छन्दोबद्धसूत्राणां सद्भावो दृश्यते। तथाहि—

क—भ्वादौ **चते चदे च याचने** इति पठ्यते (क्षीरत० १।६०८)। अत्र चकारो भिन्नक्रमः सन्नपि **रेटृ परिभाषणे** इति पूर्वसूत्रनिर्दिष्टं परिभाषणार्थं समुच्चिनोति। तथा सति अन्यत्रेवेहापि **याचने च** इति पाठेन भाव्यम्। परन्त्वत्र छन्दोऽनुरोधेन[3] चकारो भिन्नक्रमः पठितः[4]।

**चते चदे च याचने** इत्यत्र छन्दोऽनुरोधेन चकारो भिन्नक्रम इति तथ्यमविज्ञाय क्षीरस्वामिना पूर्वधातुसमुच्चयार्थ इत्युक्तम्। तेन **रेटृ** धातोर्याचनं पारिभाषणं चोभावर्थौ विज्ञायेते। व्याख्यानं त्विदमयुक्तम्, अन्यत्र क्वचिदपि पूर्वधातुसमुच्चयाय चकारस्यापाठात्।

---

१ द्रष्टव्यानि 'सं० व्या० शास्त्र का इतिहास' ग्रन्थस्य तत्तत्प्रकरणे निर्दिष्टानि प्राचां सूत्राणि।

२. द्र० 'सं० व्या० शास्त्र का इतिहास', भाग २ पृष्ठ ७५।

३. 'चते चदे च याचने' इत्यनुष्टुभ एकः पादः।

४. द्र० 'पक्षिमत्स्यमृगान् हन्ति, परिपन्थं च तिष्ठति' (अष्टा० ४।४।३५, ३६) इति सूत्रेऽनुष्टुभो द्वौ पादौ। उत्तरसूत्रे छन्दोऽनुरोधेन चकारो भिन्नक्रमः। द्र० तदीया काशिका-वृत्तिः।

हेमचन्द्राचार्यस्तु क्षीरस्वामिनो व्याख्यानमनुसृत्य **'रेटृग् परिभाषण-याचनयोः'** (१।८६७) इति सूत्रे विस्पष्टं याचनपदं पपाठ।

इदं चात्रावधेयम् - **चते चदे च याचने** इति क्षीरस्वामिनः पाठः। मैत्रेयश्चकारं न पपाठ। सायणः पुनर् **याचने च** इत्येवं विपर्यस्य सूत्रितवान्। तेन चते-चदे धात्वोः परिभाषणमप्यर्थं इति तस्याभिप्रायः।

ख—स्वादौ **ष्टिघ आस्कन्दने, उदात्तावनुदात्तेतौ, तिक तिग च, षघ हिंसायाम्** (क्षीरत० ५।२२-२५) इति पठ्यते। इह क्षीरस्वामि-मैत्रेयसायणादयः चकारात् स्कन्दनार्थं समुच्चिन्वन्ति। अत्र **उदात्तावनुदात्तेतौ** इति सूत्रव्यवधानेऽपि चकारः स्कन्दनार्थं समुच्चेतुं कथं समर्थ इति नोक्तं वृत्तिकारैः। काशकृत्स्नकातन्त्रहैमशाकटायनधातु-पाठेषु तिक-तिग-धात्वोर्हिंसार्थत्वमेवोक्तम्, न स्कन्दनार्थत्वम्। अपि च **षघ हिंसायाम्** (क्षीरत० ५।२५) इत्यत्राह क्षीरस्वामी—**तिक तिघ चषघ हिंसायाम् इत्येके—चषघ्नोति** इति। एतेन ज्ञायते तिक-तिघ-धात्वोरुपरिष्टात् पठितश्चकारः केषांचिन्मत उत्तरधातोराद्यवयवः। वस्तुतोऽत्रापि **ष्टिघ आस्कन्दने तिक, तिग च षघ हिंसायाम्** इत्यनुष्टुभो द्वे चरणे कस्यचित् प्राचीनस्य छन्दोबद्धधातुपाठस्यैव पठिते। तेन चकारोऽत्र भिन्नक्रमश्छन्दोनुरोधेन पठितः, न स पूर्वधात्वर्थानुकर्षणार्थो नाप्युत्तरधातोराद्यवयवार्थं इति।[1] तस्माच्चकारस्योभयथाऽपि व्याख्यानमसमञ्जसम्, तिकतिगधात्वोर्हिंसैवार्थः।

ग—चुरादौ **उपसर्गाच्चदैर्घ्ये** (१०।२२९) इति पठ्यते। अत्र क्षीरस्वामी **'चकारं भिन्नक्रममाहुः'** इति वदन् **'उपसर्गाद् दैर्घ्ये च'** इति पाठेन भाव्यमिति ज्ञापयति। वयन्त्वत्रापि छन्दोवशादेव चकारो भिन्नक्रमः पठ्यत इत्यनुमिनुमः।[2]

---

१. तुलनीयम्—'जुड प्रेरणवाची शुठालस्ये गज मार्ज च। शब्दार्थे पचि विस्तारे' इति पुरुषकारोद्धृते (पृष्ठ ५०) श्लोकधातुपाठांशे 'गज मार्ज च' इत्यत्र पठितेन चकारेण।

२. तुलनीयम्—'यत उपसंस्कारनिकारार्थः स निरश्च धान्यधनवाची' इति पुरुषकारोद्धृते (पृष्ठ ७६) श्लोकधातुपाठांशे 'संनिरश्च' इत्यत्रोपसर्गादुपरिष्टात् पठितेन चकारेण।

घ– चुरादौ धातवः पठ्यन्ते—**रच प्रतियत्ने, कल गतौ संख्याने च' चह कल्कने, मह पूजायाम्, शार कृप श्रथ दौर्बल्ये** (क्षीर० १०। २५२-२५६।।

एते धातव इत्थं पठनीयाः—

**रच प्रतियत्ने कल, गतौ संख्याने च चह।**
**कल्कने मह पूजायाम्, शार कृप श्रथ दौर्बल्ये।।**

इत्थं पाठे भुरिगनुष्टुबयं सम्पद्यते।

एतैः प्रमाणैर्विस्पष्टं यत् पाणिनेः प्राक् कश्चिद् धातुपाठश्छन्दो बद्ध आसीत्। तस्यैव केचनांशा इह पाणिनीये धातुपाठेऽवशिष्टा दृश्यन्ते।

३—पाणिनीये धातुपाठे बहुत्र प्रकरणविरोध उपलभ्यते। तथाहि—

क—चवर्गान्तेषूदात्तेषु परस्मैपदिषु इकारान्तोऽनुदात्तः **क्षि**-धातुः पठ्यते। क्षीरत० १।१४६।।

ख—उदात्तेष्वन्तःस्थान्तेषु अनुदात्त इकारान्तो **जि**-धातु। क्षीरत० १।३७४।।

ग—ऊष्मान्तेषु परस्मैपदिषु वान्तः **कव**-धातुः। क्षीरत० १।४७६।

अयं प्रकरणविरोधः पूर्वाचार्याणामनुरोधत इति पूर्वे वृत्तिकारा आहुः। एतदेवाभिप्रेत्य **क्षि क्षये** (१।१४६) इत्यत्र **वक्ष्यति च** इत्युक्त्वा क्षीरस्वामी कस्यचित् प्राचीनस्य धातुगणव्याख्यातुः श्लोकमुपन्यस्यति—

**पाठमध्येऽनुदात्तानामुदात्तः कथितः क्वचित्।**
**अनुदात्तोऽप्युदात्तानां पूर्वेषामनुरोधतः** ।। क्षीरत० १।१४६।

अत्र इदमप्यवधेयम्—काशकृत्स्ने धातुपाठेऽप्येवमेव चवर्गान्तेषूदात्तेषु मध्ये इकारान्तस्यानुदात्तस्य क्षि-धातोः पाठ उपलभ्यते।

एतेनापि पाणिनीयधातुपाठस्य प्राचां धातुपाठानामनुवादकत्वं विस्पष्टम्।

**श्लोकधातुपाठः**

पाणिनेः प्राक् कस्यचिच्छ्लोकबद्धो धातुपाठ आसीदिति सम्य-

गुपपादितं पुरस्तात् । अर्वाचीनेष्वपि केषुचिद् ग्रन्थेषु श्लोकधातु-पाठस्य केचनांशा उद्धृता उपलभ्यन्ते । तथाहि—

१—**तथा च 'पूरी आध्यायने ष्वदास्वाद' इति श्लोकधातुपाठः ।** पुरुषकार पृष्ठ ४४ ।

२—यत्तु **श्लोकधातुपाठे 'फक्क नीचैर्गतौ तक्क मर्षणे बुक्क भाषणे' इति द्विककारस्तकिः ।** पुरुषकार पृ० ४७ ।

३—**तथा च श्लोकधातुपाठः—'जुड प्रेरणवाची शुठालस्ये गज मार्ज च । शब्दार्थे पचि विस्तारे' इति ।** पुरुषकार पृ० ५० ।

४—**तथा च—'गुध रुषि मृद संक्षोदे मृड सुखनार्थे च कुन्थ संश्लेषे' इति श्लोकधातुपाठः ।** पुरुषकार पृष्ठ ७६ ।

५—**श्लोकधातुपाठः—'यत उपसंस्कारनिकारार्थः स निरश्च धान्यधनवाची' इति ।** पुरुषकार पृष्ठ ७६ ।

६—**'विश मृश णुद प्रवेशामर्शक्षेपेषु षद्लृ विशरणार्थः' इति च श्लोकधातुपाठः ।** पुरुषकार पृष्ठ ८३।।

७—**तथा च—'तव[1] पत ऐश्वर्ये वावृतु वर्तने कासृ दीप्त्यर्थे' इति श्लोकधातुकारः[2] ।** देवराजीया निघण्टुव्याख्या २।११।२।।

एतैः प्रमाणैः श्लोकबद्धः कश्चिद् धातुपाठः पुरुषकारकर्तुर्लीलाशुक-मुनेर्देवराजस्य च काले विद्यमान आसीदिति सुव्यक्तम् । अयं कस्य कृतिरासीदिति न शक्यते वक्तुम् ।

### धातुपाठसंबद्धा अन्ये ग्रन्थाः

धातुपाठसम्बद्धा अन्येऽपि केचन ग्रन्था विद्यन्ते । तद्यथा—

१—**आख्यातनिघण्टुः**—अयं ग्रन्थः पुरुषकारे षण्णवतितमका-रिकाव्याख्यान उद्ध्रियते । पुरुषकारविरचयितुः कृष्णलीलाशुकमुनेः

---

१. अत्र 'तप' इति युक्तः पाठः स्यात् ।

२. अयं पाठः सत्यव्रतसामश्रमिसम्पादिते निघण्टुव्याख्याने त्रुटितो वर्तते । अस्माभिरय पाठोऽस्मन्मित्रेण श्रीपण्डितशुचिव्रतशास्त्रिणा सम्पादितान्निघण्टु-व्याख्यानात् सगृहीतः । शास्त्रिमहोदयैरय महत्त्वपूर्णो ग्रन्थोऽनेकहस्तलेखाना साहाय्येन महता परिश्रमेण सम्पादितः । नेदानी (सं० २०४२) यावत् प्रकाश्य गतः ।

कालः विक्रमस्य त्रयोदशशताब्द्या उत्तरार्धं इत्यस्माभिः स्वीये 'सं० व्या० शास्त्र का इतिहास' नाम्नि ग्रन्थे (भाग १, पृष्ठ ६९०-६९१; सं० २०४१) सूपपादितः। आख्यातनिघण्टुस्तमात् प्राचीन इति सुव्यक्तम्। अस्य ग्रन्थकर्तुर्नामादि किमपि न ज्ञायते।

२–**आख्यातचन्द्रिका**—अस्य कर्ता भट्टमल्लो वर्तते। अयं भट्टमल्लो मल्लिनाथेन नैषधव्याख्याने (४।८४) स्मर्यते। अतः भट्टमल्लो विक्रमस्य चतुर्दशशताब्द्याः पौर्वकालिक इत्येव शक्यते वक्तुम्[1]।

आख्यातचन्द्रिका सम्पादकेन वेङ्कटरङ्गनाथस्वामिना सर्वानन्दीयेऽमरटीकासर्वस्वे आख्यातचन्द्रिकाया उद्धरणमस्तीति प्रतिपादितम् (अस्माभिस्तन्न क्वचिदुपलब्धम्)। यदि रङ्गनाथस्वामिनो वचनं तथ्यं चेत् भट्टमल्लः १२२५ वैक्रमाब्दात् प्राचीन इति निश्चितं शक्यते वक्तुम्।

एको मल्लः क्षीरस्वामिना **विट आक्रोशे** (क्षीरत० १।२१६) इति धातुसूत्रव्याख्याने स्मृतः। तथाहि—

**अत एव विट शब्दे पिट आक्रोशे इति मल्लः पर्यट्टकान्तरे विभङ्ग्याह।**

अयं मल्ल आख्यातचन्द्रिकाया कर्तुर्भट्टमल्लाद् भिन्न इति '**पर्यट्टकान्तरे विभङ्ग्याह**' वचनात् प्रतीयते। सम्भाव्यतेऽयं मल्लः कश्चिद् धातुपाठव्याख्याता स्यात्।

वेङ्कटरङ्गनाथस्वामिनाऽऽख्यातचन्द्रिकाया भूमिकायाम् आख्यातानां समाम्नायरूपेणार्थबोधका इमे (३—९) ग्रन्था निर्दिष्टाः—

३—**कविरहस्यम्** हलायुधस्य (सं० १२३०-१२६०)।

४—**क्रियाकलापः** विद्यानन्दस्य।

५—**क्रियापर्यायदीपिका** वीरपाण्डचस्य।

६—**क्रियाकोशः** रामचन्द्रस्य।

७—**प्रयुक्ताख्यातमञ्जरी** कविसारङ्गस्य।

८—**कियारत्नसमुच्चयः** दशबलस्य वरदराजस्य वा।

---

१. द्र० 'सं० व्या० शा० का इतिहास' भाग २, पृष्ठ ८०; सं० २०४१।

**१०—धातुसंग्रहः**—अयं ग्रन्थो मालतीमाधवटीकाकारेण जगद्धरेण १।१७ व्याख्याने स्मृतः। तथाहि—

**अभिसन्धिर्वञ्चनार्थं इति धातुसंग्रहः।**

जगद्धरस्य १३५० वैक्रमाब्दः काल इत्यैतिहासिकाः संगिरन्ते। तस्मात् प्राक्तनोऽयं धातुसंग्रह इति स्पष्टम्। ग्रन्थकर्तुर्नामादिकं किमपि न ज्ञायते।

**११–ओष्ठ्यकारिकाः**—अयं षट्कारिकात्मको लघुग्रन्थः। अस्मिन् पवर्गीयबकारवतां धातूनां संग्रहो वर्तते। अत्र न सर्वे बकारवन्तो धातवः संकलिताः, तेभ्योऽन्येषामपि बकारवतां धातूनामुपलम्भात्[1]। इमाः षट्कारिकाः सर्वानन्देनामरटीकासर्वस्व उद्धृताः[2]। अस्य-कर्तुर्नामादिकं न विज्ञायते। इतोऽग्रे धातुपाठव्याख्यातॄणां विषये वक्ष्यते।

## धातुवृत्तिकाराः

भगवतः पाणिनेः प्रवचनादारभ्याद्य यावदनेकैराचार्यैर्विद्वद्भिश्च धातुपाठस्य व्याख्यानानि व्यरचिषतेत्यत्र नास्ति सन्देहः। तेषु केषांचिदेव व्याख्यानान्युपलभ्यन्ते, बहूनां नामान्यपि न ज्ञायन्ते। तत्र येषां धातुवृत्तिकाराणां नामानि विज्ञायन्ते, व्याख्यानानि वोपलभ्यन्ते, त उपरिष्टाद् वर्ण्यन्ते।

### १—पाणिनिः

भगवता पाणिनिना शब्दानुशासनं प्रवचता तस्य काचिद् वृत्तिरपि शिष्येभ्यः प्रतिपादिता इत्यस्माभिः स्वीये 'संस्कृत व्याकरण शास्त्र का इतिहास' नाम्नि ग्रन्थेऽनेकैः सुदृढैः प्रमाणैर्व्यक्तीकृतम्।[3] तद्वदेव पाणिनिना स्वीयधातुपाठं प्रवचता तस्यापि काचिद् वृत्तिः शिष्येभ्यो-

१. द्र० अमरटीकासर्वस्व, भाग १ पृष्ठ ८—अर्ब पर्ब बर्ब कर्ब खर्ब गर्ब मर्ब सर्ब चर्ब गतौ इत्ययमपि भीमसेनेन पवर्गान्तप्रकरणे पठितः। अत्र अर्व पर्व इत्यन्तस्थपाठोऽमरटीकासर्वस्वे मुद्रितः।

२. अमरटीकासर्वस्व, भाग १, पृष्ठ ७।

३. द्रष्टव्यम्—भाग १, पृष्ठ ४७६—४८१, सं० २०४१।

ऽवश्यं प्रतिपादिता स्यादित्यनुमानं स्वत एवोदेति । अपि चास्योपोद्बलकानि कानिचित् प्रमाणान्यप्युपलभ्यन्ते । तद्यथा—

१—यथाहि पाणिनिनाऽष्टाध्यायीं प्रवचता किञ्चित् सूत्रं केभ्यः शिष्येभ्यः कथंचित्, प्रतिपादितम्[1], अपरेभ्योऽन्यथा वा कस्यचित्, सूत्रस्य केभ्यश्छात्रेभ्य काचिद् वृत्तिः प्रतिपादिता, अन्येभ्योऽपरा ।[2] तथैव धातुपाठं प्रवचतापि भगवता केभ्योऽन्तेवासिभ्यः **'तप ऐश्वर्ये वा, वृतु वर्तने'** इत्येवं सूत्रविच्छेदः प्रदर्शितः, अपरेभ्यः **तप ऐश्वर्ये, वावृतु वर्तने**' इति । एतदेवाभिप्रेत्य धातुवृत्तौ सायणाचार्य आह—

**अस्माकं तूभयमपि प्रमाणमुभयथा शिष्याणां प्रतिपादनात्** । पृष्ठ २९३ ।

२—उदात्तेषु चान्तेषु धातुषु अनुदात्तस्येकारान्तस्य क्षिधातोः पाठकारणं निदर्शयन् क्षीरस्वाम्याह—

**वक्ष्यति च—**

**पाठमध्येऽनुदात्तानामुदात्तः कथितः क्वचित् ।**
**अनुदात्तोऽप्युदात्तानां पूर्वेषामनुरोधतः** । क्षीरत० १।१४६॥

अत्र 'वक्ष्यति' क्रियायाः कः कर्तेति न व्यक्तीकृतं क्षीरस्वामिना वयं तु क्षीरस्वामिनो वाक्यविन्यासप्रकारेणानुमिनुमो यद् भगवता पाणिनिना धातुपाठं प्रवचता या तदीया वृत्तिः शिष्येभ्यः प्रतिपादिता, तत्रैवायं श्लोकोऽपि भगवतोपदिष्ट इति ।

### २—सुनागः

महाभाष्येऽसकृत् सौनागवार्त्तिकान्युपलभ्यन्ते ।[3] हरदत्तवचना-

---

१. उभयथा ह्याचार्येण शिष्याः सूत्रं प्रतिपादिताः । केचिदाकडारादेका संज्ञा, केचित् प्राक्कडारात् परं कार्यम् । महा० १।४।१॥ शुङ्गाशब्द स्त्रीलिङ्गमन्ये पठन्ति, ततो ढकं प्रत्युदाहरन्ति—शौङ्गेय इति । द्वयमपि चैतत् प्रमाणमुभयथा सूत्रप्रणयनात् । काशिका ४।१।११८ ॥

२. उभयथा ह्याचार्येण शिष्याः प्रतिपादिताः, केचिद् वाक्यस्य [संप्रसारणसंज्ञां], केचिद् वर्णस्य । भर्तृहरिकृता महाभाष्यदीपिका, पृष्ठ २७०, पूनासं०। सूत्रार्थद्वयमपि चैतदाचार्येण शिष्याः प्रतिपादिताः । काशिका ५।१।५० ।

३. महाभाष्य २।२।१८॥ ३।२।५६॥ ४।१।७४,८७॥ ४।३।१५६॥ ६।१।६५॥

नुसार सुनागनामाऽऽचार्यं एषां प्रवक्ता।[1] अयं च भगवतः कात्यायनादर्वाचीन इति कैयटव्याख्यानादवसीयते।[2]

वार्त्तिकप्रवक्त्रा सुनागेन पाणिनीयधातुपाठस्यापि किमपि व्याख्यानमुक्तमिति कतिपयैः प्रमाणैरवगम्यते। तथाहि —

१—विभाषा भावादिकर्मणोः (अष्टा० ७।२।१७) इत्यत्र वृत्तिकृद् वामनः पठति—

**सौनागाः कर्मणि निष्ठायां शकेरिटमिच्छन्ति विकल्पेन, अस्यतेर्भावे।**

२—इदमेव सौनागमतं धातुवृत्तावसकृन्निर्दिशति सायणः।[3]

३—क्षीरतरङ्गिण्या आदावन्ते च धात्वर्थसम्बन्धि सौनागमतमित्थमुद्धरति क्षीरस्वामी—

**धातूनामर्थनिर्देशोऽयं निदर्शनार्थं इति सौनागाः। यदाहुः—**

**क्रियावाचित्वमाख्यातुमेकोऽत्रार्थः प्रदर्शितः।**
**प्रयोगतोऽनुमन्तव्या अनेकार्था हि धातवः॥[4]**

वामनक्षीरस्वामिभ्यामुद्धृते मते धातुपाठविषयके इति तु स्पष्टमेव। अनयोः प्रतिपादनं भगवता सुनागेन क्व कृतमिति नोक्तमुद्धर्तृभ्याम्। तत्र प्रथमं मतं तदीयवार्त्तिकपाठेऽपि कथंचित् संभवति, नान्यत्र। अतोऽनुमीयते तत्र भगवता सुनागेन पाणिनीयधातुपाठस्य किमपि व्याख्यानं विरचितमिति।

---

१. सुनागस्याचार्यस्य शिष्याः सौनागाः। पदमञ्जरी भाग २, पृ० ७६१।

२. कात्यायनाभिप्रायमेव प्रदर्शयितुं सौनागैरतिविस्तरेण पठितमित्यर्थः। भाष्यप्रदीप २।२।१८॥

३. शक धातु, पृष्ठ ३०१; अस धातु, पृष्ठ ३०७; शक्लृ धातु, पृष्ठ ३१६॥

४. क्षीरत० पृष्ठ ४, ३३६। चुरादौ (पृष्ठ ३३६) द्वितीयं चरणम् 'एकैकोऽर्थो निदर्शितः' इत्येवं पठ्यते, तृतीयचरणं 'प्रयोगतोऽनुमातव्या' इति। श्लोकोऽयं चान्द्रधातुपाठान्तेऽपि पठ्यते। तत्र तृतीयचरणे 'प्रयोगतोऽनुगन्तव्या' इति पाठः।

**३—भीमसेनः**

कस्यचिद् भीमसेनस्य पाणिनीयधातुपाठेन सह कश्चिन्महत्त्वपूर्णः संबन्ध इति विविधग्रन्थकारवचनैः सुस्पष्टं विज्ञायते। तथाहि—

१—१४६६तमे वैक्रमाब्दे क्रियारत्नसमुच्चयस्य लेखकः **श्रीगणरत्नसूरिराह**—

**अर्चि, अर्दि, तर्पि, बर्दि, मृषयः परस्मैपदिन इति भीमसेनीयाः।** क्रियारत्न० पृष्ठ २८४।

२—**सर्वानन्दः** (सं० १२१५) स्वीयेऽमरटीकासर्वस्वे १।१।७ व्याख्यान एवमाह—

**तर्ब पर्ब बर्ब कर्ब खर्ब गर्ब मर्ब सर्ब चर्ब गतौ इत्ययमपि भूवादौ भीमसेनेन पवर्गान्तप्रकरणे पठितः।**[1] भाग १, पृष्ठ ८।

४—सर्वानन्दात् प्राचीनो **मैत्रेयो** (सं० ११६५) धातुप्रदीपादौ भीमं स्मरति—

**बहुशोऽमून् यथा भीमः प्रोक्तवांस्तद्वदागमात्।**

४—मैत्रेयादपि बहुप्राचीन उमास्वातिभाष्यव्याख्याता **सिद्धसेनगणी** लिलेख—

**भीमसेनात् परतोऽन्यैर्वैयाकरणैरर्थद्वयेऽपठितोऽपि**·········। पृष्ठ २६४।

५—भट्टोजिदीक्षितनागेशभट्टादयोऽपि धात्वर्थनिर्देशो भीमसेनीय इत्याचक्षत इत्युक्तं पुरस्तात् (पृष्ठ १४)।

६—लवपुरस्थदयानन्दमहाविद्यालयान्तर्गते लालचन्दपुस्तकालये भीमसेनीयधातुपाठस्यैको हस्तलेख आसीत्।[2]

एतैः प्रमाणैर्भीमसेनस्य धातुपाठेन सह आसीत् कश्चित् सम्बन्ध इति सुव्यक्तं भवति।

---

१. टीकासर्वस्वे इमे धातवः अर्व पर्व इत्येवमन्तस्थान्ताः मुद्रिता। तत्प्रामादिकं मुद्रणमिति सर्वानन्दवचनादेव स्पष्टम्।

२. अस्यैका प्रतिलिपिरस्मत्सकाशेऽपि विद्यते। लालचन्दपुस्तकालयस्था ग्रन्थराशिः सम्प्रति होशियारपुरस्थे साध्वाश्रमे वर्तते।

**कालः**—भीमसेनोऽयं कदा कं च प्रदेशं स्वजनुषालंचकारेति न कथमपि विज्ञायते। भीमसेनस्य यावन्तो निर्देशा विविधग्रन्थेषूपलभ्यन्ते, तेषु सिद्धसेनगणिनो निर्देशः प्राचीनतमः। सिद्धसेनगणिनश्च वैक्रमाब्दस्य सप्तमी शती काल इत्येक ऐतिह्यविद आतिष्ठन्ते। भीमसेनश्चेतोऽपि भूयान् प्राचीनः। इयं हि तस्यावरासीमा। केचनेमं पाण्डुपुत्रं वृकोदरं मन्यन्ते। तदयुक्तमिति पुरा प्रदिष्टम् (पृष्ठ १५)।

**धातुपाठेनः सह संबन्धः**—भीमसेनस्य ये निर्देशाः प्राचीनग्रन्थेषूपलभ्यन्ते, तैरेतावत् स्पष्टमवगम्यते यदस्ति भीमसेनस्य पाणिनीयधातुपाठेन सह कश्चिन्महीयान् संबन्धः। भीमसेननाम्ना निर्दिष्टा यत्र तत्र संग्रहालयेषूपलभ्यमानाः केचन धातुपाठकोशा अप्यस्य संबन्धस्य प्रज्ञापकाः। परं धातुपाठेन सह तस्य कीदृशः सम्बन्ध इत्यत्र विवदन्ते वैयाकरणाः। पाणिनीयधातूनामर्थनिर्देशको भीमसेन इत्येके ग्रन्थकारा आहुः। मतमिदं प्रमाणविरहितमिति पूर्वस्माभिः सम्यगुपपादितम् (पृष्ठ ९-१३)।

**धातुवृत्तिकारः**—वयं त्वनुमिनुमो यदयं भीमसेनः पाणिनीयधातुपाठस्य वृत्तिकार इति। अस्यानुमानस्योपोद्बलके एते प्रमाणे स्तः—

१—कविकल्पद्रुमटीकायां दुर्गादास आह—

**स्तम्भ इह क्रियानिरोध इति भीमसेनः**। पृष्ठ १७२।

**स्तम्भु स्तम्भे इति** सौत्रो धातुः। न त्वयं क्वचिद् धातुपाठे पठितः। धातुवृत्तिकाराः प्रसङ्गात् सौत्रानपि धातून् स्ववृत्तिषु व्याख्यन्ति। अतोऽवगम्यते, स्तम्भु-धातोर्यः स्तम्भार्थस्तस्य क्रियानिरोधरूपं व्याख्यानं भीमसेनेन स्वधातुवृत्तावेव विवृतं स्यात्, नह्यन्यत्र व्याख्यानमिदं सम्भवति।

२—दैवव्याख्याता कृष्णलीलाशुकमुनिराह—

**क्षप प्रेरणे। भीमसेनेन कथादिष्वपठितोऽप्ययं 'बहुलमेतन्निदर्शनम्' इत्युदाहरणत्वेन धातुवृत्तौ पठ्यते**। पृष्ठ ९५।

अयमेव पाठः स्वल्पभेदेन देवराजीये निघण्टुव्याख्यानेऽपि द्विरुपलभ्यते। पृष्ठ ४३, १०९।

यदि दैवव्याख्याने 'धातुवृत्तौ पठ्यते' इत्यस्य कर्त्ता भीमसेन एवा-

भिप्रेतः स्यात् (अन्यस्यानिर्देशात्), तर्हि भीमसेनेन काचिद् धातुवृत्तिर्विरचिता इति स्पष्टमेव। यद्यत्र 'धातुवृत्तौ पठ्यते' इत्यस्यान्य एव कर्त्ताऽभिप्रेतः स्यात्तदापि पूर्वप्रमाणेन भीमसेनस्य धातुवृत्तिकारत्वं स्पष्टमेव।

**४– अज्ञातनामा**

कस्यचिदज्ञातनाम्नो वृत्तिकारस्य तदीयाया धातुवृत्तेश्च पाठाः क्षीरतरङ्गिणीपुरुषकारनिघण्टुव्याख्यानादिषूपलभ्यन्ते। तथाहि—

१—क्षीरस्वामी **श्रथि शैथिल्ये** इति धातुसूत्रव्याख्याने कंचिद् वृत्तिकारं सस्मार।

**शश्रन्थे······इदित्त्वादनुनासिकलोपाभावः। श्रेथे इति तूदाहरन् वृत्तिकृद् भ्रान्तः।** क्षीरत० १।२९॥

**वृत्तिकृद् धातुवृत्तिकारः**—क्षीरस्वामिना स्मृतो वृत्तिकृद् धातुवृत्तिकारो द्रष्टव्यः। तदुक्तं क्षीरपाठमुद्धरता सायणेन—

**अत्र तरङ्गिणी—इदित्त्वादनुनासिकलोपाभावात् श्रेथे ग्रेथे इत्युदाहरन् वृत्तिकारो भ्रान्त इति। अत्र वृत्तिकारो धातुवृत्तिकृद् उच्यते।** धातुवृत्ति पृष्ठ ४६।

२—पूर्व भीमसेनप्रसङ्ग उदाहृते पुरुषकारवचने काचिद् धातुवृत्तिः स्मर्यते।

३—देवराजः स्वीये निघण्टुव्याख्याने कांचिद् धातुवृत्ति निर्दिशति। तथाहि—

**क—अञ्जू व्यक्तिम्रक्षणकान्तिगतिषु। म्रक्षणं सेचनमिति तद्वृत्ति** ।१।१।३॥

**ख—क्षप प्रेरणे क्षपि क्षान्त्याम् इति कथादिषु [अ]पठितोऽपि बहुलमेतन्निदर्शनमित्यस्योदाहरणत्वेन धातुवृत्तौ पठ्यते** । १।७।२॥ २।१२।३७॥

देवराजस्य द्वितीयः पाठो भीमसेनप्रसङ्ग उद्धृतेन पुरुषकारपाठेन सह संवदति (द्र० पूर्व पृष्ठ ३१ पं० २७-२८)। तेनैतदपि सम्भवति, यद्देवराजः पुरुषकारादेवेमं पाठमुदाजहारेति।

यद्युपरितनेषु प्रमाणेषु स्मृतो धातुवृत्तिकारो धातुवृत्तिश्च भीमसेनस्तदीया धातुवृत्तिर्वा न स्यात्तर्हि क्षीरस्वामिनः पूर्ववर्तिना केनचिद् विदुषा काचिद् धातुवृत्तिर्विहिता इति निःसंशयं शक्यते वक्तुम् ।

### ५—क्षीरस्वामी (११००—११५० वि०)

क्षीरस्वामिनाम्ना शब्दशास्त्रनिष्णातेन क्षीरतरङ्गिण्यभिधेया एका धातुवृत्तिर्विरचिता। इयमुपलभ्यमानासु सर्वासु धातुवृत्तिषु प्राचीनतमा महत्त्वपूर्णा च वर्तते। एतस्या एकं संस्करणं जर्मनविदुषा लिबिशेन १९८७ वैक्रमाब्दे (सन् १९३०) रोमनाक्षरेषु प्रकाशितम् ।

#### परिचयः

**वंशः**—क्षीरस्वामिना क्षीरतरङ्गिण्याममरकोशोद्घाटने च न कश्चित् स्वकीयः परिचयो वृत्तान्तो वा लिखितः। अतोऽस्य विदुषो वृत्तान्तोऽन्धकूप एव निपतितो वर्तते।

क्षीरतरङ्गिण्या भ्वाद्यदाद्योरन्ते '**भट्टेश्वरस्वामिपुत्रक्षीरस्वाम्युत्प्रेक्षितायां**......' इति पाठदर्शनात् क्षीरस्वामिनः पितुर्नाम **भट्ट ईश्वरस्वामी** आसीदिति विज्ञायते।

**शाखा**—क्षीरस्वामिना यज-धातुव्याख्याने (१।७२६) **यजुः काठकम्** इत्युक्तम्। एकशतभेदभिन्ने यजुषि काठकस्यैव नामोल्लेखः क्षीरस्वामिनस्तच्छाखाध्येतृत्वं सूचयति।

**देशः**—क्षीरस्वामी कं देशं स्वजनुषालंचकारेति न सम्यग् विज्ञायते। क्षीरतरङ्गिण्या अमरव्याख्यानस्य चादौ वाग्देव्या प्रशंसनात्, ग्रन्थान्ते दृश्यमानाभ्यां श्लोकाभ्यां[1] चास्य कश्मीरजत्वं प्रतीयते। क्षीरस्वामी कठशाखाध्यायीत्यनुमितं पुरस्तात् । कठब्राह्मणाश्च कश्मीरेष्वेवोपलभ्यन्ते इत्यप्यस्य कश्मीरजत्वं द्रढयति।

**कालः**—क्षीरस्वामी कस्मिन् काले बभूव इति न शक्यते निश्चितं वक्तुम्। तथापि—

---

१. कश्मीरमण्डलभुवं जयसिंहनाम्नि विश्वम्भरापरिवृढे दृढदीर्घदोष्णि।
शासत्यमात्यवरसूनुरिमां लिलेख भक्त्या स्वयं द्रविणवानपि धातुपाठम्॥

१—एकः खलु क्षीराभिधानः कश्चिच्छाब्दिकः कल्हणेन राजतरङ्गिण्यां स्मर्यते—

**देशान्तरादागमय्याथ व्याचक्षाणान् क्ष्मापतिः ।**
**प्रावर्तयद्विच्छिन्नं महाभाष्यं स्वमण्डले ॥**

**क्षीराभिधानाच्छब्दविद्योपाध्यायात् सम्भृतश्रुतः ।**
**बुधैः सह ययौ वृद्धिं स जयापीडपण्डितः** ॥४।४८८, ४८९ ॥

कश्मीराधिपतेर्जयापीडस्य राज्यकाल, ८०८ वैक्रमाब्दात् ८३९ वैक्रमाब्दं यावदातिष्ठन्त ऐतिह्यविदः ।

क्षीरस्वामी तु क्षीरतरङ्गिण्याममरकोशटीकायां च श्रीभोजं तदीयं सरस्वतीकण्ठाभरणं चासकृदुदाजहार । तस्मादयं क्षीरस्वामी कल्हणस्मृतात् क्षीराभिधानाद् विदुषोऽन्य इति विस्पष्टम् ।

२ – **गणरत्नमहोदधौ स्मृतः** – सप्तनवत्युत्तरैकादशशत्यां विरचिते गणरत्नमहोदधौ वर्धमानो द्विः क्षीरस्वामिनं सस्मार । तथाहि—

क– **ज्योतींषि ग्रहनक्षत्रादीनि वेत्ति ज्यौतिषिकः इति वामनक्षीरस्वामिनौ** । ४।३०३ पृष्ठ १८३ ॥

**पाठान्तरम्– ज्योतींषि ग्रहादीनधिकृत्य कृतो ग्रन्थो ज्योतिषः । ज्योतिषं वेद ज्यौतिषिकः** । द्र० पृष्ठ १८३ टि० २ ।

अनयोः पाठान्तरे न्यस्तः पाठः क्षीरस्वामिनोऽमरकोशव्याख्यानेन (२।८।१४) सहाक्षरशः संवदति ।

ख—क्षीरस्वामिना मार्षं मारिष इत्यपि, यथा पर्षत् परिषदिति टीकायां विवृतम् । ७।४३० पृष्ठ २३८॥

**पाठान्तरम्—मर्षणात् सहनात् मार्षोऽपि । यथा परिषत्** [**पर्षत्**]। द्र० पृष्ठ २३८ टि० २ ।

अनयोरपि पाठान्तरे न्यस्तः पाठः क्षीरस्वामिनोऽमरटीकायां मारिष-पदव्याख्याने (१।६।१४) उपलभ्यते ।

एतेन इदमपि स्पष्टं, यद् गणरत्नमहोदधेर्योरोपीयं तदाधारेण मुद्रितं भारतीयं चोभे अपि संस्करणे भ्रष्टपाठबहुले स्तः ।

**इयं क्षीरस्वामिनोऽवरा सीमा ।**

३ हेमचन्द्राचार्यो हैमाभिधानस्य चिन्तामणि व्याख्यायां क्षीरस्वामिनं स्मरति । तद्यथा—

(क) क्षीरस्वामी तु—'**काष्ठमुपलक्षणम्, काष्ठाऽश्मादिमयी जलधारिणी द्रोणी**' इतिव्याचख्यौ । ३।५४१; पृष्ठ ३५० ।

(ख) '**हितजलापभ्रंशो हिज्जलः**' इति क्षीरस्वामी । ४।२११; पृष्ठ ४६१ ।

इमे उभे अप्युद्धरणे क्रमशः क्षीरस्वामिनोऽमरकोशस्य १।९।११; २।४।६१ टीकायामुपलभ्येते । एतेन क्षीरस्वामी हेमचन्द्राचार्यात् प्राचीन इति स्पष्टं प्रतीयते । हेमचन्द्राचार्यस्य कालस्तु वै० सं० ११४५—१२२९ पर्यन्तमस्माभिः स्वीये 'सं० व्या० शा० का इतिहास' नाम्निग्रन्थे निर्धारितम् ।

क्षीरतरङ्गिण्यामनेकत्र कांचिदुणादिवृत्तिं संकेतयति । तत्र २।५। पृष्ठ १७७; ४।१। पृष्ठ २०७ (एवमन्यत्रापि) । अत्र प्रथमे स्थाने '**उणादौ दोहदोऽभिलाषविशेष**' इति क्षीरतरङ्गिण्यां पाठो हैमोणादिवृत्तौ २४४तमस्य सूत्रस्यव्याख्यायामुपलभ्यते । द्वितीये स्थाने **दिवेर्डिव्**' इत्युणादिसूत्रमुद्ध्रियते । अयं सूत्रपाठ हैमोणादावेव ९४९ तमायां संख्यायामुपलभ्यते, नान्यस्मिन् कस्मिंश्चिदुणादि पाठे ।

अनेनेदं सम्भाव्यते यत् क्षीरस्वामिहेमचन्द्राचार्यौ समकालिकावास्ताम् । तत्र क्षीरस्वामिना क्षीरतरङ्गिण्या रचना हेमचन्द्राचार्यस्योणादिविवृत्तिरचनातोऽनन्तरं कृता । हेमचन्द्राचार्येण अभिधानचिन्तामणिटीका क्षीरस्वामिविरचिताद् अमरकोशोद्घाटनानन्तरं विरचिता ।

४—क्षीरतरङ्गिण्याः कोशान्ते पद्यमिदं पठ्यते—

**कश्मीरभुवमण्डलं जयसिंहनाम्नि,**
**विश्वम्भरापरिवृढे दृढदीर्घदोष्णि ।**
**शासत्यमात्यवरसूनुरिमां लिलेख**
**भक्त्या द्रविणवानपि धातुपाठम् ।।**

कश्मीराधिपतेर्जयसिंहस्य कस्यचिद् आमात्यस्य सूनुनेयं क्षीरतरङ्गिणी प्रतिलिपिकृतेत्यस्याभिप्रायः ।

अत्र स्मृतस्य जयसिंहस्य नृपते राज्यकालः ११८५ वैक्रमाब्दाद् ११९५ वैक्रमाब्दपर्यन्तमासीत् । एतस्मिन्नन्तरे क्षीरतरङ्गिण्याः प्रतिलिपिकरणादितः प्राचीनः क्षीरस्वामीति सुव्यक्तम् ।

५—मैत्रेयरक्षितः ११४० वैक्रमाब्दात् ११६५ वैक्रमाब्दं यावत् स्वकीयं धातुप्रदीपं विरचयामासेत्यस्माभिर्व्याकरणैतिह्ये प्रतिपादितम्[1] । मैत्रेयः धातुप्रदीपेऽनेकत्र केचिद् एके अपरे इत्यादिभिः शब्दैः क्षीरस्वामिमतं निर्दिशति । तथाहि—

**क—ऋञ्जते, ऋञ्जाञ्चक्रे**......। **केचित्तु आनृञ्जे इति प्रत्युदाहरन्ति** । पृष्ठ २० ।

अत्र १।११० सूत्रव्याख्याने '**ऋञ्जते आनृञ्जे**' इत्युदाहृतं क्षीरस्वामिना । अत्रस्थाऽस्मदीया टिप्पण्यपि द्रष्टव्या (पृ० ३८, टि० ६)।

**ख—तुहिर् उहिर् इत्येके** । पृ० ५२ ।

द्रष्टव्या क्षीरतरङ्गिणी १।४८७ (पृ० १०४) ।

**ग—अपरे तु वावृतु वरणे इति परस्मिन् वाग्रहणं संबध्य धातुमेकार्थमनेकाचं मन्यन्ते वावृतु वरणे इति वावृत्यते। ततो वावृत्यमाना सा रामशालां न्यविक्षतेति** । पृ० ९३ ।

अत्र ४।४९ सूत्रस्था क्षीरतरङ्गिणी (पृ० २१७) द्रष्टव्या ।

**घ—प्रीतिचलनयोरित्येके** । पृ० १०३ ।

इह ५।१५ सूत्रस्था क्षीरतरङ्गिणी (पृ० २३९) द्रष्टव्या ।

**ङ—प्वादयस्त्वागणान्ताः । तेषामपि समाप्त्यर्थमत्र वृत्करणमित्येके** । पृ० १२७ ।

अत्र ९।३३ सूत्रस्य क्षीरतरङ्गिणी (पृ० २८३) अवलोकनीया ।

**च—भासार्था इत्येके । भासार्था दीप्त्यर्थाः** । पृ० १४४ ।

द्रष्टव्याऽत्र १०।१९७ सूत्रस्था क्षीरतरङ्गिणी, तत्रस्थाऽस्मट्टिप्पणी च (पृ० ३१७, टि० ३) ।

एतैः कतिपयैरुद्धरणैरेतद्व्यक्तं भवति यत् क्षीरस्वामी मैत्रेयरक्षि-

---

१. द्र० भाग २, पृष्ठ १०१; सं० २०४१ ।

तात् प्राचीनः । एवं च कृत्वा ११६५ वैक्रमाब्दात् प्राचीनः क्षीरस्वामी इति तु निश्चितमेव ।

**क्षीरस्वामिनोऽन्ये ग्रन्थाः**—योऽयं **जाता विश्वसृजः क्रमेण मुनिभिः** इत्यादिश्लोकः क्षीरतरङ्गिण्या अमरोद्घाटनस्य चादौ समानरूपेण पठ्यते । तस्मिन् षड्वृत्तीनामुल्लेखः श्रूयते । ताश्चेमाः षड्वृत्तयः—

१. अमरकोशोद्घाटनम्
२. क्षीरतरङ्गिणी
३. निपाताव्ययोपसर्गवृत्तिः
४. अमृततरङ्गिणी
५. गणवृत्तिः
६. निघण्टुवृत्तिः

इति केचित् प्रतिजानते ।

अत्र निघण्टुवृत्तिः सन्दिग्धा वर्तते । यत्तु देवराजयज्वना निघण्टुभाष्यारम्भे क्षीरस्वामिनो निघण्टुटीका स्मृता, साऽमरकोशव्याख्यैव । यतो निघण्टुटीकायां स्मृतेषु द्वात्रिंशत्सु पाठेषु त्रिंशत्पाठाः क्षीरस्वामिनोऽमरव्याख्यान उपलभ्यन्ते । अवशिष्टयोः द्वयोः पाठयोर्मध्ये १।११।३२ निघण्टुटीकायामुद्धृतः **शब्दनं शब्दः** पाठः क्षीरतरङ्गिण्यां १।७२७ व्याख्यान उपलभ्यते । अत्रास्मन्मुद्रितपाठापेक्षया टिप्पण्यां निर्दशितः **शब्दः शब्दनम्** पाठः साधीयान् । एकोऽवशिष्टोऽपि पाठः क्षीरतरङ्गिण्याममरकोशोद्घाटने वा क्वचित् स्यात् । यतो निघण्टुशब्दः कोशपर्यायत्वेनापि लोके प्रसिद्धः ।[1] अतो देवराजेनामरटीकाऽपि निघण्टुटीका नाम्ना निर्दिष्टा ।

## ६—मैत्रेयरक्षितः (सं० ११६५)

मैत्रेयरक्षितनाम्ना बौद्धविदुषा [2]धातुप्रदीपनाम्न्येका धातुपाठस्य लघ्वी वृत्तिर्विहिता ।

---

१. एतदविज्ञाय ऋक्सर्वानुक्रमण्याः षड्गुरुशिष्यव्याख्यायां वेदार्थदीपिकायाम् 'यातयामो जीर्णे भुक्तोच्छिष्टेऽपि च निघण्टौ' (पृष्ठ ५६) 'शङ्कावितर्कभययोः इति निघण्टुः' इत्युभयोरुद्धरणयोर्विषये प्राध्यापको मैकडानलष्टिप्पणयति—'नास्ति यास्कीयनिघण्टौ' इति (पृष्ठ ५६), तच्चिन्त्यम् । षड्गुरुशिष्योद्धृते उभे अपि वचने वैजयन्तीकोशे (क्रमशः २७५, २२३ पृष्ठयोः) पठ्येते ।   २. **धातुप्रदीपोऽस्माभिः साम्प्रतं मुद्र्यते ।**

**परिचयः**

अयं मैत्रेयरक्षितः कस्मिन् काले, कुत्र, कुतश्च जन्म लेभ इति न विज्ञायते ।

**कदाचिद् बाङ्गः**—धातुप्रदीपे बहुत्र धातोर्दन्त्योष्ठ्यादित्वे **न शसददवादिगुणानाम्** (६।४।१२६) इति प्रत्यक्षसूत्रेण एत्त्वाभ्यासलोपयोः प्रतिषेधे प्राप्तेऽपि चन्द्रसम्मत्या एत्त्वाभ्यासलोपप्रतिषेध उदाहृतः । यथा—

**१—व्रज व्रज गतौ** (१।२४६,२५०)······**एत्त्वाभ्यासलोपप्रतिषेधश्चास्य चान्द्रैरुदाहृतः—ववाज ववजतुः**······। पृष्ठ २५ ।

**२—ष्टन वन शब्दे** (१।४६०,४६१)············**ववान, ववनतुः, ववनुः । अस्यैत्त्वाभ्यासलोपनिषेधश्चान्द्रैरुदाहृतः** । पृष्ठ ३७ ।

एतेनानुमीयतेऽयं मैत्रेयः कदाचिद् बङ्गदेशीयः स्यात् । बङ्गदेशीया हि बवयोरभेदेनोच्चारणात् प्रायेण मुह्यन्ति ।

**कालः**—सर्वानन्देनामरटीकासर्वस्वे धातुप्रदीपस्तदीया काचित् टीका चासकृदुद्धृता । टीकासर्वस्वश्च सर्वानन्देन १२१६ वैक्रमाब्दे निर्मितः ।[1] अतो १२१६ वैक्रमाब्दात् पूर्वभाविनी धातुप्रदीपटीका, ततः पौर्वकालिकश्च धातुप्रदीप इत्येतावत् सुनिश्चितम् । अत एवास्माभिः स्वीये व्याकरणैतिह्ये धातुप्रदीपस्य रचनाकालः ११६५—११९० वैक्रमाब्दपर्यन्तमनुमितः ।

**विद्वत्ता**——मैत्रेयरक्षितो व्याकरणशास्त्रस्यासामान्यपण्डित आसीत् । अस्य तन्त्रप्रदीपनाम्नी न्यासव्याख्या अतिविपुला वैदुष्यपूर्णा च वर्तते । धातुप्रदीपान्ते स स्वयमाह—

**वृत्तिन्यासं समुद्दिश्य कृतवान् ग्रन्थविस्तरम् ।**
**नाम्नातन्त्रप्रदीपं यो विवृतास्तेन धातवः ॥१॥**

**आकृष्य भाष्यजलधेरथ धातुनाम-**
**पारायणक्षपणकपाणिनिशास्त्रवेदी ।**

---

१. इदानीं चैकाशीतिवर्षाधिकसहस्रैकपर्यन्तेन (१०८१) शकाब्दकालेन ······(१०८१ शकाब्दः=१२१६ विक्रमाब्दैः) । टीकासर्वस्व १।४।२१॥

**कालापचान्द्रमततत्त्वविभागदक्षो**
**धातुप्रदीपमकरोज्जगतो हिताय ॥२॥**

परिभाषावृत्तिकृत् सीरदेवोऽप्याह—**तस्माद् बोद्धव्योऽयं रक्षितः, बोद्धव्याश्च विस्तरा एव रक्षितग्रन्था विद्यन्ते।** पृष्ठ ६५।

**अन्या कृतिः**—रक्षितस्याऽन्याकृतिः तन्त्रप्रदीपाख्या काशिकान्यासस्य व्याख्या वर्तते। अनेन महाभाष्यस्यापि काचिद् व्याख्या विरचिता इत्यस्माभिरनेकैः प्रमाणैरनुमितम्। एतद्विषयेऽस्मदीयः 'सं० व्या० शास्त्र का इतिहास' नामा ग्रन्थो द्रष्टव्यः (भाग १, पृ० ४२६-४२८; सं० २०४१)।

**धातुप्रदीप-टीका** (११६० वै०)

केनचिदज्ञातनाम्ना विदुषा धातुप्रदीपस्य काचित् टीका विरचिता। इयं टीका सर्वानन्देन स्वीयेऽमरकोशटीकासर्वस्वे बहुधा निर्दिष्टा। तेनास्याः कालः १२१६ वैक्रमाब्दात् प्रचीन इति निःसशयं शक्यते वक्तुम्। अस्माभिरस्याः कालः ११६०-१२१५ वैक्रमाब्दं यावदनुमित (द्र० सं० व्या० शस्त्रेतिहास भाग १, पृष्ठ ४२३; सं० २०४१)।

७—**दैवम्** (१२०० वै०)

अयं श्लोकात्मकः प्रकरणग्रन्थो देवनाम्ना केनचिद् विदुषा विनिर्मितः। अस्मिन् ग्रन्थेऽनेकत्र पठितानां सरूपाणां धातूना पाठप्रयोजनं चिन्त्यते। तदुक्तं ग्रन्थान्ते—

**इत्यनेकविकरणसरूपधातुव्याख्यानं देवनाम्ना विदुषा विरचितं दैवं समाप्तम्।**

अस्मिन् ग्रन्थ आहत्य शतद्वयं श्लोका विद्यन्ते।

**परिचयः**

देवनामा विपश्चित् कस्मिन् काले कुत्र चाजायत इति न कथंचिदपि विज्ञायते। दैवग्रन्थस्य सम्पादकेन गणपतिशास्त्रिणा देवस्य कालः ख्रीस्ताब्दस्य नवमशताब्द्या आरम्भादाद्वादशशति अभ्यधायि। वयं त्वस्य कालः वैक्रमद्वादशशत्या अन्तिमः पाद इत्यनुमिनुम। तत्रेमौ हेतू—

१- क्षीरस्वामी दैवं न क्वचित् सस्मार। क्षीरस्वामिनश्च ११२५ वैक्रमाब्दात् ११६५ वैक्रमाब्दं यावत् काल इत्यस्माभिः पूर्वमुक्तम्।

२—दैवव्याख्यात्रा कृष्णलीलाशुकमुनिना द्वयोस्स्थानयोस्तादृशनिर्देशः कृतो येनानुमीयते यदयं देवो मैत्रेयरक्षितादवरकालिकः। तथाहि—

**क—देवेन तु 'ष्टै वेष्टने स्तापयति तिष्टायति' इति मैत्रेयरक्षितोक्ततकारविस्रम्भाम्नायमनुसृतः।** पृष्ठ २३।

**ख— देवेन तु मैत्रेयरक्षितविस्रम्भादेतदुक्तम्।** पृष्ठ २८।

**ग— आप्लृ लभने इत्यत्र मैत्रेयरक्षितेन आपयते इत्यात्मनेपदमुदाहृतमुपलभ्यते[1]। दैववशात्तु तस्यापि[2] नैतदस्तीति प्रतीयते। तदनुसारेण[3] हि प्रायेण देवः प्रवर्तमानो दृश्यते।** पृष्ठ ६६।

यदि कृष्णलीलाशुकमुनेर्लेखः सत्यं स्यात्तर्हि देवो मैत्रेयरक्षिताद् औत्तरकालिक इति निश्चितं शक्यते वक्तुम्। एतदाधारेण च देवस्य १२०० वैक्रमाब्दः काल इत्येव युक्तम्।

## दैववार्त्तिकम् (१२५० वै०)

श्रीकृष्णलीलाशुकमुनिना दैवस्य पुरुषकारसंज्ञकं वार्त्तिकमलेखि[4]। अस्मिन् ग्रन्थे पाणिनीयेतरव्याकरणसम्प्रदायग्रन्थानामपि पदे-पद उद्धरणदर्शनादस्य कर्तुरनेकतन्त्रनिष्ठं ज्ञानमासीदिति स्फुटं भवति। अनेकत्र च सायणो नामनिर्देशं विनैव पुरुषकारस्य पङ्क्तीरुद्धरति[5]।

---

१. सम्प्रति मुद्रिते धातुप्रदीपे 'आपयति' इति परस्मैपदमेवोपलभ्यते।

२. मैत्रेयस्यापीत्यर्थः। अस्यायं भावः—यतो दैवेनात्मनेपदं नोदाहृतमतस्तदनुसारिणो मैत्रेयस्य ग्रन्थेऽपि नासीदिति प्रतीयते।

३. तदनुसारेण मैत्रेयानुसारेणेत्यर्थः। अत्र 'यतः' पदमध्याहार्यम्—यतस्तदनुसारेण·········।

४. ग्रन्थान्ते—कृष्णलीलाशुकेनैवं कीर्तितं दैववार्त्तिकम्।······इति श्रीकृष्णलीलाशुकमुनिविरचित दैवसहायः पुरुषकारः समाप्तः।

५. यथा नट धातौ 'यत्कारिषु' इत्यारभ्य 'निरूढलक्षणया नेयः' इत्यन्ता-

**परिचयः**

श्रीकृष्णलीलाशुकमुनिर्वैष्णवसम्प्रदायस्याचार्यः । अस्य कृष्ण-कर्णामृतं कृष्णलीलामृतं वा स्तोत्रं वैष्णवेषु अतिप्रसिद्धम् । अयं बंगदेशीय इत्येके मन्यन्ते ।

**कालः**—कृष्णलीलाशुकमुनेः कः काल इति नास्ति कश्चिन्निश्चयः । अतस्तस्य कालनिर्णयाय यानि सहायकानि प्रमाणानि तान्युच्यन्ते—

१—पुरुषकारे हेमचन्द्राचार्यः त्रिः स्मर्यते[1] । हेमचन्द्रस्य च ग्रन्थ-लेखनकालः ११६० वैक्रमाब्दात् १२२० वैक्रमाब्दपर्यन्तमिति निश्चितप्रायम् । अत इयं पुरुषकारस्य पूर्वा सीमा ।

२—निघण्टुव्याख्यात्रा देवराजयज्वना पुरुषकारस्य नामनिर्देशं विना द्वयोः स्थानयोः पाठ उद्धृतः[2] । देवराजीयं निघण्टुभाष्यं सायणेन १।६२।३ ऋग्भाष्य उद्धृतम्[3] । अतो देवराजस्य वैक्रमाब्दस्य चतुर्दशशत्या उत्तरार्धः (१३५०—१४००) काल इत्यैतिह्यविदः संगिरन्ते । इयं पुरुषकारस्यावरासीमा ।

३—लीलाशुकमुनिः स्वव्याख्याने क्वचिद् दैवस्य पाठान्तरमप्युपन्यस्यति । दैवस्य कालः १२००वैक्रमाब्द इत्यनुमितं पुरस्तात् । दैवग्रन्थे पाठान्तरोत्पत्तावपि कश्चित् काल अपेक्षत एव । स च न्यूनान्न्यूनं पञ्चाशद्वर्षमित आवश्यकः ।

एतैः प्रमाणैः सामान्यतयेदमेव शक्यते वक्तुं, यत् पुरुषकारस्य रचना १२५० वैक्रमाब्दात् १३५० वैक्रमाब्दं यावत् कदाचिद् बभूव ।

**सीतारामजयरामयोर्भ्रान्तिः**—'संस्कृत साहित्य का संक्षिप्त इति-

---

तिस्रः पङ्क्तयः । धातुवृत्ति पृष्ठ ७८ । इमाः पङ्क्तयः पुरुषकारे ६६तमे पृष्ठे वर्तन्ते ।

१. पुरुषकार पृष्ठ २२,२४,३७ ।

२. 'क्षप प्रेरणे' इत्यारभ्य 'धातुवृत्तौ पठ्यते' इत्यन्तः (पृष्ठ ४३,१०९) । अयं पाठः पुरुषकारे ९५ पञ्चनवतितमे पृष्ठे वर्तते ।

३. 'उस्राशब्दात् स्वार्थे पृषोदरादित्वेन घ-प्रत्यय इति निघण्टुभाष्यम् । अयं पाठो देवराजीये निघण्टुभाष्ये उस्रियापदव्याख्याने (२।११।३) उपलभ्यते ।

हास' नाम्नो ग्रन्थस्य लेखकाभ्यां सीतारामजयरामाभ्यां कृष्णलीलाशुकमुनेः कालः ११५७ वैक्रमाब्दो निर्दिष्टः। स चासमीचीन इत्युपरितनप्रमाणैर्विस्पष्टमेव।

**पुरुषकारे स्मृता कविकामधेनुः**—पुरुषकारे कविकामधेनुनामा ग्रन्थो ऽसकृत् स्मर्यते। अयं न वोपदेवविरचितः कविकल्पद्रुमस्य कामधेनुटीका-ग्रन्थः, अपि तु अमरकोषस्य टीका।[1] अस्यां हि पाणिनीयसूत्राण्युद्ध्रियन्ते[2]। अतः पुरुषकारोधृतोद्धरणैः सम्भाव्यते यदियममरकोशस्य काचिद् व्याख्या स्यादिति।

**अन्ये ग्रन्थाः**—कृष्णलीलाशुकमुनिना विरचिता इमेऽन्ये ग्रन्थाः—

१—**सुप्पुरुषकारः**—सायणः सुब्धातुव्याख्याने पुरुषकारनाम्ना पाठमेकमुद्धरति—

**तदुक्तं पुरुषकारे—बंहयतीत्युदाहृत्येष्ठनि यद् दृष्टं कार्यं तदप्यतिदिश्यते, न चेष्ठनि यिट्, नापीष्ठवद्भावश्च। यिट्सन्नियोगशिष्टत्वात् तदभावे तु भावयतीति चिन्त्यमाप्तैरिति।** धातुवृत्ति पृष्ठ ४२८।

नैष पाठो मुद्रिते पुरुषकारे दृश्यते। अतो ज्ञायते कृष्णलीलाशुकमुनिना कश्चित् सुब्धातुव्याख्यात्मकोऽपि पुरुषकारनामा ग्रन्थो विरचित इति।

२—**कृष्णलीलामृतम्**—इदं स्तोत्रम्।

३—**सरस्वतीकण्ठाभरणव्याख्या**—कृष्णलीलाशुकेन भोजदेवीयस्य सरस्वतीकण्ठाभरणनाम्नः शब्दानुशासनस्य पुरुषकारनाम्नी व्याख्या विरचिता। एतद्विषयेऽस्मदीयो व्याकरणैतिह्यग्रन्थो ऽवलोकनीयः।[3]

एतदपि संभाव्यते सायणेन पूर्वनिर्दिष्टः पुरुषकारपाठः सरस्वतीकण्ठाभरणव्याख्यात उद्धृतः स्यात्।

४—**अभिनवकौस्तुभमाला,** ५—**दाक्षिणामूर्तिस्तवः**—दैवसम्पाद-

---

१. 'प्रसूनं कुसुमं सुमनम्' (अमर २।४।१७) इत्यत्र कविकामधेनुः षूङ् प्राणिप्रसवे········। पुरुषकार पृष्ठ ३३। २. द्र० पुरुषकार पृष्ठ १०३।

३. द्र० 'सं० व्या० शास्त्र का इतिहास' भाग १, पृष्ठ ६६०-६६१; सं० २०४१।

कस्य गणपतिशास्त्रिणो मते इमावपि ग्रन्थौ श्रीकृष्णलीलाशुकमुनेरेव कृती स्तः। ग्रन्थयोरप्यन्ते—'इति कृष्णलीलाशुकमुनि ......... इत्यादिः पुरुषकारसदृश एव पाठ उपलभ्यते।

## ८—सायणः

विविधग्रन्थनिर्मात्रा सायणाचार्येण पाणिनीयधातुपाठस्य स्वज्येष्ठभ्रातुर्माधवस्य नाम्नोऽनुरूपा माधवीयानाम्नी धातुवृत्तिर्विरचिता। इयं वृत्तिर्वैयाकरणनिकायेऽत्यन्तं प्रसिद्धा वर्तते।

### संक्षिप्तः परिचयः

सायणेन विविधग्रन्थेषु स्वपरिचयो निबद्धः। तदनुसारमस्य पितुर्नाम मायणः, मातुः श्रीमती, ज्येष्ठभ्रातुर्माधवः, कनिष्ठस्य भोगनाथ आसीत्। अस्य तैत्तिरीया शाखा बौधायनं सूत्रम्, भारद्वाजश्च गोत्रं बभूव। अयं १३७२ वैक्रमाब्दे जन्म लेभे, १४४४ वैक्रमाब्दे द्वासप्ततिवर्षदेशीयः स्वर्जगाम।

सायण एकत्रिंशद्वर्षवयस्को विजयनगराधिपतेः प्रथमस्य हरिहरस्य कम्पणनाम्नोऽनुजस्य (वै० सं० १४०३-१४१२) मन्त्रिपदमलंचकार, तदनु तत्पुत्रस्य संगमस्य (सं० १४१२-१४२०) शिक्षकपदं मन्त्रिपदं च स्वीचकार, तदनन्तरं प्रथमस्य बुक्कनृपतेः (सं० १४२१-१४३७), द्वितीयस्य हरिहरस्य (सं० १४३८—१४४४) चामात्यपदधुरमुद्वाह।[1]

### धातुवृत्तेर्निर्मितिकालः

धातुवृत्तेराद्यन्तयोः पाठेन ज्ञायते यत् सायणेन संगमनृपतेरमात्यपदमलंकुर्वतेयं वृत्तिर्विरचिता। तथाहि—

आदौ—

**अस्ति श्रीसङ्गमक्ष्मापः पृथिवीतलपुरन्दरः।**
**यत्कीर्तिमौक्तिकमादर्शे त्रिलोक्यां प्रतिबिम्बते ॥४॥**

अन्ते—इति **पूर्वदक्षिणपश्चिमसमुद्राधीश्वरकम्पराजसुतसंगम-**

---

१. सायणाचार्यस्य पूर्णवृत्तज्ञानाय पण्डितबलदेवोपाध्यायकृतः 'आचार्य सायण और माधव' नामा ग्रन्थोऽवलोकनीयः।

**महाराजमहामन्त्रिणा मायणसुतेन माधवसहोदरेण सायणाचार्येण विरचितायां धातुवृत्तौ चुरादयः सम्पूर्णाः।**

तदेवं धातुवृत्तेरचनाकालः १४१५ वैक्रमाब्दात् १४२० वैक्रमाब्दपर्यन्तं स्यात्।

**धातुवृत्तेर्निर्माता**—येयं महती ग्रन्थराशिः[1] सायणनाम्नोपलभ्यते न सा सर्वा सततममात्यपदभारमुद्वहता सायणेनैव विरचिता, अपि तु तेन स्वस्य सहायकैर्बहुभिः पण्डितैर्निर्मापिता इति विद्वत्समाजे प्रसिद्धिर्वर्तते। अत एव तन्नाम्ना प्रसिद्धेषु ग्रन्थेषु यत्र तत्र पारस्परिको विरोधोऽप्युपलभ्यते। सत्येवं माधवीया धातुवृत्तिस्तेन स्वयं विरचिताऽऽहोस्वित् तत्सहायकेनान्येनैव केनचिद् विदुषा निर्मिता इति सन्देहो जागर्त्येव। धातुवृत्तौ **क्रमु पादविक्षेपे** इति सूत्रव्याख्यानान्ते पठ्यते—

**यज्ञनारायणार्येण प्रक्रियेयं प्रपञ्चिता।**
**तस्या निःशेषतस्सन्तु बोद्धारो भाष्यपारगाः** ॥पृ० ६७॥

एवं **मव्य बन्धने** इति सूत्रान्तेऽपि—

**अत्रापि शिष्यबोधाय प्रक्रियेयं प्रपञ्चिता।**
**यज्ञनारायणार्येण बुध्यतां भाष्यपारगैः** ॥ पृ० १०२ ॥

उभयत्र स्मृतो यज्ञनारायणः किं सायणस्यैव नामान्तरमुत तत्सहायकस्य धातुवृत्ते रचयितुर्वास्तविकं नामेति सन्देहनिर्गमकं न किञ्चित् प्रमाणमुपलभ्यते। वयं त्वनुमिनुमो यदयं यज्ञनारायणः सायणस्य सहायको धातुवृत्ते रचयिता स्यात्।

**धातुवृत्तेर्वैशिष्ट्यम्**

माधवीयधातुवृत्तेः प्राचीने क्षीरस्वामिमैत्रेयरक्षितयोर्द्वे धातुव्याख्ये समुपलभ्येते। ते अत्यन्तं संक्षिप्ते स्तः। तयोरपि धातुप्रदीपः संक्षिप्त-

---

१. यद्यपि राशिशब्दः पुंल्लिङ्गे प्रयुज्यते तथाप्यस्य स्त्रीलिङ्गेऽपि प्रयोगा लभ्यन्ते। तद्यथा—

लक्ष्मीसहस्रनामटीकायाम् (पृष्ठ ५१२, चौखम्बासंस्करणे) 'स्यान्निकायः पुञ्जराशी इति राशिशब्दस्य पुंस्त्वेऽपि 'अलभ्यं घोराभिः सुविमलतपोराशिभिः' इति पण्डितराजोऽपि स्त्रीत्वं व्यधत्त।'

तरः। नैताभ्यां विद्वांसोऽपि धातुकान्तारावगाहनं कर्तुं समर्थाः, अकृतधियां तु का कथा। नैव च तयोः प्रतिधातु णिजन्तसन्नन्तादिरूपाणि प्रदर्श्यन्ते। माधवीयायां खलु प्रायेण सर्वेषां धातूनां णिजन्तादिप्रक्रियाः संक्षेपतः प्रपञ्च्यन्ते। अपि च सन्दिग्धेषु रूपेषु विविधमतान्युद्धृत्य निर्णयो विधीयते। यद्यप्यनेकत्र परमसूक्ष्मविचारचर्चया काठिन्यमपि समपद्यत, तथापि कृतधियां विपश्चितामध्यापकानां कृत इयं परमसाहाय्यमातनुते। सिद्धान्तकौमुद्याः प्रचलनात् प्राग् धातुपाठस्य कीदृशी अध्यापनप्रवृत्तिः पाणिनीयेष्वासीदित्यस्य वास्तविकं दर्शनमप्यत्रैवोपलभ्यते। किं बहुनाऽऽर्षपाठविधिनाऽध्यापकानामध्येष्यमाणानां च काशिकावृत्तिरिवेयमपि प्रधानसहायभूता वर्तते।

**प्रक्रियाग्रन्थान्तर्गतानि धातुव्याख्यानानि**

वैक्रमाब्दस्य द्वादशशत्याः पाणिनीयव्याकरणस्य पठनपाठनं शब्दानुशासनक्रममुज्झित्वा प्रक्रियाक्रमेण प्रवृत्तम्। प्रक्रियाग्रन्थकारैर्धातुपाठस्यापि तत्रैवान्तर्भावः कृतः। ते चेमे ग्रन्था: ग्रन्थकाराश्च—

| | | |
|---|---|---|
| **९—रूपावतारः** | **धर्मकीर्तिः** | **११४० वै०** |
| **१०—प्रक्रियारत्नम्** | | **१३०० वैक्रमाब्दात्पूर्वः** |
| **११—रूपमाला** | **विमलसरस्वती** | **१४०० वैक्रमाब्दात्पूर्वः** |
| **१२—प्रक्रियाकौमुदी** | **रामचन्द्रः** | **१४८० वै०** |
| **१३—सिद्धान्तकौमुदी** | **भट्टोजिदीक्षितः** | **१५७५ वै०** |
| **१४—प्रक्रियासर्वस्वम्** | **नारायणभट्टः** | **१६२० वै०** |

एषु चतुर्ष्वाद्येषु नैव सर्वे धातवो विव्रियन्ते, नापि व्याख्यातधातूनां णिजन्तादिसर्वप्रक्रियासु रूपाणि प्रदर्श्यन्ते। उत्तरयोर्ग्रन्थयोर्यद्यपि सर्वे धातवो व्याख्याताः तथापि शुद्धकर्तृप्रक्रियां विहाय णिजन्तादिषु तेषां रूपाणि नोच्यन्ते। णिजन्तादिप्रक्रियाप्रदर्शनाय केषांचिदेव धातूनां रूपाणि निदर्श्यन्ते। नैतेषु किञ्चिद्वैशिष्ट्यं वर्तते।

एषां ग्रथानां ग्रन्थकृतां तद्व्याख्याकृतां च कालादिविषयेऽस्माभिः 'संस्कृत व्याकरण शास्त्र का इतिहास' नाम्नो ग्रन्थस्य षोडशाध्याये (भाग १, पृष्ठ ५८२—६०७; सं० २०४१) विस्तरेण प्रत्यपादीति नेह पुनः प्रपञ्च्यते।

अत्र हि पाणिनीयधातुपाठस्य तद्व्याख्याग्रन्थानां च विषय एव विचारः कृतः । पाणिनेः पूर्ववर्तिनामापिशल-काशकृत्स्नादीनाम्, उत्तरवर्तिनां च कातन्त्र-चान्द्र-जैनेन्द्र-अभिनवशाकटायन-हैम-जौमर-प्रभृतीनां धातुपाठविषये तद्वृत्त्यादिविषये च विस्तरभिया न किञ्चिदुक्तम् । एतेषां विषये 'संस्कृत व्याकरण शास्त्र का इतिहास' ग्रन्थस्य द्वितीये भागे विस्तरेण प्रतिपादयिष्यते ।

**गच्छतः स्खलनं क्वापि भवत्येव प्रमादतः ।**
**हसन्ति दुर्जनास्तत्र समादधति पण्डिताः ॥**

**करोलबाग, देहली** | **विदुषां वशंवदः—**
**दीपावली, २०१४ वैं०** | **युधिष्ठिरो मीमांसकः**

———

# अस्मदीयं संस्करणम्[1]

पाणिनीयधातुपाठस्य उपलभ्यमानासु वृत्तिषु क्षीरस्वामिनः क्षीरतरङ्गिणी प्राचीनतमा वर्तते। ब्रूनो-लिबिशनामकेन जर्मन-विदुषाऽस्याः प्रथमं संस्करणम् ऋषिवस्वङ्कचन्द्रमिते (१९८७) वैक्रमाब्दे (=१९३० ईसवीये) प्रकाशितम्। अस्मिन् संस्करणे रोमनाक्षराणां प्रयोगात्, भूमिकायां टिप्पण्यां च जर्मनभाषाया व्यवहारान्नेदं भारतीयानां संस्कृतविदुषां कृते लाभप्रदमभूत्। अतस्तदुपलब्धिकालादेवास्माकीना मतिरस्य ग्रन्थस्य नागराक्षरेषु प्रकाशनस्याजायत। तदनु द्वितीये विश्वमहायुद्धे तदपि संस्कारणं दुर्लभतां गतमिति कृत्वा तत्प्रकाशनस्य महतीमावश्यकतामन्वभूवम्।

अस्दाचार्यवर्याणां पण्डितब्रह्मदत्तजिज्ञासूनां लवपुरस्थे विरजानन्दाश्रमे विद्यामधीयानेन वर्णिना वाचस्पतिनाऽस्मन्निर्देशमनुसृत्य १९९८ वैक्रमाब्देऽस्य ग्रन्थस्य नागराक्षरेषु प्रतिलिपिरारब्धा। केनचित् कारणेन सोऽदादेर्मध्यं यावत् प्रतिलिपिं कृत्वा विरराम। तदनु भारतदेशविभागानन्तरं काशीमागत्य २००६ वैक्रमाब्दे शेषांशस्य पूर्तिरस्माभिः स्वयमकारि। तस्मिन्नेव काले काश्या राजकीयसंस्कृतमहाविद्यालयेऽधीयानेन पण्डितरामशंकरभट्टाचार्येणास्य समग्रस्य ग्रन्थस्य नागराक्षरेषु प्रतिलिपिर्विहिता। भट्टाचार्योऽस्य ग्रन्थस्य प्रकाशनायापि संचक्लृपे, परं कार्तार्थ्यं नाभजत। २०११ वैक्रमाब्दे श्रीरामलालकपूरनिक्षेपसंस्थाधिकारिभिरस्य ग्रन्थस्य प्रकाशनाय मतिरकारि। बहुकार्यव्यग्रतया मयाऽस्य ग्रन्थस्य सम्पादनकार्ये रामशंकरभट्टाचार्यस्य साहाय्यमग्राहि। किञ्चित् कालान्तरं भट्टाचार्योऽप्यन्यकार्यजातमुररीकृत्यास्मात् कार्यात् प्रायेणोपरराम। अहमपि स्वास्थ्यवैकल्यात् काशीं परित्यज्य देहलीं प्रत्यायातः। अतो भट्टा-

---

१. इदं प्रकरणं प्रथमसंस्करणे प्रकाशितमेव यथावद् वर्तते। केवल उत्तरेषु संदर्भेषु यत्र यत्र प्रथम संस्करणे पृष्ठ टिप्पणी संख्या निर्दिष्टाऽऽसीत् सेह प्रस्तुतसंस्करणानुसारं परिष्कृता।

चार्यस्य संभाव्यमानं साहाय्यमप्यनश्यत् । मय्येव सकलः सम्पादन-कार्यभार आपतितः। सत्यपि स्वास्थ्यवैकल्ये विविधकार्यभारे च यथाकथंचित् मया तत्कार्यं पारं गमितम् । अत्र कियत्साफल्यं लब्ध-मित्यत्र तु विद्वांस एव प्रमाणम् । कार्यस्यास्य द्वयोर्व्यासज्यवृत्तित्वात् स्वास्थ्यवैकल्याद् अतिशयकार्यभाराच्च या अत्र न्यूनताः समजायन्त ता अहं संजाने । तथापीदं शक्यते वक्तुं यदिदं संस्करणं पूर्वजर्मन-संस्करणापेक्षया साधुतरं निष्पन्नमिति ।

### जर्मनसंस्करणापेक्षयाऽत्र वैशिष्ट्यम्

यद्यपि विदुषा लिबिशेन रोमनाक्षरसंस्करणं महता परिश्रमेण सम्पादितम्, तथापि तस्य पाणिनीये व्याकरणे सम्यक्प्रवेशाभावाद् बहुत्र तदीयाः सम्पादनप्रमादा उपलभ्यन्ते । अस्माभिस्तदीयप्रमादानां परिमार्जनाय, संस्कृतविदुषां सौकर्याय, उपलब्धिसौलभ्याय प्राचीन-वाङ्मयपरिरक्षणाय च विविधग्रन्थसाहाय्येनेदं संस्करणं परिष्कृतम् । अत्र यद्यद् वैशिष्ट्यमस्माभिः सम्पादितं तदित्थम्—

१—**धातुसूत्रसंख्यानिर्देशः**—धातुपाठे '**भू सत्तायाम्**' '**एध वृद्धौ**' इत्येवमादीनि वाक्यानि क्षीरस्वाम्यादीनां पूर्वाचार्याणां मते सूत्राण्यु-च्यन्ते (द्र० पृष्ठ १, पं० १०, टि० ४) । अतोऽत्रापि पाणिनीयाष्ट-कवत् प्रतिधातुसूत्रमादौ सूत्रसंख्या निर्दिष्टा । यथा—

१. **भू सत्तायाम्**, २. **उदात्तः** (पृष्ठ३), ३. **एध वृद्धौ** (पृष्ठ १२), ४. **स्पर्ध संघर्षे** (पृष्ठ १३) इत्यादिषु ।

२—**धातुसंख्यानिर्देशः**—कस्मिन् प्रघट्टके कियन्तो धातव इति विज्ञानाय, प्रतिगणं धातुसंख्यावच्छेदाय च प्रतिसूत्रव्याख्यानन्तरं यथाक्रमं धातुसंख्याया निर्देशोऽप्यकारि ।

३. **लिबिशोपात्तधातुसंख्यापरित्यागः**—लिबिशेन स्वीये संस्करणे भोट्लिङ्कसम्पादितधातुपाठानुसारं तत्तद्धातुसंख्यानिर्देशो विहितः । क्षीरतरङ्गिण्यां तत्रस्थानां बहूनां धातूनामभावात् क्रमवैपरीत्याच्च तदीयधातुसंख्यानिर्देशस्यानुपयोगितामवेक्ष्य तन्निर्दिष्टां धातुसंख्यां परित्यज्यास्माभिर्मूलग्रन्थानुसारिणी धातुसंख्या प्रदत्ता ।

२. **अन्यैरुद्धृतानां क्षीरतरङ्गिणीपाठानां स्थाननिर्देशः**—क्षीर-तरङ्गिण्या यान्युद्धरणानि पुरुषकारे धातुवृत्तावन्यत्र चोपलभ्यन्ते, तेषां

निर्देशः प्रायेणास्माभिष्टिप्पण्यां कृतः । यत्र तु तद्ग्रन्थेषूद्धृतः पाठोऽक्षरशः समान आसीत्, तत्र 'उद्धृतम्' इति, यत्र त्वर्थतोऽनुवादः शब्दवैपरीत्यं वाऽभूत् तत्र 'स्मृतम्' इति च संकेत्य तत्तत्स्थाननिर्देशोऽकारि। यथा—उद्धृतम्—पृष्ठ ३०, टि० ३,६; स्मृतम्—पृष्ठ २४, टि० ४, ६ एवं सर्वत्र ।

अत्र विट्ठलाचार्यकृतायां प्रक्रियाकौमुदीव्याख्यायामुद्धृतानां स्मृतानां वा पाठानामल्पीयानेव संग्रहोऽभूत् तद्ग्रन्थस्यास्मत्सकाशेऽभावात् ।

५—**अन्यत्रोद्धृतपाठभेदानां निर्देशः** यत्रान्यत्रोद्धृतः क्षीरतरङ्गिणीपाठः सर्वथैव भिन्न आसीत्, यद्वा क्षीरस्वामिनाम्ना क्षीरतरङ्गिणीनाम्ना वोद्धृतः पाठोऽत्र नोपलब्धः, तादृशपाठानां निर्देशष्टिप्पण्यामस्माभिर्विहितः । यथा—पृष्ट १६, टि०२; २७, ७; ४०, ४; ४५, २; ५०, ५; १०४, ५; ११७, ३ इत्यादिषु पञ्चत्रिंशत् स्थानेषु यथास्थानं द्रष्टव्यम् ।

६—**मूलपाठसंशोधनम्**—पुरुषकारादिषूद्धृतपाठसाहाय्येन यत्र तत्र जर्मनसंस्करणे मुद्रितानामपपाठानां संशोधनं कृत्वा तेषां टिप्पण्यां संकेतो विहितः । एतद्विषयका इमाष्टिप्पण्योऽवलोकनीयाः—पृष्ठ १०, टि २; २६, १; १५१, ३; २४२, २ इत्यादयः ।

७—**मूलपाठशोधप्रदर्शनम्**—यत्र मूलपाठशोधनाय न किञ्चित् साक्षात् साधनमुपलब्धं, तत्रतत्रापपाठानां स्थाने साधुपाठाभ्यूहष्टिप्पण्यां प्रदर्शितः । यथा—पृष्ठ ६, टि० १, २; ६२, ४; ६४, ६; १२०, ३; १६२,४; १७६, ७; इत्यादिषु त्रयस्त्रिंशत्स्थानेषु यथा—यथं द्रष्टव्यम् ।

८—**त्रुटितपाठपूर्तिः**—यत्र क्वचित् क्षीरतरङ्गिण्यां पाठस्त्रुटित आसीत् तस्य[ ]कोष्ठे पूर्ति विधाय टिप्पण्यां तन्निर्देशः कृतः । यथा—पृष्ठ १२३, टि० १; १२८, १ इत्यादिषु ।

६—**भ्रष्टपाठ-संकेतः**—यत्र यत्र क्षीरतरङ्गिण्यामस्माभिः पाठभ्रंशो विज्ञातः, तस्य सर्वस्य संकेतष्टिप्पण्यां विहितः । यथा—पृष्ठ ७३, टि० २, ७; १२७, १; २१६, २; २७३, ३; २७७, ३; २८५, ५; ३०२, १; ३१६, १; ३१८, ६; ३२२, ४ इत्यादिषु ।

१०—**पाठतुलना**—बहुत्रास्माभिः क्षीरस्वामिनोद्धृतानां पाठा-

नामन्यग्रन्थैः सह तुलनाऽकारि। यथा—पृष्ठ ४, टि० ६; पृष्ठ ९, टि० ५ इत्यादिषु।

११—**उद्धरणानामाकर-ग्रन्थनिर्देशः**—लिबिशेन येषामुद्धरणानामाकरग्रन्थनिर्देशः स्वीये संस्करणे न कृतः, तेषु वहूनां मूलस्थानमुपलभ्य तत्र तत्र टिप्पण्यां निर्देशोऽकारि। अत्र इमाष्टिप्पण्योऽवलोकनीयाः—पृष्ठ १५६,टि०१; १७४,१; १७९,६; १८२, ६ इत्यादयः।

क्वचित् टिप्पणीं विनाऽपि निर्देशोऽकारि। यथा—पृष्ठ ९, पं०५।

१२—**युक्ताऽऽकरनिर्देशः**—लिबिशेन बहुत्रोद्धरणानां वास्तविकमाकरस्थानमपरिज्ञाय तत्सदृशपाठतुलनायै स्थाननिर्देशः कृतः,तादृशेषु बहूनामुद्धरणानामस्माभिर्मूलमाकरस्थानमुपलभ्य तन्निर्देशो विहितः। दशपाद्युणादिसूत्रनिर्देशः सर्वोऽप्येतादृश एव। तदतिरिक्तेष्वपि बहुषु स्थानेष्वस्मन्निर्दिष्टो युक्ताऽऽकरनिर्देशो द्रष्टव्यः।

१३—**आकरनिर्देशे लिबिशभ्रान्तिनिराकरणम्**—पाणिनीयव्याकरणस्य सम्यक् परिचयाभावात् लिबिशो बहुत्रोद्धरणनिर्देशे परिभ्रान्तः। अस्माभिः चत्वारिंशत्सु तादृशस्थलेषु टिप्पणीषु तद्भ्रान्तिः परिहृता। ता यथास्थानं द्रष्टव्याः।

१४—**धातुसूत्रव्याख्याभ्रमनिराकरणम्**— क्षीरस्वाम्यादिभिर्बहुत्र धातुसूत्राण्यशुद्धानि व्याख्यातानि। तेषां टिप्पण्यां परिमार्जनं विहितम्। यथा—पृष्ठ ९, टि० ६; १९८, १ इत्यादिषु।

१५—**क्षीरस्वाम्यभिप्रायनिदर्शनम्**—अनेकत्र टिप्पण्यां क्षीरस्वामिनोऽस्पष्टोऽभिप्रायो व्यक्तीकृतः। यथा—पृष्ठ १, टि० ४, ५; ७, ६; ६२, ३; ८६, १; २२२, २; २२७, १; २३०, ४; २४५, १; २६८, १ इत्यादिषु।

१६—**क्षीरभ्रान्तिप्रदर्शनम्**—क्षीरस्वामिना बहुत्र भ्रान्त्याऽन्यथा धातुरूपप्रतिपादनं कृतम्, सूत्रनिर्देशो वा विहितः। तादृशीनां यथासम्भवं सर्वासां भ्रान्तीनां परिहारष्टिप्पण्यां विहितः। यथा पृष्ठ ६४, टि० ३; ७४, १; ७७, २; १९१, ५; १९२, ५; १९४,१; २१५, ३; २३९, ५; २४६, २; २४८, ५; २४९, ३; २५१, ३; २५६, ४; २५९, ४; २७४, ३; ३२४, ४ इत्यादिषु।

१७—**स्वयमपठितधातूनां निर्देशः**—क्षीरस्वामी प्रायेण कंचित् धातुं

व्याचक्षाणः तस्य तत्सदृशस्य वाऽन्यगणपठितस्य धातोर्निर्देशं करोति। तादृशनिर्देशे क्षीरस्वामिना बहुत्र तेषामपि धातूनां निर्देशः कृतो यान् स स्वयं तत्तद्गणेषु न पपाठ। अस्या भ्रान्तेरपि यथास्थानं टिप्पण्यां निर्देशोऽकारि। यथा—पृष्ठ ९३, टि० २; १२३, ४; २२२, १; २३३, ३; २७९, २; २९८, १; ३१९, ५; ३२५, ३ इत्यादिषु।

**१८— सायणेन मुधैव निर्दिष्टानां क्षीरमतानां निर्देशः**—सायणेन स्वकीयायां धातुवृत्तौ क्षीरस्वामिनाम्ना क्षीतरङ्गिणीनाम्ना वा बहूनि क्षीतरङ्गिणीविपरीतानि मतान्युद्धृतानि,तानि टिप्पण्यामस्माभिर्यथास्थानमालोचितानि। यथा—पृष्ठ ४१, टि० ४; ४२, ५; ६९, २; २०८, ५ इत्यादिषु।

**१९—क्षीरस्वामिवचनाभिप्राये सायणभ्रान्तिः**--क्वचित् सायणः क्षीरस्वामिवचनाभिप्राये ऽपि भ्रान्तः। तादृशभ्रान्तेरपि टिप्पण्यां निर्देशो विहितः। यथा—पृष्ठ १९१ टि० ४; एवमन्यत्रापि।

**२०—धातु-पाठालोचनम्**—बहुत्र टिप्पण्यामस्माभिर्धातूनां पाठास्यालोचनाऽपि व्यधायि। यथा पृष्ठ ३४, टि० ४; ३५, ५; ९१, ३; ९२, ४; १३६, ४; १४६, २; २०२, १; २०४, ५; २४१, १; २४२, २; २५५, ५; ३२१, २ इत्यादिषु।

**२१—पाणिनीयसूत्रार्थालोचनम्**—क्वचित् पाणिनीयसूत्रार्थालोनमपि विहितम्। यथा—पृष्ठ १५०, टि० ३।

**२२—उणादिसूत्र-पाठविचारः** उद्धृतोणादिसूत्रप्रसंगेन क्वचिदुदिसूत्रपाठस्याप्यालोचना कृता। यथा पृष्ठ २०२, टि० ४।

**२३—चान्द्रधातुपाठ-भेद-भ्रंशादिनिदर्शनम्** — क्षीरतरङ्गिण्यां चन्द्रनाम्ना निर्दिष्टाः केचन धातवो जर्मनमुद्रिते चान्द्रधातुपाठे पाठभेदेनोपलभ्यन्ते, केचन तत्र नैवोपलभ्यन्ते। तेषां टिप्पण्यामस्माभिर्यथास्थानं निर्देशो विहितः। यथा -पृष्ठ ९६, टि० ३; २३८, १; २४६, १; २९२, ३; २९३, १.४; २९४, २.४; २९७, ३; २९८, ६; ३००, ३; ३०४, ४; ३०६, १; ३०७, २ इत्यादिषु।

**२४—अर्थविशेषनिर्देशः**—अनेकत्रास्माभिः केषाञ्चित् प्रसंगादुपात्तानां शब्दानां विशिष्टार्थनिर्देशायापि प्रयतितम्। यथा—पृष्ठ ९०, टि० ४; १४४, ८; २५८, ३; ३०९, १ इत्यादिषु।

२५—**वैयाकरणमतमीमांसा**—बहुत्र टिप्पण्यामाधुनिकानां वैयाकरणानां मतान्यपि मीमांसितानि। यथा—पृष्ठ १०, ३; ६३, २; ६६, ४; १३७, ३; १३६, ७; १६०, १; २८८, १ इत्यादिषु।

२६—**प्राचीनसंस्कृतभाषायाः प्राचीनशब्दशास्त्राणां च विपुलता**—भगवतः पाणिने प्राक् संस्कृतभाषाऽतिविपुलाऽऽसीत्, उत्तरोत्तरं तस्या ह्रासः समजनि। तद्ह्रासानुगुणमुत्तरत्र शब्दशास्त्राणामपि संक्षेपोऽभूत्। तेन पाणिनेः प्राक्प्रयुज्यमानान् विलुप्तान् बहुविधान् धातुप्रातिपदिकप्रत्ययानिर्दिश्य तत्संबद्धरूपनिदर्शनायोत्तरवर्तिभिराचार्यैर्धात्वादिषु यानि वर्णागमादेशलोपादीनि कार्याणि विहितानि, तन्मीमांसायै यथास्थानं बहुविधाष्टिप्पण्यो लिखिताः। यथा—पृष्ठ २०, टि० ६; २४, ३; ३३, ३; ४८, २; ५१, १; ५३, १; ६१, २; ७३, १; ८२, ५; ८७, ३; ९८, ५; १३०, ५; १४२, ४; १४६, २; १५६, १; १७२, १; १८८, ५; २०९, ६; २२६, ५; २५६, ४; २९८, १; ३२७, ५।

एवं विविधाभिष्टिप्पणीभिरलंकृत्येदं क्षीरतरङ्गिणी-संस्करणं विदुषां पुरस्तात् समर्प्यते। आशासे विद्वांसो महाभागा हंसक्षीरनीरन्यायेनोचितं यथार्थं वा परिगृह्य, अनुचितमयथार्थं वा लिखितमुपेक्ष्यानुग्रहीष्यन्ति।

**क्षमा-याचना**—यथाशक्ति यथाबुद्धि च परिश्रमेण सम्पादितेऽप्यस्मिन् ग्रन्थे कार्यस्य द्वयोर्व्यासज्यवृत्तित्वाद्, अस्मत्प्रमादाद्, दृष्टिदोषाद् दूरदेशे मुद्रणात् मुद्रणकाले मात्राक्षरादीनां पाताच्च या अशुद्धयः संजाताः तासां कृते विदुषः पाठकान् क्षमां याचे। विशेषतो यत्र कंचिद्धातुं व्याचक्षाणेन ग्रन्थकृताऽन्यगणपठितस्य तस्य तत्सदृशस्य वा धातोर्निर्देशः कृतः, तत्रास्माभिस्तत्स्थाननिर्देशाय या धातुसूत्रसंख्या निर्दिष्टास्तासु बहुत्र व्यत्यासः समजायत। एष संख्याव्यत्यासः प्रायेण द्वित्रिसंख्यानामेव। अतो यत्र मुद्रितधातुसूत्रनिर्देशेऽन्यगणपठितं तद्धातुसूत्रं नोपलभ्येत, तर्हि ततोऽग्रे द्वित्राः संख्या अवलोकनीयाः। रुधादिगणस्थानां धातूनां निर्देशेऽधिकानां संख्यानामपि व्यत्यासः समभवत्। तदर्थं क्षमां याचमान इदं संस्करणं विदुषां करकमलेषु सादरमुपस्थाप्यते। [सं० २०१४ वि०] **विदुषां वशंवदो**

**युधिष्ठिरो मीमांसकः**



# क्षीरतरङ्गिणी

## [पाणिनिमुनिप्रणीत–धातुपाठ-व्याख्यानभूता]

## भ्वादिगणः

तरङ्गसुभगं[1] क्वणन्मधुपकिङ्किणीजालिनं[2],
करं प्रचलपुष्करारुणशिखाग्रमुल्लासयन्[3] ।
विभुर्जयति विघ्नजिद् भुवनपृष्ठमारोपयन्,
दुरन्तदुरितक्षयाद् विजयवैजयन्तीमिव ॥१॥

धातुवैषम्यशमनाद् वाङ्मयाप्यायनी सताम् ।
क्षीरस्वामिप्रसूतेयं वृत्तिः क्षीरतरङ्गिणी ॥२॥

सूत्रव्याख्या[4] कार्यजातं गणानाम्[5],

---

१. 'तरंग (भंग) सुभगं' इति संशोधितः पाठः। द्र० भण्डारकर ओरियण्टल रिसर्च इंस्टीटयूट (पूना), व्याकरणहस्तलेखसंग्रह, सन् १९३८, हस्तलेखसंख्या २२६, पृष्ठ १७६ ।

२. '०जालकम्' पाठान्तरम् ।

३. '० कणशिखं समुल्लासयन्' इति पाठान्तरम् । द्र० पूर्वोक्तो भ०ओ० रि० इं० हस्तलेखसंग्रहः, पृष्ठ १७६ ।

४. धातुसूत्रव्याख्येत्यर्थः । 'भू सत्तायाम्' इत्यादीनि पाणिनिवचनान्येव सूत्रत्वेनात्र व्यवहृतानि ग्रन्थकृता। अत एव 'भू सत्तायाम्, इत्यतः प्राक् 'प्रकृतयः सूत्र्यन्ते' (द्र० पृष्ठ ३ पं० ४) इत्युक्तम् । धातुसूत्रशब्दप्रयोगः क्षीरतरङ्गिण्यां १०। २७१ व्याख्यानान्तेऽपि द्रष्टव्यः ।

५. भ्वाद्यादिगणानाम् ।

सेट्त्वानिट्त्वोपग्रहा[1] इत्फलं[2] च ।
अष्टाध्याय्यां ये विशेषप्रयोगा,
धातोर्धातोर्दर्शितास्ते विशेषात् ॥३॥

य एव पारायणिकैर्दृष्टोऽत्र विवरीतृभिः ।
पन्थास्तेनैव याताः स्म कृत्वा गजनिमीलिकाम्[3] ॥४॥

न विचारिताः प्रयोगाः पारायणिकैर्हि तत्र संरब्धम् ।
सत्यार्धधातुके[4]ऽपि च षोढा[5] नोदाहृता प्रकृतिः ॥५॥

भग्नाः पारायणिकाश्चन्द्राद्या अपि च[6] यत्र विभ्रान्ताः ।
तान् धातून् विवरीतुं गहनमहो अध्यवसिताः स्मः ॥६॥

जाता विश्वसृजः क्रमेण मुनिभिः संस्कारमापादिताः,
शब्दाः संवसनादसाधुभिरपभ्रष्टाः स्थ भो भ्रातरः !
वाग्देव्याद्य[7] कृता मदेकशरणा मात्रा यतोऽ[8]स्मान्मया,

---

१. उपग्रहः परस्मैपदात्मनेपदे इति भट्टोजिदीक्षितः । नागेशस्तु 'उपदेश-व्यङ्ग्यं स्वार्थत्वादि । इह तत्प्रतीतिनिमित्तये परस्मैपदात्मनेपदे उपग्रहशब्देन लक्षणयोच्येते' इत्याह (उद्द्योत ३।१।८५) ।

२. '० त्वोपग्रहादेः फलं च' इति पाठान्तरम् । द्र० पूर्वोक्तो हस्तलेखः पृष्ठ १७७ ।

३. गजनिमीलिकाशब्दे उद्दालकपुष्पभञ्जिकादिवत् 'संज्ञायाम्' (अष्टा० ३।३।१०९) इति सूत्रेण ण्वुल् द्रष्टव्यः । यथा गजः सन्मुखागतं वस्तुजातम-गणयन् गच्छति तद्वद् यत्कार्यं क्रियते तद् गजनिमीलिकाशब्देनोच्यते ।

४. 'सत्याष्टधातुकेऽपि' इति पाठान्तरम् । द्र०—पूर्वोक्तो हस्तलेखः, पृष्ठ १७७ ।

५. शुद्धा, ण्यता, सनन्ता, णिचि सन्परा, यङन्ता, यङ्लुगन्ता च । तथा च स्वयं ग्रन्थकारो वक्ष्यति—'स्याच्छुद्धा प्रकृतिर्ण्यन्ता सनन्ता णिचि सन्परा । यङन्ता यङ्लुगन्ता च नातोऽन्या, निष्प्रयोजना' । (पृष्ठ ८ पं० ८,९) इति ।

६. 'च' पदं पूर्वनिर्दिष्टहस्तलेखानुसारं वर्धितम् । अास्माकीने पूर्वसंस्करणे नासीत् ।

७. 'वाग्देव्यास्य' इति पाठान्तरं पूर्वोक्ते हस्तलेखे, पृष्ठ १७७ ।

८. 'पात्रायते' इति पाठः पूर्वोक्ते हस्तलेखे, पृष्ठ १७७ ।

न्याय्ये वर्त्मनि वर्तनाय भवतां षड्वृत्तयः[1] कल्पिताः ॥७॥

अथ नित्यानां लोकवेदप्रसिद्धानां भवतीत्यादिशब्दानां स्वरार्थसाधनकालाद्यवबोधनार्थं प्रकृत्यादिविभागकल्पनया व्याख्यानम् इति[2] प्रकृतयः सूत्र्यन्ते[3]—

१. भू सत्तायाम्, २. उदात्तः । भू इति अविभक्तिकोऽयं निर्देशो भ्रान्तिनिरासार्थः, छान्दसो वा सुलुक्[4]—**छन्दोवत् सूत्राणि भवन्ति** (१।१।१ भाष्ये) इति । एवं सर्वत्र । सतो भावः सत्ता=अस्तित्वम् । भावो धात्वर्थसामान्यमिति यावत् । यदाहुः—

**सा नित्या सा महानात्मा तामाहुस्त्वतलादयः ।**
**प्राप्तक्रमा विशेषेषु क्रिया सैवाभिधीयते ॥**
**तां प्रतिपदिकार्थं च धात्वर्थं च प्रचक्षते ॥** इति ।
(वाक्यपदीय ३।१।३४,३५)

सा जातिरित्यर्थः । यद् **वैशेषिकम्—सामान्यं द्विविधम्, परमपरं च । परं सत्ता महाविषयत्वात्** (तु०—प्रशस्तपादभाष्य, उद्देशप्रकरण) । अपि च—

**धात्वर्थः केवलः शुद्धो भाव इत्यभिधीयते ।**

तथा—यत्रान्यत् क्रियापदं न श्रूयते तत्रास्तिर्भवन्तीपरः[5] प्रयो-

---

१. श्लोकोऽयं क्षीरस्वामिकृतायाममरकोशटीकायामपि दृश्यते । कास्ताः षड्वृत्तय इति न निश्चितं शक्यते वक्तुम् । केचनैवं प्रतिजानते—१. अमरकोशोद्धाटनम्, २. क्षीरतरङ्गिणी, ३. निपाताव्ययोपसर्गवृत्तिः, ४. अमृततरङ्गिणी, ५, निघण्टुवृत्तिः, ६. गणवृत्तिश्चेति । आसु प्रथमतृतीये वृत्ती मुद्रिते ।

२. 'अथ नित्यानां स्वरार्थसाधनकल्पनया व्याख्यानमिति' इत्येव पूर्वोक्ते हस्तलेखे पाठः, पृष्ठ १७७ ।

३. 'निर्दिश्यन्ते' पाठा० ।

४. 'सुब्लुक्' पाठा० ।

५. 'भवन्ती' इति वर्तमानकालस्य पूर्वाचार्यसंज्ञा । तेनायमर्थः—यत्राऽन्या क्रिया न प्रयुज्यते, तत्र वर्तमानकालिकोऽस्धातुः प्रयोक्तव्य इति । तथा चोक्तं महाभाष्ये (२।३।१)—'अस्तिर्भवन्तीपरः प्रथमपुरुषोऽप्रयुज्यमानोऽप्यस्तीति गम्यते' इति ।

क्तव्य[1] इति । अत एव माङ्गलिकत्वाच्च[2] पूर्वमस्य प्रयोगः ।

[धातूनामर्थनिर्देशोऽयं निदर्शनार्थं इति सौनागाः । यदाहुः-][3]

क्रियावाचित्वमाख्यातुमेकोऽत्रार्थः प्रदर्शितः[4] ।
प्रयोगतोऽनुमन्तव्या[5] अनेकार्था हि धातवः[6] ॥

तथा च भूरयं क्वचिद् अस्त्यर्थे वर्तते—बहूनि धनान्यस्य भवन्ति, सन्तीत्यर्थः । क्वाप्यभूतप्रादुर्भावे—क्षीरभोजिन्याः श्रुतंधरः[7] पुत्रो भवति, जायत इत्यर्थः । क्वचिद् अभूततद्भावात्मके सम्पद्यर्थे—पटोऽशुक्लः शुक्लो भवति, सम्पद्यत इत्यर्थः । अपि च तत्तदुपसर्गवशाद् धातोः स सोऽर्थः प्रकाश्यते । यथा प्रभवतीति स्वाम्यर्थः, प्रथमत उपलम्भश्च । पराभवति, परिभवति, अभिभवति इति प्रथमतः[8] तिर-

---

१. 'तत्रास्ति भवतीति परं प्रयोक्तव्यम्' पाठा० ।

२. भूशब्दः खलु महाव्याहृतिवाचक इति तस्य मङ्गलार्थकता युक्तेति कैयटः (महाभाष्यप्रदीप १।३।१) ।

३. कोष्ठान्तर्गतोऽयं पाठो मद्रासहस्तलेखेऽधिक उपलभ्यते । द्र० राजकीय-हस्तलेखपुस्तकालयसूचीपत्र, पृष्ठ १०४९, सं० ७९४ । चुरादावपि (सूत्र ३२५ व्याख्यानान्ते) अयं पाठोऽग्रिमः श्लोकश्चोपलभ्यते ।

४. चौरादिके उद्धरणे 'एकैकोऽर्थो निर्दिशितः' इति पाठान्तरम् ।

५. 'ऽन्ये मन्तव्या' पाठा० । तच्छन्दोभङ्गप्रसङ्गादसत् । 'पञ्चमं लघु सर्वत्र' इति हि तल्लक्षणं भवति । चान्द्रधातुपाठान्ते 'ऽनुगन्तव्या' इति पठ्यते ।

६. श्लोकोऽयं चान्द्रधातुपाठान्तेऽपि दृश्यते । काशकृत्स्नधातुपाठस्य कन्नड-टीकारम्भ एकः श्लोक इत्थं पठ्यते—

"निपाताश्चोपसर्गाश्च धातवश्च त्रयोऽप्यमी ।
अनेकार्थाः स्मृताः सद्भिः पाठस्तेषां निदर्शनम्" ॥ इति ।

अत्र 'सद्भिः' इत्यस्य 'इन्द्रचन्द्रापिशलिगार्ग्यगालवपौष्करैः' इत्यर्थः कन्नड-टीकायां विवृतः । द्र० काशकृत्स्नधातुव्याख्यानम्, पृष्ठ ३ ।

७. 'श्रुतधरः' पाठा० ।

८. 'प्रथमतः' इत्यनावश्यकं पदम् । द्र०—क्रियारत्नसमुच्चयः, पृष्ठ २२ । तत्र 'प्रथमतः' पदं नास्ति ।

स्कारः । सम्भवतीति तन्मात्रार्थः[1] । अनुभवतीति संवेदनम् । विभवतीति व्याप्तिः । आभवतीति भागावगतिः[2] । उद्भवतीत्युद्भेदः । प्रतिभवतीति लग्नकत्वम्[3] । [4]

उदात्त इत्यस्यानुदात्तत्वाभावेन **एकाच उपदेशेऽनुदात्तात्** (७।२।१०) इतीडागमनिषेधाभावात् सेट्त्वम्[5] । **आर्धधातुकस्येड् वलादेः** (७।२।३५) इति प्रत्ययस्य सेट्त्वेऽनिट्त्वे चोपचाराद् धातोस्तथा[6] व्यपदेशः ।

आत्मनेपदोभयपदानुबन्धाभावाच्च **शेषात् कर्तरि [परस्मैपदम्]** (१।३।७८) इति परस्मैपदम् । अपवादाभावाच्चौत्सर्गिकः शब्विकरणः । भवति । भवन् । भविता ।

निरनुनासिकत्वादूकारस्येत्संज्ञा नास्ति । अत एव उदात्त इत्याह, नोदात्तेदिति । यत् स्मृतिः—

---

१. तावतीमात्राऽत्र युक्तेत्यर्थः । तथा चैवं वाक्यं प्रयुज्यते—'प्रस्थमत्रौदनानां सम्भवति' । 'जन्मार्थ' पाठा० । अत्र 'जन्मार्थः' पाठान्तरं साधु स्यात् । द्र० क्रियारत्नसमुच्चयः, पृष्ठ २२ ।

२. 'भागापत्तिः' 'भागागतिः' पाठा० । 'भागागतिः' क्रियारत्नसमुच्चये पाठः ।

३. द्र० क्रियारत्नसमुच्चयः, पृष्ठ २२ । 'लग्नकः प्रतिभूः' इति धर्मशास्त्रव्याख्यासु व्याख्यायते ।

४. काशकृत्स्नधातुपाठस्य कन्नडटीकायां भू धातोरिमे ऽर्था निर्दिष्टाः—

"सत्ताया मङ्गले वृद्धौ निवासे व्याप्तिसम्पदोः ।
अभिप्राये च शक्तौ च प्रादुर्भावे गतौ च भूः ॥"

सत्तायां यथा—विरला भवन्ति सन्तः, सन्तीत्यर्थः । मङ्गले यथा—पुत्रस्य भूतिः कार्या, मङ्गलमित्यर्थः । वृद्धौ—गोत्रस्य भूतिः, वृद्धिरित्यर्थः । निवासे—भवनम् । व्याप्तौ—विश्वं भवति, व्याप्नोतीत्यर्थः (अस्मिन्नर्थे सकर्मकोऽयं धातुः, सम्पा०)। सम्पद्यर्थे—अदीर्घो दीर्घो भवति, सम्पद्यत इत्यर्थः । अभिप्राये—अयं भावः, अभिप्राय इत्यर्थः । शक्तौ—तन्तुर्भवति शक्नोतीत्यर्थः । प्रादुर्भावे—अक्रूरो भवति, जायत इत्यर्थः । गतौ—भूताः, गता इत्यर्थः' इति । द्र० काशकृत्स्नधातुव्याख्यानम्, पृष्ठ ३, ४ ।

५. 'सेट्कत्वम्' पाठा० । ६. 'तयोः' पाठा० ।

**दरिद्रा-जागृ-दीधीङाम् एकाचां च चिरेर्जिरेः ।**
**अदन्तोर्णोति-वेवीङां स्मर्यते नेत् 'तथा लङः ।।'**[2]

एधादीनां त्वेकारादेर्निरनुनासिकत्वादेव इत्संज्ञा नास्ति । यद्वैषामपि अकारादौ[3] लुप्त एकाच्त्वादेव सा न स्यात् ।

**कर्तरि कर्मव्यतिहारे, भावकर्मणोश्च** (१।३।१४,१३) आत्मनेपदम् । व्यतिभवते, अन्येन चिकीर्षितां भवनक्रियां करोतीत्यर्थः । अन्योऽन्यक्रियाविनिमये हि कर्मव्यतिहारे एकवचनं न स्यात् । भावे त्वकेवचनमेव, आख्यातस्यासत्त्ववृत्तित्वेन संख्याद्यभावात् । तर्हि एकवचनमपि कथम् ? द्व्यादिप्रतिपक्षैकत्वाभावेऽपि अभेदैकत्वात्[4] । **एकवचनमुत्सर्गः करिष्यते इति हि भाष्यम्** (१।१।३८) । चैत्रेण भूयते । अत एव मध्यमोत्तमपुरुषावपि न स्तः । भूयते त्वया, भूयते मया । अनुभूयते सुखम्, संवेद्यते इति । अर्थान्तरेऽत्र वर्तमानादकर्मकस्यापि सकर्मकत्वम्, सकर्मकस्यापि चाकर्मकत्वम् । यदाहुः—

**धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसङ्ग्रहात् ।**
**प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ।।**[5]

(वाक्यपदीय ३।७।८८, पृष्ठ २३)

---

१. द्र० क्षीरतरङ्गिणी १०।६—'तथा लण्डि इति स्मरणात् । अस्मन्मतेऽत्वत्र 'तथोलडः' इत्येव शुद्धः पाठो ज्ञेयः । तथैव च पुरुषकारे पाठोऽयमुद्धृतः (पृष्ठ ११६) ।

२. श्लोकोऽयं माधवीयधातुवृत्तौ क्षीरस्वामिनाम्नोद्ध्रियते । तत्र च द्विविधः पाठ उपलभ्यते । मैसूरसंस्करणे—'दरिद्राजागृदीधीङामनेकाच्त्वं चिरेर्जिरः । अदन्तोर्णोतिवेवीङां स्मर्यते णेस्तथोलडः' इति पाठः (भाग ४ पृष्ठ २२७) । काशीसंस्करणे तु—'दरिद्राजागृदेधीङोऽनिकाचश्च चिरिर्जिरिः । चकास्त्यूर्णोतिवेवीङः स्मर्यते णो तथोलडिः' इति पाठः (पृष्ठ ३७४) । स चात्यन्तं परिभ्रष्टः । उपरितन एव च पाठ उद्धृतः पुरुषकारे, पृष्ठ ११६ ।

३. 'ऋकारादौ' पाठा० ।     ४. 'अभेदत्वात्' पाठा० ।

५. श्लोकोऽयं भागुरिप्रोक्त इति मुग्धबोधटीकायां रामतर्कवागीशः (द्र० २८२ सूत्रस्य प्रमोदजननी टीका) ।

अर्थान्तरे कार्यान्तरे वर्तनाद्[1] धातोः सकर्मकोऽपि धात्वर्थोऽकर्मकः क्रियते । यथा—भारं वहति, उद्यच्छतीत्यर्थः; नदी वहति, स्रवतीत्यर्थः[2] । कर्मणो धात्वर्थान्तःप्रवेशादकर्मकत्वम्, यथा—**जीव प्राणधारणे** (धा० सू० १।३७५) जीवति; **नृती गात्रविक्षेपे** (धा० सू० ४।८) नृत्यति । अत्र प्राणगात्राख्ये कर्मणी धात्वर्थेनैव क्रोडीकृते । कर्मणः प्रसिद्धत्वादकर्मकत्वम्, यथा—देवो वर्षति; नेह—पार्थः शरान् वर्षति । प्रयोक्तुरविवक्षितत्वात् कर्मणः सकर्मकादपि भावे आख्यातम्[3], यथा— नेह पच्यते, नेह भुज्यते ।

अकर्मकत्वं च—किं करोति ? पचतीत्यादिव्यपदेशशेषादीनामपर्यनुयोज्यत्वात् किं करोति[4], भवनीत्यस्त्येव व्यपदेशः । सत्यम्, किन्तु क्रियाख्यकर्मनिबन्धनोऽसौ न बाह्यकर्मापेक्षः, भवनं करोतीत्यर्थावगमात् । क्रिया हि सर्वधातूनामन्तरङ्गं[5] कर्म । अत एव च क्रियाविशेषाणां कर्मत्वं स्मरन्ति—शोभनं घटो भवति[6] ।

कालभावाध्वदेशाश्च सर्वक्रियाव्याप्यत्वात् कर्मत्वेन सर्वधातूनामपरिहार्याः । मासमास्ते, गोदोहं स्वपिति, क्रोशं क्रीडति, कुरून्शेते[7] ।

सकर्मकाकर्मकव्यवहारः कथमिति चेत् ? द्रव्यकर्मनिमित्त इति ब्रूमः । **कर्मयोगामृततरङ्गिण्याम्**[8]—

> **प्रत्ययोऽकर्मकाद् भावे कर्मणि स्यात् सकर्मकात् ।**
> **सकर्मकाकर्मकत्वं द्रव्यकर्मनिबन्धनम् ॥** इति ।

---

१. 'वर्तमानात्' पाठा० । २. द्रष्टव्यम्—महाभाष्य १।३।२७॥

३. 'भावे प्रयोगः' पाठा० ।

४. पचतीत्यारम्य करोति पर्यन्तं क्वचिन्नास्ति ।

५. 'आन्तरम्' पाठा० ।

६. अयं भावः—द्विविधो हि धातुः, सकर्मकोऽकर्मकश्च तत्र सकर्मकधातूनां द्विविधं कर्म, अन्तरङ्गं बहिरङ्गं च । तत्र क्रियाविशेषणमभेदसंबन्धेनान्तरङ्गं कर्म । तद्भिन्न च बहिरङ्गम् । बहिरङ्गकर्मापेक्षयैव धातवः सकर्मका अकर्मकाश्च व्यपदिश्यन्ते । अकर्मकधातूनामन्तरङ्गमेव कर्म भवति ।

७. द्रष्टव्यम्— महाभाष्य १।४।५१॥

८. 'यन्ममैवामृततरङ्गिण्यामुक्तम्' पाठा० ।

[1]भट्टशशाङ्कधरस्त्वत्रैवं[2] गुरुमुष्टिं समादिक्षित्, यदाह—**द्विरूपो धात्वर्थः, भावः क्रिया च। अत एव क्रिया भावो धातुः,**[3] (कातन्त्र ३।३।९) इत्यभियुक्तैर्व्याख्यातम्। तत्र[4]—अपरिस्पन्दमानसाधनसाध्यो भावः, सपरिस्पन्दमान[5]साधनसाध्या क्रिया। अतो भावार्थो धातुरकर्मकः, क्रियार्थो धातुः सकर्मकः। भावक्रिययोश्च पर्यायत्वमदूरविप्रकर्षेण। धात्वर्थसामान्ययुक्तायुक्तत्वेऽत्र सूरयः प्रमाणम्। गतमेतत्। प्रकृतमनुसरामः।

स्याच्छुद्धा प्रकृतिर्ण्यन्ता सनन्ता णिचि सम्परा[6]।
यङन्ता यङ्लुगन्ता च[7] नातोऽन्या[8], निष्प्रयोजना॥

शुद्धोदाहृता।

णिच्—भवन्तं प्रयुङ्क्ते भावयति, करोतीत्यर्थः। यदाहुः—

---

१. भट्टशशाङ्कधरविषये ऽस्मदीयः 'सं० व्या० शास्त्र का इतिहास' (भाग २, पृष्ठ ४४६, ४४७, वि० सं० २०४१) नामा ग्रन्थो द्रष्टव्यः।

२ 'अत्रैव' पाठा०।

३. तुलना कार्या—क्रियावचनो धातुः, भाववचनो धातुः (महाभाष्य १।३।१)।

४. यद्वात्रैवं वाक्यान्वयः—अत एव क्रिया भावो धातुः इति। अभियुक्तैर्व्याख्यातं तत्र—अपरिस्पन्दमान०। ५ 'स्पन्दन' पाठा०।

६. णिचि पूर्वस्मिन् सति सन् परो यस्यां सा प्रकृतिरित्यर्थः।

७. तुलना कार्या—'प्रकृत्यन्तः सन्नन्तश्च यङन्तो यङलुगेव च। ण्यन्तोण्यन्तः सन्नन्तश्च षड्विधो धातुरुच्यते। निरुक्तवृत्तौ (२।२८) दुर्गाचार्येणोद्धृतः।

८. शुद्धेत्यादिक्रमेण षोढा प्रकृतिः। अतोऽन्या न विद्यते। ननु णिचि सम्परेतिवत् यङि यङ्लुकि वा सम्परा, सनि वा णिच्परेति कथं नोक्ताः? उच्यते, प्रयोगाभावादन्या निष्प्रयोजना। अत एव 'लिटि धातोरनभ्यासस्य' (अ० ६।१।८) सूत्रे भाष्यकृता 'अनभ्यासस्य' इति प्रत्याख्यातम्। अन्यथा यङन्ताद् यङ्लुगन्ताद्वा सनि, सनन्ताद्वा णिचि लुङि अनभ्यासस्येति ग्रहणाग्रहणे रूपभेदः स्यात्। भागवृत्तिकारस्तु यङन्ताद् यङ्लुगन्ताद्वा सनि पुनर्द्वित्वं मन्यते। अत्र विशेषस्तु अस्मदीये भागवृत्तिसंकलन एतत्सूत्रटिप्पण्यां द्रष्टव्यः।

नित्यं न भवनं[1] यस्य यस्य वा नित्यभूतता ।
न तस्य क्रियमाणत्वं खपुष्पाकाशयोरिव ॥

तेन भूतिषु कर्तृत्वं[2] प्रतिपन्नस्य वस्तुनः ।
प्रयोजकक्रियामाहुर्भावनां[2] भावनाविदः[3]॥ [इति]
(तन्त्रवार्त्तिक २।१।१ पृष्ठ ३७७,३७८ पूनासंस्क०)

भावयेज्ज्योतिरान्तरम्[4] इत्यनेकार्थत्वाद् ध्यायेदित्यर्थः ।

चुरादौ भू प्राप्तावात्मनेपदी (धा०सू० १०।२३२) भावयते पदम् प्राप्नोतीत्यर्थः । आ धृषाद् वा (धा० सू० १०।२०१) इत्यणिच्पक्षे— उत्साहाद् भवते लक्ष्मीम्[3] । भुवोऽवकल्कने (धा०सू० १० । १८५) णिच्—सर्पिषा सक्तून् भावयति, मिश्रयतीत्यर्थः । ण्यासश्रन्थो युच् (३।३।१०७) भावना ।

सन्—बुभूषति । श्र्युकः किति (७।२।११) सनि ग्रहगुहोश्च (७। २।१२) इति नेट् । सनाशंसभिक्षामुः[5] (तु० ३।२।१६८) बुभूषुः ।

ण्यन्तात् सन्—बिभावयिषति । ओः पुयण्ज्यपरे (७।४।८०)इत्यभ्यासस्येत्वम् ।

यङ्—बोभूयते । ङित्त्वात् तङ् ।

यङ्लुक्—बोभवीति, बोभोति । चर्करीतं[6] (धा० सू० २ । ८४)

---

१. 'नित्यभवनम्' पाठा० ।

२. 'तेनैव भूतिकर्तृत्वम्' पाठा०, '०भावानाम्' पाठा० । अपपाठाविमौ, मूलग्रन्थ (तन्त्रवार्त्तिके)ऽदर्शनात् ।

३. प्रतिपन्नस्य कादाचित्कत्वेन प्रमितस्य भूतिषु भवनेषु भवनक्रियासु । तस्य प्रयोजकक्रियां भावनामित्यन्वयः । ४. अनुपलब्धमूलम् ।

५. काशिकादिषु 'सनाशसभिक्ष उः' इति सूत्रपाठ उपलभ्यते । स्वामिना प्रायेण सूत्रेषु पञ्चमीस्थले षष्ठी पठ्यते । युक्तायुक्तत्वेऽत्र सूरयः प्रमाणम् ।

६ चर्करीतमिति यङ्लुकः प्राचां संज्ञा । यङ्लबन्तस्य चर्करीतं चर्करीतिश्च पूर्वेषां संज्ञा । क्रियारत्नसमुच्चय, पृष्ठ १९३ । चेक्रीडित इति यङन्तस्य प्राचां संज्ञा । भरतनाट्यशास्त्र १६।१२७ टीका (बड़ोदासंस्क०) । महा-

परस्मैपदम्[1]।

**विशेषास्तु—भुवः प्रभवः** (१।४।३१) अपादानम्—हिमवतो गङ्गा प्रभवति। **गातिस्थाघुपा** (२।४।७७) इति सिज्लुक्—अभूत्, **भूसुवोस्तिङि** (७।२।८८) गुणाभावः। **भुवो वुग् लुङ्लिटोः** (६।४।८८) अभूवन्, **आत**[2] (३।४।११०) एव सिज्लुगन्तान्नियमात् **सिजभ्यस्तविदिभ्यश्च** (३।४।१०९) इति झेर्जुस् नास्ति। बभूव बभूवुः—**इन्धिभवतिभ्यां च** (१।२।६) इति कित्त्वम्, **भवतेरः** (७।४।७३) इत्यभ्यासस्यात्वम्। भावकर्मणोरत्वं नेत्याहुः[3]—बुभूवे त्वया, अनुबुभूवे सुखम्।

**भृशादिभ्यो भुव्यच्वेर्** (३।१।१२) इति क्यङ्—अभृशो भृशो भवति भृशायते। आमः कृञमुप्रयुज्यते इति कृञः प्रत्याहारात्[4] कृभ्वस्त्यनुप्रयोगः[5]। कारयांबभूव।

---

भाष्ये (४।१।७८) 'चेक्रीयित' इति संज्ञा—'ङिति चेक्रीयते दोषः।' अत्र यङः पूर्वाचार्यसंज्ञेति कैयटः।

१. अदादिगणे चर्करीतं च (२।८४) इति पठ्यते। तेन यङ्लुकोऽदादित्वमात्रं विधीयते, न परस्मैपदत्वमपि। यद्यनेन परस्मैपदविधानमपि स्यात्तर्हि 'तेतिक्ते' (७।४।६५) इत्यत्र "तिजेर्यङ्लुगन्तस्यात्मनेपदं निपात्यते। नैतदस्ति प्रयोजनम्। सिद्धमत्रात्मनेपदमनुदात्तङित आत्मनेपदमिति। नियमार्थं तर्हि भविष्यति। अत्रैव यङ्लुगन्तस्यात्मनेपदं भवति नान्यत्रेति। क्व मा भूत्? बेभिदीति चेच्छिदीति" इति भाष्यकारवचनं प्रमत्तगीतं स्यात्। प्रायेण सर्व एव धातुवृत्तिकारा 'चर्करीत च' इत्यनेनादादित्वस्य परस्मैपदस्य च विधानं मन्वते।

२. अत्र जर्मनसंस्करणे 'अत एव' पाठ उपलभ्यते, स चापपाठः। अत्र "पूर्वेणैव सिद्धे नियमार्थं वचनम्। अत एव सिज्लुगन्तान्नान्यस्मादिति। अभूवन् प्रत्ययलक्षणेन जुस्प्राप्तः प्रतिषिध्यते" इति "आतः" (३।४।११०) सूत्रस्थं काशिकावचनमनुसन्धेयम्।

३. मतमिदं माधवीयधातुवृत्तौ प्रौढमनोरमायां च दूषितम्। वस्तुतस्तु 'भवतेरः' (७।४।७३) सूत्रे 'इक्श्तिपौ धातुनिर्देशे' (३।३।१०८ वा०) इति वचनात् धातुमात्रं गृह्यते न कर्तृविशिष्टम्, बभूवे त्वया, अनुबभूवे सुखमित्येव भवति। कैयटादयोऽप्यत्रैवानुकूलाः। क्षीरस्वामी त्वत्र काशिकाकारमतमाश्रितवान्।

४. अत्र ३।१।४० सूत्रस्थं भाष्यमनुसंधेयम्।

५. 'प्रत्याहारस्यानुप्रयोगः' पाठा०। स चापपाठः।

**भुवो भावे** (३।१।१०७) क्यप्—ब्रह्मणो भवनं ब्रह्मभूयम्। **भव्यगेय** (३।४।६८) इति कर्तरि—भव्यः पुमान्। **भावकर्मणोरचो यत्** (३।१।९७) भव्यं त्वया, अनुभव्यं सुखम्। **ओरावश्यके** (३।१।१२५) ण्यत्—भाव्यम्, अवश्यभाव्यम्। **लुम्पेदवश्यमः कृत्ये**[1] (द्र० काशिका ६।१।१४४) [मलोपः]। ग्रहादौ[2] (३।१।१३४ गणे) परिभावी;[3] भूतेऽभिभावी[4]। **भवतेर्णो वा वक्तव्यः**[5] (द्र० काशिका ३।१।१४३) भवतीति भावः, भवः। **आशिते भुवः करणभावयोः** (३।२।४५) खच्—आशितो भवत्यनेनेति आशितंभव ओदनः, आशितस्य भवनम् आशितंभवो वर्तते। **कर्तरि भुवः खिष्णुच्खुकञौ** (३।२।५७) आढ्यादिषु कर्तृषु च्व्यर्थेष्वच्वौ—अनाढ्य आढ्यो भवति आढ्यंभविष्णुः, आढ्यंभावुकः। **भुवश्च** (३।२।१३८) इतीष्णुच्, छान्दसत्वं नेष्टम्[6] भविष्णुः। **ग्लाजिस्थश्च ग्स्नुः**[7] (३।२।१३९) भूष्णुः; **क्ङिति च** (१।१।५) इत्यत्र गकारस्य चर्त्वभूतत्वाद्[8] गुणाभावः। **लषपतपद** (३।२।१५४) इत्युकञ्—भावुकः। **जिदृक्षि** (३।२।१५७) इतीनिः—परिभवी। **भुवः संज्ञान्तरयोः** (३।२।१७९) क्विप्— स्वयंभूः, प्रतिभूः।

---

१. भाष्ये वचनमिदमन्यथोपलभ्यते। भाष्योक्तानां त्रयाणां वार्तिकानां सग्रहात्मकः कश्चिच्छ्लोकोऽत्र काशिकायां पठ्यते। अत्र विशेषः 'संस्कृत व्याकरण शास्त्र का इतिहास' नामके ग्रन्थे (भाग १, पृ० ३४९ सं० ४) द्रष्टव्यः।

२. नन्दिग्राहिसूत्रे नन्दीति णिचा निर्देशः, ग्रहीति इका। अत एव स्वामिना विस्पष्टप्रतिपत्तये 'ग्रहादौ' इत्युक्तम्। नात्र सूत्रपाठभेद ऊहनीयः।

३. काशिकायां ग्रहादिगणे 'परिभावी परिभवी' इत्युभयं पठ्यते। तेन पक्षे वृद्ध्यभावो द्रष्टव्यः।

४. 'अभिभावी भूते' इति ग्रहादौ गणसूत्रं पठ्यते।

५. वार्तिकमिदं भाष्ये नोपलभ्यते। अत्र 'ग्रहः ग्राहः' इतिवद् व्यवस्थितविभाषा द्रष्टव्या।

६. 'कवीनाम्' इत्यधिकं क्वचित।

७. 'क्स्नुः' पाठा०। 'ग्स्नुः' इत्येव भाष्यसम्मतः पाठः। 'क्स्नुः' इत्यत्र गकारश्चर्त्वभूतो निर्दिश्यत इत्येव भाष्याभिप्राय इत्यन्ये।

८. अत्र 'स्नोर्गित्त्वान्न स्थ ईकारः क्ङितोरीत्वशासनात्। गुणाभावस्त्रिषु स्मार्यः श्र्युकोऽनिट्त्वं गकोरिति' (३।२।१३९ भाष्ये) इति श्लोकवार्तिकमनुसंधेयम्।

**विप्रसम्भ्यो ड्वसंज्ञायाम्** (३।२।१८०) विभुः, प्रभुः, संभुः । **मितद्र्वादित्वात्** (द्र० ३।२।१८० वा०) शम्भुः । **ऋदोरप्** (३।३।५७) प्रभवः, विभवः, अनुभवः । **श्रिणीभुवोऽनुपसर्गे** (३।३।२४) घञ्–भावः । नह्यप्रभावादिति प्रभावः[1] । **परौ भुवोऽवज्ञाने** (३।३।५५) वा घञ्—परिभावः, परिभवः । **कर्तृकर्मणोश्च भूकृञोः** (३।३।१२७) च्व्यर्थयोः खल्—अकृच्छ्रेणानाढ्येनाढ्येन भूयते स्वाढ्यं भवं भवता । **स्वाङ्गे तस्प्रत्यये कृभ्वोः** (३।४।६१) क्त्वाणमुलौ–पार्श्वतोभूयास्ते, पार्श्वतोभूत्वा, पार्श्वतोभावम् । **नाधार्थप्रत्यये च्व्यर्थे** (३।४।६२) नानाभूयास्ते, नानाभूत्वा, नानाभावम्; द्विधाभूयास्ते, द्विधाभूत्वा, द्विधाभावम् । **तूष्णीमि भुवः** (३।४।६३) अतूष्णींभूयास्ते, तूष्णींभूत्वा, तूष्णींभावम् । **अन्वच्यानुलोम्ये** (३।४।६४) अन्वग्भूयास्ते, अन्वग्भूत्वा, अन्वग्भावम् ।

**निरूढादयो यथा**– भवत्यस्यां सर्वमिति भूः । भूतिः भस्म । भूताः ग्रहाः[2] । भवत्यस्मिन् भवनं गृहम् ।

**कृत्परिशिष्टेऽपि**[3]—**भविष्यति गम्यादयः** (३।३।३) भावी भुवः **क्मिन्** (दश० उ० १।१६ कपाठः) भूमिः । **अदिशदिभूशुभिभ्यः क्रिन्** (उ० ४।६५) भूरिः । **अदि भुवो डुतच्** (उ० ५।१) अद्भुतम् । भुवः **क्युन्**[4] (तु० उ० २।८१) भुवनम् ॥१॥

[**अथ सेट आत्मनेपदिनः**]

३. **एध वृद्धौ** । इतः कत्थान्ताः (१।३१) पञ्चत्रिंशद् उदात्ता अनुदात्तेतश्च । तेनायम् एकारस्योदात्तत्वात् सेट्, अकारस्य चानुदात्तत्वाद् **अनुदात्तङित आत्मनेपदम्** (१।३।१२) इत्यात्मनेपदी । एधते ।

---

१. अविस्पष्टमिदं वाक्यम् । अत्र पाठान्तरमपि नोपलभ्यते । अत्र कदाचित् 'नह्यत्र प्रभवादिति प्रभावः' इति सम्यक् पाठः स्यात् । तथा सत्ययमर्थः–हि यतः सूत्रे 'अनुपसर्गे' इत्युपात्तं, ततश्चात्र प्रपूर्वकाद् भवतेर्न प्रभावशब्दोऽपि तु प्रकृष्टो भावः प्रभाव इति प्रादिसमासे भवति ।

२. अत एव भूतावेशग्रहावेशशब्दौ पर्यायवाचिनौ दृश्येते ।

३. कृत्परिशिष्टशब्देनात्रोणादिपाठो लक्ष्यते । उणादयो बहुलम् (३।३।१) इत्यस्यैव व्याख्यानभूतत्वादुणादिपाठस्य । पूर्वनिर्दिष्टा निरूढास्त्वष्टाध्यायिस्थाः ।

४. नेदं सूत्रस्वरूपम्, अपि तु प्रकृतिप्रत्ययनिर्देशमात्रम् ।

एधमानः । एधिता । **एत्येधत्यूठ्सु** (६।१।८९) इत्युपसर्गस्य एङि पररूपं नास्ति—प्रैधते । मा भवान् इदिधत् इति परत्वाद् ह्रस्वे कृते पुनःप्रसङ्गविज्ञानाद् द्विर्वचनम् । असुन्प्रत्यये (द्र० उ० ४।१८८) एधः इन्धनम् । **यथैधांसि समिद्धोऽग्निः**[1] (गीता ४।३७) इति । **अवोदैधौद्मप्रश्रथहिमश्रथाः** (६।४।२९) इतीन्धेर्घञि निपातनाद् अदन्तोऽपि एधोऽस्ति[2] । **गुरोश्च हलः** (३।३।१०३) इत्यप्रत्ययः—एधा ॥२॥

४. **स्पर्ध सङ्घर्षे** । संघर्षः पराभिभवेच्छा । स्पर्धते भ्रातुः[3]—भ्रात्रा सह स्पर्धां करोतीत्यर्थः । स्पर्धमानः । स्पर्धिता । **स्पर्धमानः स कृष्णम्** इति तु कृष्णं प्राप्येत्यध्याहारात्[4] । **अणावकर्मकात्** (१।३।८८) इति णेः परस्मैपदम्—स्पर्धयति । यङ्लुकि—लङीट्पक्षे (द्र० ७।३।९४) अपास्पर्धीत्, अनिटि अपास्पर्त् । **रात् सस्य** (८।२।२४) इति नियमात् संयोगान्तलोपाभावः । सिपि तु—सिपः **हल्ङ्याब्भ्यः** (६।१।६८) इति लोपे प्रत्ययलक्षणेन जश्त्वे, **सिपि धातोरुर्वा, दश्च** (८।२।७४-७५) इति रुत्वपक्षे **रो रि** (८।३।१४) लोपे दीर्घे (द्र० ६।३।१११) च अपास्पा इति रूपम्, अरुत्वपक्षे तु तिबन्तवत् । **अनुदात्तेतश्च हलादेः** (३।२।१४९) इति युच्—स्पर्धनः । **गुरोश्च हलः** (३।३।१०३) इत्यप्रत्ययः—स्पर्धा । बाहुलकादिष्णुच्[5] **मेरुं स्पर्धिष्णुनवान्यो धृतो नाको हिमाद्रिणा**[6] ॥३॥

---

१. 'यथैध: सुसमिद्धोऽग्निः' पाठा० । चिन्त्यमिदं मूलग्रन्थविरोधात् ।

२. इत्थमेवादन्तमेधपदममरटीकायाम् (पृष्ठ ८२) अपि साधितवान् स्वामी । भानुजिदीक्षितस्तु 'एधधातोरेव हलश्चेत्यनेन घञ्' निरवोचत् । अयमदन्तः पुंसि । उदाहृतं च मुकुटेन—"एधान् हुताशनवत इति कालिदासः" इति ।

३. पराभिभवस्य धात्वर्थेनोपसंग्रहाद् अकर्मकत्वम् । 'धात्वर्थेनोपसंग्रहात्' इत्युक्तत्वात् (द्र० पृष्ठ ५ पं० १४) ।

४. कृष्णमिति न स्पर्धेः कर्म, अपि तु प्रापेरिति भावः ।

५. अय भावः—यद्यपि स्पर्धधातोः 'इष्णुच्' साक्षान्न विहितस्तथापि 'कृतो बहुलम्' (३।३।११३ वा०) इति वचनात् समाधेयः । जयादित्यस्तु 'भुवश्च' (३।२।१३८) इत्यत्र 'चकारोऽनुक्तसमुच्चयार्थः—भ्राजिष्णुना लोहितचन्दनेन' इत्युक्तवान् ।

६. अनुपलब्धमूलमिदम् ।

५. **गाधृ प्रतिष्ठालिप्सयोर्ग्रन्थे च** । प्रतिष्ठा आस्पदम् । लब्धुमिच्छा लिप्सा । ग्रन्थनं[1] ग्रन्थः । अस्य पृथक्पाठो विरलप्रयोगार्थः[2] । गाधते । गाधिता । ऋदित्त्वात् **नाग्लोपिशास्वृदिताम्** (७।४।२) इति णौ चङि उपधाह्रस्वो नास्ति—अजगाधत् । **अजगाधम् अतलस्पर्शम्**[3] ॥४॥

६. **बाधृ रोटने** । रोटनं प्रतिघात[4] । बाधते । बाधिता । अबबाधत् । बाधनः । **गुरोश्च हलः** (३।३।१०३) इत्यप्रत्यये बाधा । बाधस्तु अचि (द्र० ३।१।१२४) । **अर्जिदृशिकम्यमिपंसिबाधाम्** (उ० १।२७) इति कुः हत्वं[5] च, बाहुः ॥५॥

७ **नाधृ नाथृ याच्ञोपतापैश्वर्याशीःषु** । उपताप उपघातः[6] । याच्ञोपतापयोरित्यर्थयोः क्रियात्वात् ऐश्वर्याशिषोस्तु द्योत्ययोर्धर्ममात्राभिधानात् । यथा घण्टा ध्वनति, श्वेतते प्रासादः, संयुज्यते, समवैति, अस्ति, गण्डतीति गुण-संयोग-समवाय-सत्ता-द्रव्याणि सिद्धानि आख्यातेन साध्यत्वेन प्रतीयन्ते । **पूर्वापरीभूतं भावमाख्यातेनाचष्टे**' (निरुक्त १।१) इति । नाधते । अननाधत् । तथा नाथते । **आशिषि नाथ** इत्युपसंख्यानात् (१।३।२१ वा०) आत्मनेपदम्, षष्ठी च सूत्रात्[7] (२।३।५५)—सर्पिषो नाथते—सर्पिर्मे भूयादित्याशास्ते ।

---

१. 'ग्रथनम्' पाठा० ।

२. पुरुषकारे (पृष्ठ २०) त्विमं पाठमुद्धृत्य "व्यभिचरति चैतत् 'पूयी विशरणे दुर्गन्धे च' इत्यत्र" इत्येवं दूषितः । वय तु पृथग्विभक्तिनिर्देशेनानुमिनुमो यदत्र कदाचित् 'प्रतिष्ठालिप्सयोः' इत्येव मूलपाठ आसीत् 'ग्रन्थे च' इत्ययमंशः पश्चात्तनैर्वर्धितः । यथा क्वचित् धातुपाठकोशेषु 'डुवप बीजसन्ताने' इत्यस्य स्थाने 'डुवप बीजसन्ताने छेदने च' इति दृश्यते । तुलनीयम्—यथा वपिः प्रकिरणे दृष्टः, छेदने चापि दृश्यते' (महाभाष्य १।३।१) ।

३ अमरकोश कां० १, वारिवर्ग, श्लोक १५ । ४ 'प्रतीघातः' पाठा० ।

५. अमरटीकायां (पृष्ठ १५१) क्षीरस्वामिना 'बहति बहते प्रयतते वा बाहुः, बाहृ प्रयत्ने' इत्युक्तम् ।

६. उपताप रोग इति वृत्तौ, उपघात इति तरङ्गिण्याम् (मा० धा० पृष्ठ ३७) ।

७. अयं भावः—आशिषि नाथः' इत्यानुपूर्विकमुपसंख्यानं सूत्र च द्वयमपि वर्तते । तत्रोपसंख्यानादात्मनेपदम्, सूत्राच्च षष्ठी विधीयते ।

अन्यत्र नृपं नाथति, याजते। रिपुं नाथति, स्वामी नाथति, ईष्टे। नाथोऽचि (द्र० ३।१।१३४)। नाथ[1] इत्यनुपसर्गस्य नियमान्नेहात्मनेपदम्[2]—

**एतन्मन्दविपक्वतिन्दुरुफलश्यामोदरापाण्डुर-**
**च्छायं हन्त पुलिन्दसुन्दरकरस्पर्शक्षमं लक्ष्यते[3]।**
**तत् पल्लीपतिपुत्रिकुञ्जरकुलं जीवाभयाभ्यर्थना**
**दीनं त्वामनुनाथते कुचयुगं पत्रांशुकैर्मा पिधाः[4]॥**

नोपदेशावेतौ। यथाहुः—सर्वे नादयो णोपदेशाः, नृति-नन्दि-नर्दि-नक्कि-नटि-नाधृ-नाथृ-नृवर्जम् (तु० महाभाष्य ६।१।६५) इति। **उपसर्गादसमासेऽपि णोपदेशस्य** (८।४।१४) इति णत्वं नास्ति—प्रनाथते। अननाथत्॥६,७॥

७. **दध धारणे**। दधते, दधेते, दधन्ते। यङ्लुकि—दादधीति, दादद्धि। **दधस्तथोश्च** (८।२।३८) इति भष्भावो नास्तिः, तत्र हि धाञो ग्रहणम्। **कौशिकस्तु दद धारणे[5] दध दाने** इति पाठं व्यत्यास्थात्। ददते मणिम्[6], दधते धनमर्थिभ्य इति। **युक्तायुक्तत्वे त्वत्र सूरयः प्रमाणम्। वयं हि मतभेदप्रदर्शनमात्रेणैव कृतार्थाः, मुनिमुख्यानां वाक्यं कथंकारं विकल्पयामः, वयमपि हि स्खलन्तोऽन्यैः कियन् नोपलप्स्यामहे**॥८॥

---

१. आशिषि नाथ इत्यात्मनेपदविधायके वार्त्तिके।

२. पाठोऽत्र भ्रष्ट इति प्रतिभाति। अत्र शुद्धः पाठ एवमूहनीय, 'नाथ इत्यनुपसर्गस्य नियमान्नेहात्मनेपदप्रतिषेधः' इति।

काव्यप्रकाश त्वग्रिमश्लोकः च्युतसंस्कृतिदोष उदाहृत्य "अत्रानुनाथत इति सर्पिषो नाथते इत्यादावाशिष्येव नाथतेरात्मनेपदं विहितम् 'आशिषि नाथः' इति। अत्र तु याचनमर्थस्तस्मात् 'अनुनाथति स्तनयुगम्' इति पठनीयम्" इत्युक्तम् (द्र० उल्लास ७)। अत्र क्षीरस्वामिनो वचनं युक्तम्, न मम्मटस्य।

३. 'वर्तते' पाठा०। ४. अनुपलब्धमूलमिदम्। काव्यप्रकाशे (उल्लास ७) उद्धृतः। तत्र स्वल्पः पाठभेदः।

५. निरुक्ते (२।२) 'दण्डो ददतेर्धारयतिकर्मणः' इत्युक्तम्। एतेन कौशिकपाठ एव ज्यायान् इति लक्ष्यते।

६. द्र० 'अक्रूरो ददते मणिम्' इति निरुक्तपाठः (२।२)।

९. **स्कुदि आप्रवणे।** आप्रवणम् उत्प्लुत्य गमनम्, आस्कन्दनं[1] वा[2]। उद्धरणमिति तु श्रीभोजः। **इदितो नुम् धातोः** (७।१।५८)—स्कुन्दते। सलोपे कुन्दम्[3] (द्र० उ० ४।९८) ॥९॥

१०. **श्विदि श्वैत्ये।** श्वेतगुणक्रियायाम्[4]। श्विन्दते प्रासादः। श्वेतगुण सिद्धोऽपि आख्यातेन साध्यैकरूप[5] उच्यते, कृता तु साध्योऽपि धात्वर्थः सिद्धतया पाकादिवत्, शब्दशक्तिस्वाभाव्यात् ॥१०॥

११. **वदि अभिवादनस्तुत्योः।** गुरून् वन्दन्ते—अभिवादयते। देवान् वन्दते—स्तौति। वन्दिता। वन्दनः। **शृवन्द्योरारुः** (३।२।१७३)—वन्दारुः। वन्दी मङ्खः[6] णिनिः। अचि (द्र० ३।१।१३४) तु वन्दी[7] हठहृता स्त्री। **घट्टिवन्दिविदिभ्य उपसंख्यानात्** (द्र० ३।३।१०७ वा०) युच्—वन्दना। उणादौ वन्दाकः[8] कामवृक्षः ॥११॥

१२. **भवि कल्याणे सुखे च।** कल्याणं श्रेयो मङ्गलादि, सुखम् आत्मगुणोदयः। भन्दते। भन्दिता। भदन्तः[9] श्रमणः। चुरादौ (१०।७०) भन्दयति ॥१२॥

---

१. 'आप्लवनम्' पाठा०।

२. आप्रवणमुत्प्लवनमुत्प्लुत्यगमनं वेति तरङ्गिणी इति धातुवृत्तौ (पृष्ठ ४१) उद्धृतः पाठः।

३. 'अमरटीकायां (पृष्ठ ९६) कुन्दति कुन्दम्' इत्युक्तं स्वामिना।

४. 'श्विदि श्वैत्ये' इत्युक्तम्, तत्र श्वैत्यस्य गुणत्वादक्रियात्वेन धात्वर्थाभावात् लक्षणया श्वेतगुणक्रिया लक्ष्यते। श्विन्दते प्रासादः, श्वेतो भवतीत्यर्थः।

५. 'साध्यैक्यम्' पाठा०।

६ 'वितालशब्दः प्रयोजनमेषां वैतालिका राज्ञोऽवसरपाठा मङ्गला [ ?, मङ्खा] ख्याः, प्रातर्बोधका इत्येके' इत्यमरटीकायाः (पृष्ठ १९५) क्षीरस्वामी सर्वत्र स्वामीपदेन क्षीरस्वाम्येव ज्ञेयः।

७. 'वन्यते याच्यते वन्दी हठाहृता स्त्री' इत्यमरटीकायां (पृष्ठ १९९) क्षीरस्वामी।

८. उणादौ 'आक' प्रत्ययः दृश्यते (उ० ४।१३), तेनेद पद सिध्यतीति स्वामिनोऽभिप्रायः। वन्दाकश्चीवरभिक्षुरिति हेमचन्द्रः (उणादिटीका ३४)।

९. भन्देर्नलोपश्च (उ० ३।१३०) इत्यनेन। प्रव्रजितार्थक इत्युज्ज्वलः। श्रमणशब्दो बौद्धभिक्षुवाचक इत्येके मन्यन्ते। तदसत्, बुद्धप्रादुर्भाव द्विसहस्र-

१३. **मदि स्तुति-मोद-मद-स्वप्न-गतिषु** । मोदो हर्षः, मदो दर्पः, स्वप्नेनालस्यमपि लक्ष्यते । **चन्द्रस्तु मदि जाड्ये** (१।३१५) इत्येवाह । मन्दते । मन्दिता । मन्दः । **मन्दिवाशिमथि** (उ० १।३८) इत्युरच्—मन्दुरा, वाजिशाला । **इषितिमिमदि** (दश० उ० ८।२६ 'क' पाठः) इति किरच्—मन्दिरम् । **स्फायितञ्चिवञ्चि** (उ० २।१३) इति रक्—मन्द्रः । मद्रो माद्यतेः[1] (द्र० उ० ४।१०२) मदिरा च । **अञ्जिमदिमन्दिभ्य आरन्** (उ० ३।१३४) मन्दारः[2] । **कुवरादयश्च** (उ० ५।४१) इति मन्दरः[3] । **खजेर् आकः** (उ० ४।१३) इति बाहुलकादाकः—मन्दाकः । मत्वर्थीये चेनौ (द्र० ५।२।११५)—मन्दाकिनी[4] ॥१३॥

१४. **स्पदि किञ्चिच्चलने** । स्पन्दते, स्पन्दिता । स्पन्दितुम्, स्पन्दनः, स्पन्दः ॥१४॥

१५. **क्लिदि परिदेवने** । परिदेवनं शोचनम् । क्लिन्दते । उदात्तेत्सु पाठात् (धा० सू० १।५८) क्लिन्दति । स्वरितेत्सु नोक्तः, कर्त्रभिप्रायेऽपि परस्मैपदार्थः[5] ॥१५॥

१६. **मुद हर्षे** । मोदते, मोदिता । **रलो व्युपधाद् हलादेः संश्च** (१।२।२६) इति विभाषा कित्त्वाद् मुदित्वा मोदित्वा, मुमुदिषते मुमोदिषते । मोदनः । **इगुपधज्ञाप्रीकिरः कः** (३।१।१३५) कुमुदम्[6] ।

---

वर्षप्राचीने शतपथब्राह्मणे (१४।७।१।२२) तस्य प्रयोगदर्शनात् ।

१. तुलनीया अमरक्षीरटीका पृष्ठ ४८ ।

२. अमरटीकायां (पृष्ठ १०१) 'मन्दानिर्यात्ति मन्दारः, मन्दा आरा अस्येति वा' इत्युक्त स्वामिना ।

३. 'मन्दरः सैरिभः शक्रभवनं खं दिवं नभः' इति त्रिकाण्डशेषः ।

४. अमरटीकायां (पृष्ठ १०१) 'मन्दमकति अवश्यम्' इति निरवोचत् स्वामी ।

५. अयं भावः—ये खलु धातवः स्वरितेतः (यथा पचादयः), ते कर्त्रभिप्राय आत्मनेपदिनो भवन्ति । अयं तु अनुदात्तेत्सु चोभयत्र पठित. । तेनानुदात्तेत्वाद् अकर्त्रभिप्रायेऽप्यात्मनेपदं भवति, उदात्तेत्वाच्च कर्त्रभिप्रायेऽपि परस्मैपदम् ।

६, कौ पृथिव्यां मोदत इति कुमुदम् ।

मोदयति[1] मोदकः । **इषितिमिमदिमुदि** (द० उ० ८।२६ क) इति किरच्—मुदिरो मेघः । **मुदिग्रोर्गग्गौ** (उ० १।१२८) मुद्गः । **स्फायितञ्चि** (उ० २।१३) इति रक्—मुद्रा । चुरादौ **मुद संसर्गे** (१०।२०९) मोदयति ।।१६।।

१७. **दद दाने** । ददते, ददेते, ददन्ते । ददिता, ददितुम् । **न शसदद-वादि-गुणिनाम्**[2] (तु० ६।४।१२६) इति लिटि एत्वाभ्यासलोपौ न स्तः—ददे ।।१७।।

१८. **ष्वद स्वर्द आस्वादने**[3] । आस्वादनं जिह्वया लेहः । चैत्राय स्वदते । षोपदेशत्वाद् **इण्कोः, आदेशप्रत्यययोः** (८।३।५७-५९) इति षत्वम्—असिष्वदत् । **स्तौतिण्योरेव षणि** (द्र० ८।३।६१) इति नियमात् षत्वं नास्ति—सिस्वदिषते, सिस्वादयिषतीति । **सः स्विदिस्वदिसहीनां च** (८।३।६२) षत्वाभाव । स्वदनः । **कृवापाजिमिस्वदी-त्यादिना** (द्र० उ० १।१) उण्—स्वादुः । चुरादौ **ष्वद संवरणे** (१०।२२८) स्वादयति । स्वर्दोऽषोपदेशः, यत् स्मृति[4]—**अज्दन्त्यपराः सादयः षोपदेशाः स्मि-स्विदि-स्वञ्जि-स्वपयश्च, सृपि सृजि-स्तृ-स्त्या-सेक्-सृवर्जम्** (तु० भा० ६।१।६४) स्वर्दते, असस्वर्दत् ।।१८,१९।।

---

१. 'मोदयते' पाठा० ।

२. काशिकादिषु 'न शसददवादिगुणानाम्' इति पाठः । तत्र गुणशब्देन भावितोऽकारो लक्षणया गृह्यते । स्वामिधृते 'गुणिनाम्' इति पाठे गुणः=गुण-शब्दो विधायकत्वेनास्यास्ति इति मत्वर्थीये इनि प्रत्यये शक्त्यैव सोऽर्थो लभ्यते । स्वामिधृतः पाठोऽन्यत्र न क्वचिदुपलब्धः । अत्र तत्त्वबोधिनी द्रष्टव्या (सि० कौ० भा० ३ पृ० १६९) ।

३ "संवरणे" इति क्षीरस्वामी इति धातुवृत्तौ (पृ० ४३) माधवः' । तथैव पुरुषकारोऽपि (पृष्ठ ४४) ।

४. स्मृतिपदेनात्र भाष्यमभिधीयते । तत्र चायं पाठः—'अज्दन्त्यपराः सादयः षोपदेशाः स्मिङ्-स्वदि-स्विदि-स्वञ्जि-स्वपयश्च, सृपि-सृजि-स्तृ-स्त्या-सेक्-सृवर्जम् (६।१।६४) । अज्दन्त्यौ सात् परौ येषां ते सकारादयः सर्वे षोप-देशा इत्यर्थः (उद्योत) ।

१९. **उर्द माने क्रीडायाञ्च** । मितिर्मान[1]मिति मुख्योऽर्थः[2] । चकारादास्वादनेऽपीति दुर्गः । ऊर्दते, **र्वोरुपधाया दीर्घ इकः, हलि च** (८।२।७६-७७) इति दीर्घः ।।२०।।

२०. **कुर्द गुर्द गुद क्रीडायामेव** । क्रीडानियमोऽत्र धातूनामनेकार्थत्वे लिङ्गम् । कूर्दते । स्फूर्जेर् (धा० सू० १।१४४) दीर्घोपदेशाद् र्वोरुपधाया दीर्घमनित्यमाहुः[3]—कुर्दते, कुर्दनः । गुर्दनः । गुर्दस्थाने[4] **दौर्गाः** खुर्द पेठुः । गुदस्थाने गुधेत्येके । **उपाध्यायास्तु** गुदक्रीडायां पायुविहार एव द्वौ धातू इति व्याख्यन्, तन्नेति **सभ्याः**[5] । गोदते-जुगुदिषते, जुगोदिषते । के (द्र० ३।१।१३५) गुदम् ।।२१—२३।।

२१. **षूद क्षरणे** । क्षरणं निरसनम् । सूदते । निसूदितः । चुरादौ **षूद निःस्रावणे**[6] (तु० १०।१८६) निसूदयति । नन्द्यादौ (द्र० ३।१।१३४) सूदनः । पचादौ सूदट्—(द्र० ३।१।१३४) सूदः[7], सूदी । सूददीपदीक्षां च[8] (तु० ३।२।१३५) इति युज् नास्ति—सूदिता ।।२४।।

२२. **ह्राद अव्यक्ते शब्दे** । अव्यक्तेऽनतिस्फुटवर्णे । ह्रादते दुन्दुभि, नूपुरह्रादः । पृषोदरादित्वाद् (द्र० ६।३।१०९) ह्रस्वे कृते ह्रदः ।।२५।।

२३. **ह्लादी सुखे च** । चशब्दादव्यक्ते शब्दे च । ह्लादते । णिचि

---

१. इह मानं सुखमिति सम्मतायाम् इति धातुवृत्तिः (पृष्ठ ४४) ।

२. अयं भावः 'क्रीडायाम्' इति गौणः क्वाचित्को वा । अत्र 'गाधृ' (१।५) धातोर्वृत्तिस्तत्रस्था टिप्पणी (२) च द्रष्टव्या (पृष्ठ १४) ।

३. अयंभावः—'उपधायां च (८।२।७८) इत्यनेन 'स्फुर्जा' इति ह्रस्वपाठेऽपि दीर्घत्व सिद्ध्यत्येव, किं दीर्घोपदेशेन । अतस्तद् व्यर्थं सद् 'र्वोरुपधायाः' इति दीर्घत्वस्यानित्यतां ज्ञापयति । काशिकायां गौरादिगणे (४।१।४१) 'कुर्द' 'गूर्द' इति शब्दौ पठ्येते । तत्र 'कुर्द' इत्यत्र दीर्घत्वाभावः, 'गूर्द' इत्यत्र च दीर्घत्वमेवेति ज्ञाप्यते ।

४. 'कुर्दस्थाने' पाठा० । ५. 'तन्नेति सभ्याः' इति क्वचिन्न ।

६. 'निरासे' पाठा० । चुरादौ 'षूद आस्रवणे' (१०।१६३) इति पाठ उपलभ्यते । ७. पाचक इत्यर्थः ।

८. 'सूददीपदीक्षश्च' इति काशिकादिषु पाठः ।

(द्र० ३।१।२६) आह्लादितः। **श्वीदितो निष्ठायाम्** (७।२।१४) नेट्, निष्ठायां ह्लादो ह्रस्वः (द्र० ६।४।९५) प्रह्लन्नः। क्तिनि अपीष्यते[1]—प्रह्लत्तिः ॥२६॥

२४ **स्वाद आस्वादने**। स्वादते। स्वादनः ॥२७॥

२५. **पर्द कुत्सिते शब्दे**[2]। पायुध्वनौ वर्ततेऽयम्। **अन्ये** निःशब्दमधोवातं मन्वाना अशब्द इत्याहुः। पर्दते। पर्दनः। **पर्देर्नित् प्रसारण**[3]**मल्लोपश्च** (उ० ३।८०) इति पृदाकुः सर्पः ॥२८॥

२६. **यती प्रयत्ने**। यतते। यतित्वा। ईदित्वाच्छ् **वीदितो निष्ठायाम्** (७।२।१४) इतीण् नास्ति—यत्तः। **यजयाचयतविच्छ**[4] (३।३।९०) इति नङ्—यत्नः। **यतेर्वृद्धिश्च** (उ० २।९७) इत्यृन्—याता देवरभार्या, यातरौ[5]। चुरादौ **यत निकारोपस्कारयोः** (१०।२०३) यातयति ॥२९॥

२७. **यतृ जतृ भासने**। योतते, अयुयोतत्। **कौशिकस्तु** ज्योतिःसिद्धये जुतिं ज्युतिं[6] मन्यते, ज्योतिश्च **द्युतेरिसिजादेश्च**

---

१. 'ह्लाद इति योगविभागः क्रियते, क्तिन्यपि यथा स्यात्, प्रह्लत्तिः' काशिका (६।४।९५) अत्रालोच्या।

२. किमर्थमयं संयोगान्तेषु उर्दादिषु न पठितस्तदाह सायणः—'संयोगान्तेषु उर्दादिष्वयं न पठितः शब्दविशेषार्थेन ह्राद्या (? ह्लादा) दिनापि साम्यात्। स्वादिस्त्वाकारवत् संयोगादित्वेन ह्लादाद्यनुरोधेन मध्ये पठितः, (धा० वृ० पृष्ठ ४५)। एवमनेकत्र धातुपाठक्रमविषये सायणेनोहः कृतः, स तत्रैवानुसन्धेयः, उदाहरणार्थमत्र सायणपाठ उपन्यस्तः।

३. प्रसारणशब्दोऽत्र सम्प्रसारणशब्देन समानार्थकः।

४ काशिकादिषु '० विच्छ' इति पाठः।

५. दीर्घाभाव दर्शयितुमस्योपन्यासः। तथा च स्मृतिः—'पिता माता ननान्दा ना सव्येष्ठृभ्रातृयातरः। जामाता दुहिता देवा न तृजन्ता इमे तृनन्त दश'।

६. अमरटीकायां (पृष्ठ ३२८) क्षीरस्वामिना "ज्योतते ज्योतिः" इत्युक्तम्। वस्तुतस्तु द्युतिरिव ज्युतिरपि स्वतन्त्रो धातुः। तस्य शतपथे (१।५।३।१) 'अवज्योत्यमानम्', कात्यायनश्रौत्रसूत्रे (४।१४।५) च 'अवज्योत्य' इति

जः (उ० २।११०) इति सिद्धम्। जुतिरिति दुर्गः—अजुतत् अजोतीत् ॥३०,३१॥

२८. **विथृ वेथृ याचने**[1]। वेथते, अविवेथत्। किति विशेषः— विथितः, वेथितः। **कौशिकस्तु** अविथुरसिद्धये यातने इत्याह, तन्न, **व्यथेः सम्प्रसारणं किच्च** (उ० १।३९) इति सिद्धेः ॥३२, ३३॥

२९. **श्रथि शैथिल्ये**। शैथिल्यमगाढता। श्रन्थते, **श्रन्थेश्चेति** वक्तव्याद्[3] (काशिका ६।४।१२२) एत्वाभ्यासलोपौ न स्तः, तत्र हि श्रन्थिरूपोपादानेन **श्रन्थ ग्रन्थ सन्दर्भे** (तु० ९।४५) इत्यस्य ग्रहणम्—शश्रन्थे, **अन्येऽत्राप्याहुः**। इदित्त्वादनुनासिकलोपाभावः, श्रेथे इति तूदाहरन् वृत्तिकृद् भ्रान्तः[4]। **नोपधात् थफान्ताद् वा** (१।२।२३) इति क्त्वा वा कित्—श्रन्थित्वा, श्रथित्वा। शिथिलः (द्र० उ० १।५३) श्लथः ॥३४॥

३०. **ग्रथि कौटिल्ये**। कौटिल्यं कुसृतिर्बन्धश्च। ग्रन्थते। ग्रन्थ्यते[5]। ग्रन्थना। ग्रथित्वा, ग्रन्थित्वा। ग्रथितः। **खनिकष्यज्यसिवसि** (उ० ४।१३९) इति ग्रन्थिः। क्र्यादौ **श्रन्थ ग्रन्थ सन्दर्भे**[6] (तु० ९।४५)

---

ल्यबन्तः प्रयोगोऽप्युपलभ्यते। यास्कीये निघण्टौ (१।१६) ज्योतते द्योतते इत्युभयं ज्वलतिकर्मसु पठ्यते। तथैव कौत्सव्ये निघण्टावपि (पृष्ठ ५) उभयोः पाठ उपलभ्यते। अर्वाक्कालिकैराचार्यैः स्वकालेऽस्याप्रयोगाद् धातुष्वस्य पाठो न कृतः, एतद्धातुनिष्पन्नं लोके लब्धप्रचारं ज्योतिःपदं तत्समानार्थकाद् द्युतधातोर्निष्पादितम्। उत्तरोत्तरं कथं धातुपाठस्य सङ्क्षेपोऽभूदिति काशकृत्स्नपाणिनिप्रोक्तयोर्धातुपाठयोस्तुलनया स्पष्टं प्रतीयते।

१. दशपादी-श्वेतवनवासि--कातन्त्र--हैम-कण्ठाभरणादिपठितेनोणादिसूत्रेण सह नेदं संवदति।

२. 'द्वितीया दान्तः, आद्यो धान्त इति कौशिकः, क्षीरस्वामिना त्वयं पक्षो दूषितः' इति धातुवृत्तावुक्तम् (पृष्ठ ४५)। सायणोक्तः पाठस्त्वत्र नोपलभ्यते। कदाचिदत्र ग्रन्थपातः संजातः स्यात्।

३. वार्तिकमिदं भाष्ये नोपलभ्यते।

४. 'इदित्त्वा........भ्रान्तः' पाठो धातुवृत्तौ (पृष्ठ ४६) उद्धृतः। 'अत्र वृत्तिकारः धातुवृत्तिकृद् उच्यते' इति सायण (धा० वृ० पृष्ठ ४६)।

५. इदित्त्वान्नलोपाभावं दर्शयितुं पदमिदमुदाहृतम्।

६. तरङ्गिण्यां क्र्यादौ 'श्रन्थ विमोचनहर्षयोः, मन्थ विलोडने, ग्रन्थ सन्दर्भे'

इत्युदात्तेतौ सकर्मकौ स्तः—श्रथ्नाति । ग्रथ्नाति । श्रथ्यते ग्रथ्यते, **अनिदितां हल उपधायाः क्ङिति** (६।४।२४) इत्यनुनासिकलोपः । श्रेथुः, ग्रेथुः, शश्रन्थुः, जग्रन्थुरिति[1] । एतौ चुरादौ **आधृषाद्वा** (१०।२३०) विकल्पितण्यन्तौ स्तः । श्रन्थयति, श्रन्थति, ग्रन्थयति, ग्रन्थति । कर्मकर्तरि **किरादिणिश्रन्थिग्रन्थिब्रूआत्मेनपदाकर्मकाणामिति**[2] यक्-चिणौ न स्तः—श्रन्थते स्वयमेव, श्रथ्नीते, अश्रन्थिष्ट । ग्रन्थते, ग्रथ्नीते, अग्रन्थिष्ट ॥३५॥

३१. **कत्थ श्लाघायाम्** । श्लाघा गुणारोपः । कत्थते, कत्थित्वा । विकत्थनः । **वौ कष-लस-कत्थ** ( ३ । २ । १५३ ) इति घिनुण्—विकत्थी ॥३६॥

३२. **उदात्ता अनुदात्तेतः** । व्याख्यातमेतत्[3] । भ्वादिगणे प्रथमः प्रघट्टकः तवर्गान्तप्रस्तावाद् एकप्रघट्टकेनोक्तः । एवं यथास्वमनुसर्तव्यम् ॥

[**सेटः परस्मैपदिनः**]

३३. **अत सातत्यगमने** । सातत्येन गमनं नित्यगतिः । इतः शुन्ध्यन्ताः (१।६०) पञ्चत्रिंशदुदात्ताः सेट उदात्तेतश्च परस्मैपदिनः । अतति, अतन्, अतिता । **न गतिहिंसार्थेभ्यश्च**(द्र०१।३।१५)इति व्यतिहारे तङ् नास्ति—व्यत्यतति । **अत्यविचमि** (उ० ३।११७) इत्य-

---

(४१—४३) इत्येवं पठ्यते । 'श्रन्थ ग्रन्थ सन्दर्भे' इत्यानुपूर्वीकस्तु चुरादौ (२२६) पठ्यते ।

१ अत्र कश्चित् पाठो नष्ट इति प्रतिभाति । ये तु 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनामिति वक्तव्यम्' (काशिका १।२।६) इति पठन्ति तेषां मतेऽपिलिटः कित्त्वेऽनुनासिकलोपे एत्वाभ्यासलोपौ श्रेथुः ग्रेथुः । ये तु तादृशवचनस्य भाष्येऽनुक्तत्वादप्रामाण्यं मन्यन्ते, तेषां मते शश्रन्थुः जग्रन्थुः इति रूपम् ।

२ अयं 'भूषाकर्मकिरादिसनां चान्यत्रात्मनेपदात्'(३।१।८७ वा०)इत्यस्य 'भारद्वाजीयाः पठन्ति णिश्रिश्रन्थिब्रूआमात्मनेपदाकर्मकाणाम्' (३।१।८९ वा०) इत्यस्य चार्थतोऽनुवादः ।

३. इदं वाक्यं प्रमाणयति यत् 'उदात्ता अनुदात्तेतः' इत्येवमादीनि वचनानि सूत्राण्येवेति ।

सच्—अतसी[1]। **ऋतन्यञ्जिवन्यञ्जि**(उ०४।२) इतीथिन्—अतिथिः। **अज्यतिभ्यां** (उ० ४।१३१) इतीण्—आतिः पक्षी। **पादे च** (उ० ४।१३२) पदातिः, **पादस्य पदाज्यति**[2] (तु० ६।३।५३) इति पत्। **सातिभ्यां मनिन्मनिणौ च**[3] (तु० उ०४।१५३) इति मनिण—आत्मा ॥३७

३४. **चिती संज्ञाने**। संज्ञानं संवित्तिः। चेतति। **श्वीदितो निष्ठायाम्** (७।२।१४) इति नेट्—चित्तम्। चितिः[4]। **रलो व्युपधाद्धलादेः संश्च** (१।२।३६) इति वा कित्त्वम्—चितित्वा, चेतित्वा; चिचितिषति, चिचेतिषति। क्विपि[5]-चित्। असुनि—चेतः (द्र० उ० ४।१८९)। **अनुपसर्गाल्लिम्पविन्द** (३।१।१३८) इति णौ शः[6]—चेतयः। चुरादौ **चित संवेदने**[7] (१०।१४४) इत्यात्मनेपदी-चेतयते। चेतनम्, चेतना ॥३८॥

३५. **च्युतिर् आसेचने**। आसेचनमीषत्सेकः[8]। च्योतति, च्योतिता। **इरितो वा** (३।१।५७) इति लुङि वाऽङ्—अच्युतत्, अच्योतीत्। च्युतित्वा च्योतित्वा, चिच्युतिषति चिच्योतिषति[9] ॥३९॥

३६.- **श्च्युतिर् क्षरणे**। क्षरण स्रवणम्। शस्तालव्योऽत्र, दन्त्यादित्वे हि—षट्श्च्योतन्तीति श्चुत्वस्यासिद्धत्वाड् **डः सि धुट्** (८।३।२९) इति धुडागमः स्यात्[10]। **द्रमिडाश्चुतिरि**त्यप्याहुः—चोतति, अचुतत्, अचोतीत। **कौशिकस्तु** श्चुतिमयोपधं मन्यते—श्चोतति, ॥४०॥

---

१. अमरटीकायां स्वामिना 'न तस्यते अतसी' इत्येवमभिहितम् (पृ० १४३)।

२. 'पादस्य पदाज्याति' इत्येवं काशिकादिषु पाठः।

३. श्वेत-दशपाद्याद्युणादिषु चकारो न पठ्यते।

४. 'चित्तिः' पाठे 'क्तिन्निष्ठावद् वक्तव्यम्' इतीडभावो द्रष्टव्यः।

५. 'सम्पदादिभ्यः क्विप्' (३।३।१०८) इति वार्त्तिकेन।

६. 'णौ' क्वचिन्नास्ति। ७. चुरादौ 'संचेतने' इति पठ्यते।

८. ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः। एतमातं ङितं विद्याद् वाक्यस्मरणयोरङित्॥ इति महाभाष्ये १।१।१४॥

९. विकल्पेन कित्त्वं 'रलो व्युपधात्०' (१।२।२६) सूत्रण द्रष्टव्यम्।

१०. 'शस्तालव्यो ····· स्यात्' पाठः प्रक्रियाकौमुद्यामुद्धृतः (पृष्ठ १२)। अत्र सायणः—'अत एव वृत्तिकारादिविरोधात् तालव्योष्मादिवादिनो स्वामि-

३७. **कुथि पुथि लुथि मन्थ हिंसासंक्लेशयोः**[1]। हिंसा प्राण्युपघातः, संक्लेशो बाधा। कुन्थति, कुन्थ्यते। **नोपधात् थफान्ताद् वा** (१।२।२३) कित्—कुन्थित्वा, कुथित्वा। क्र्यादौ **कुन्थ संश्लेषणे** (तु० ९।४६) कुथ्नाति। पुन्थति। लुन्थति। मन्थति, मथ्यते, मथितम्, मन्थित्वा, मथित्वा। **मन्थः** (उ० ४।११) इनिः किच्च—मथिन् मन्थाः। अचि—मन्थः। उणादौ मन्थाणः[2], शानच्च[3]। ज्वलादौ **मथे विलोडने** (१।५८७) मथति, मथः, माथः। क्र्यादौ **मन्थ विलोडने** (९।४४) मथ्नाति, मथ्यते। मथिमाथीत्यपरे अपि दीर्घाः[4]—मन्थति, मन्थ्यते; मान्थति, मान्थ्यते ॥४१—४४॥

३८. **षिधु**[5] **गत्याम्**। सेधति, सिषेध। परिसेधति गाम्, गमयतीत्यर्थः। **सेधतेर्गतौ** (८।३।११३) इति षत्वं नास्ति, अन्यत्र निषेधति पापात्। **उपसर्गात् सुनोति-सुवति** (८।३।३५) इति षत्वम्, सेधतिनिर्देशात् सिध्यतेर् (धा० सू० ४।८१) नास्ति—निसिध्यति। **उदितो वा** (७।२।५६) इति क्त्वो वेट् सिद्ध्वा, सिधित्वा, सेधित्वा, **रलो व्युपधात्** (१।२।२६) इति वा कित्त्वम्। **यस्य विभाषा** (७।२।१५) इति निष्ठायां नेट्—सिद्धः, निरनुबन्धपाठे तु सिधितः[6]। **रलो व्युपधाद्** (१।२।२६) इति वा कित्त्वम्—सिसिधिषति सिसेधिषति ॥४५॥

---

काश्यपावुपेक्ष्यौ' इत्याह (धा० वृ० पृष्ठ ४८)। दन्त्यादित्वे धुडागमस्तु न प्राप्नोति 'श्चुत्वं धुट्त्वे सिद्धं वक्तव्यम्' (८।२।६ वा०) इत्युक्तत्वात्।

१. सायणादयः 'मन्थ विलोडने' इति स्वतन्त्रं सूत्रं पठन्ति, अत्र च मन्थ स्थाने मथिम्। द्र० धा० वृ० पृष्ठ ४८।

२. 'मन्थानः' इति पाठोऽत्र युक्तः स्यात्। स च 'सम्यानच् स्तुवः' (उ० २।८१) इत्यनेन विहित आनच् बाहुलकाद् द्रष्टव्यः।

३. अमरटीकायामपि 'मथ्नातीति मन्थानः शानच्' (पृष्ठ २१६) इत्याह स्वामी। एतच्च भानुजिदीक्षितेन दूषितम् (अमर पृष्ठ ३२६)। शानच्प्रत्यये मुगभावे साधु। महाभारतादौ शानचि मुगभावो बहुत्रोपलभ्यते।

४. पुरुषकारे (पृष्ठ ७७) धातुवृत्तौ (पृष्ठ ४८) च स्मृतोऽयं पाठः।

५. इममुदितपाठमुदाहृत्य दूषितवान् सायणः (धा० वृ० पृष्ठ ४९)।

६. स्मृतोऽयं पाठो धातुवृत्तौ (पृष्ठ ४९)।

३९. **षिधू शास्त्रे माङ्गल्ये च** । शास्त्रं शास्त्रविषयं शासनम् । माङ्गल्यं मङ्गलविषया क्रिया[1] । अत्रैवायमूदित्, अर्थान्तरे पुनरुदित्[2] । ऊदित्त्वात् **स्वरतिसूति** (७।२।४४) इति वेट्—सेद्धा पुत्रं, शासितेत्यर्थः, सेधिता । लिटि क्रादिनियमान्[3] नित्यमिट् सिषिधिव । **वस्वेकाजाद्घसाम्** (७।२।६७) इति क्वसोर्नियमादिड् नास्ति—सिषिद्ध्वान् । दिवादौ **षिधु संराद्धौ** (४।८१) अनिट्—सिध्यति, सेद्धा ।।४६।।

४०. **खादृ भक्षणे** । खादति, अचखादत् । अदिखादिनीवहीनां प्रतिषेधात् (द्र० १।४।५२ वा०) कर्मसंज्ञा नास्ति—खादयति पिण्डीं चैत्रेण । **निन्द-हिंस-क्लिश-खाद**(३।२।१४६)इति वुञ्-खादकः ।।४७।।

४१. **खद स्थैर्ये हिंसायां च** । खदति । अचि (द्र० ३।१।१३४) खदा[4] । **अजिर-शिशिर** (उ० १।५४) इति खदिरः ।।४८।।

४२. **बद स्थैर्ये** । बदति, बद्यते । अमरादौ[5] बदरम्, बदरी । बदिर् ओष्ठ्यादिः । **वद व्यक्तायां वाचि** (१।७३५) इति तु दन्त्यौष्ठ्यादिः—वदति, उद्यते । पदेति **कण्ठः**—पदति ।।४९।।

४३. **गद व्यक्तायां वाचि** । गदति । **नेर्गद** (८।४।१७) इत्युपसर्गाण्णत्वम्—प्रणिगदति । **गदमदचरयम** (३।१।१००) इति गद्यम् । **नौ गदनदपठ** (३।३।६४) इति वा अप्—निगदः, निगादो घञ् (द्र० ३।३।१८), भिदादौ (द्र० ३।३।१०४) गदा । गदोऽचि (द्र० ३।१।१३४) । चर्चर-वर्वर-गद्गद-घुर्घुर-घर्घर-जर्जर-झर्झर-कर्कर-भर्भर-

---

१. 'शास्त्र········क्रिया' इत्युद्धृतमिदं पुरुषकारे (पृष्ठ ८७) स्मृतं च धातुवृत्तौ (पृष्ठ ५०) ।

२. द्र० 'षिधु गत्याम्' (१।३८) धातुसूत्रम् ।

३. कृसृभृभ्योऽनुदात्तेभ्यो लिटि इट् प्रतिषेधः सिद्ध एव, किं पुनर्निषेधेन, एवं तर्हि व्यर्थं सज्ज्ञापयति यदि लिटि इण्निषेधस्तर्हि क्रादिभ्य एव, नान्येभ्यः । अयमेव नियमः क्रादिनियम उच्यते ।

४. अचि स्त्रियां टाप् ।

५. 'विसरादौ' इति पाठा० । अमरादिर्विसरादिर्वा न क्वचिदुपलभ्यते गणः । अत्र कदाचित् 'उणादौ' इति युक्तः पाठः स्यात् । अत्र उ० ३।१३१ सूत्रव्याख्यानमालोचनीयम् ।

सर्सर-बुद्बुद-मुर्मुर-मर्मर-दर्दर-पुर्पुरादि[1] [ षु ] द्वित्वं पृषोदरादित्वात्[2] । चुरादौ **स्तनगदी देवशब्दे** (१०।२८५) इत्यदन्तः—गदयति ॥५०॥

४४. **रद विलेखने** । विलेखनमुत्पाटनम् । रदति । ल्युः (द्र० ३।१।१३४) रदनः । अचि (द्र० ३।१।१३४) रदो दन्तः ॥५१॥

४५. **णद अव्यक्ते शब्दे** । नदति । **उपसर्गादसमासेऽपि** (८।४।१४) इति णत्वम्—प्रणदति । **नौ गदनद** (३।३।६४) इति वा अप्—निनदः, निनादः । पचादौ (द्र० ३।१।१३४) नदट्—नदः, नदी । **अनुङ् नदेश्च** (उ० ३।५२)—नदनुः[3] । चुरादौ (१०।२२३) भासार्थः—नादयति ॥५२॥

४६. **अर्द गतौ याचने च** । अर्दति । यातने चेत्येके—अर्दितः खेदित इत्यर्थः । **तस्मान् नुड् द्विहलः** (७।४।७१) इति लिटि नुट्—आनर्द । **नन्द्राः संयोगादयः** (६।१।३) इति रेफो न द्विरुच्यते—अर्दिदिषति । ल्युः (द्र० ३।१।१३४) जनार्दनः । **अर्देः संनिविभ्यः** (७।२।२४) निष्ठायां नेट्—समर्णः । **अभेश्चाविदूर्ये** (७।२।२५) अभ्यर्णे सेने आसाते । चुरादौ **अर्द, हिसि हिंसायाम** (१०।२५५) अर्दयति ॥५३॥

४७. **नर्द गर्द शब्दे** । नर्दति । प्रनर्दति, णोपदेशत्वम् अतन्त्रम्,[4] परिगणनात्[5] । गर्दति । **शकशलिकलिगर्दिभ्योऽभच्** (तु० उ० ३।१२२)—गर्दभः ॥५४,५५॥

४८. **तर्द हिंसायाम्** । तर्दति । वितर्दिका वेदी[6] ॥५६॥

---

१. हस्तलेखेषु 'पूर्वादि' पाठः । स चाशुद्धः ।

२. पृषोदरादीनि यथोपदिष्टम् (६।३।१०९) इति सूत्रे पृषोदरादेराकृतिगणत्वाद् इति भावः ।

३. नदनुः=मेघः ।

४ एतेन ज्ञायते यत् क्षीरस्वामिनो धातुपाठे 'णर्द' इति णोपदेशपाठ आसीत् ।

५. 'सर्वे नादयो णोपदेशाः, नृति-नन्दि नर्दि-नक्कि-नाटि-नाथृ-नाधृ-नृवर्जम्' इति णोपदेशस्मृतौ नर्देः प्रतिषेधात् णोपदेशत्वमविवक्षितम् इति भावः ।

६. 'वेदिका' पाठा० ।

४९. **कर्द कुत्सिते शब्दे।** कर्दति । **कलिकर्द्योरमः** (उ० ४।८४) कर्दमः[1] ॥५७॥

५०. **खर्द दन्दशूके।** दन्दशूके गर्हितदशनयुक्तायां क्रियायाम्, दशनमात्रे वाच्ये साधननिर्देशः[2] साधनप्रधान-प्रयोग-समवायार्थः[3] । दन्तशूकपाठेऽपि दन्ताः शूका[4] अस्येति स एवार्थः पर्यवस्यति । खर्दति ॥५८॥

५१. **अति अदि बन्धने**[5] । अन्तति, आनन्त । अन्तकः । अन्दति, आनन्द । अन्दूदृन्भू (उ० १।९३) इत्यन्दूः पादशृङ्खला[6] । अदिपाठोऽनार्षः । अन्ये **अति इति बन्धने** इति पेठुः—इन्ताञ्चकार[7] ॥५९,६०॥

५२. **इदि परमैश्वर्ये।** परमैश्वर्यं परमेशनक्रिया । इन्दति । **ऋज्रेन्द्राग्रवज्र** (उ० २।२८) इति रक्[8]—इन्द्रः ॥६१॥

५३. **बिदि अवयवे** । एकदेशगतक्रियायाम् । बिन्दति । बिन्दुः, बाहुलकाद् उः । **विन्दुरिच्छुः** (३।२।१६९) इति वेत्तेर् (२।५७) निपातनम् ॥६२॥

५४. **णिदि कुत्सायाम्।** निन्दति । निन्दा । **वा निंसनिक्षनिन्दाम्**

---

१. अमरटीकायां (पृष्ठ ६२) क्षीरस्वामिना 'कृणोति कर्दमः' इत्युक्तम् ।

२. साधनं कारकं तस्य निर्देशः । काशकृत्स्नधातुपाठव्याख्याने (१।२२) तु, 'दशने' इत्येव पाठः ।

३. पाठोऽयं सायणेन धातुवृत्तौ (पृष्ठ ५२) स्मृतः ।

४. शूकः=श्लक्ष्णतीक्ष्णाग्रः ।

५. 'अत्र धनपालः—तान्तं द्रविडाः पठन्ति, आर्यास्तु दान्तमिति; उभयमिति मैत्रेय-स्वामि-काश्यप-सम्मताकारादयः' इति धातुवृत्तौ (पृष्ठ ५३) सायणः ।

६. 'पादकटकः' पाठा० ।

७. 'अतेः पाठोऽनार्षः । अन्ये अदि इति बन्धने इति पेठुः, इन्ताञ्चकार' इति पुरुषकारे (पृष्ठ ७५) उद्धृतः पाठः । क्षीरतरङ्गिण्यां तु 'अदि' पाठः, न तु 'अतेः' ।

८. इदं क्वचिन्न । रन् इति तु युक्तम्, रकः कृन्रन्प्रत्ययाभ्यां व्यवहितत्वात् । विशेषस्त्वत्र दशपाद्युणादिवृत्तौ इन्द्रपदटिप्पण्यां (पृष्ठ ३१६ टि० ५) द्रष्टव्यः ।

(८।४।३३) णत्वम्—प्रणिन्दिता, प्रनिन्दिता[1] । **निन्दहिंस** (३।२।१४६) इति वुञ्—निन्दकः ॥६३॥

**५५. टुनदि समृद्धौ** । नन्दति । ण्यन्ताल्ल्युः (द्र० ३।१।१३४) नन्दनः । शुद्धादच् —नन्दः । प्रज्ञादौ (द्र० ५।४।३८) नान्दः: नान्दी[2] । इनि—नन्दी । ण्वुल् (द्र० ३।१।१३३)—नन्दकः । **ट्वितोऽथुच्** (३।३।८९)—नन्दथुः । **नञि च नन्देः** ( उ० ३।९८) ऋन्—ननान्दा भर्तृभगिनी[3], ननान्दरौ । **रुहिनन्दिजीवि** (उ० ३।१२७) इति झच्—नन्दयन्तः । **अयामन्ताल्वाय्य** (६।४।५५) इत्यय्; णेरित्नुच्[4] (द्र० उ० ३।२९) नन्दयित्नुः । नन्दा[5] तिथिः[5] ॥६४॥

**५६. चदि ह्लादने[6] दीप्तौ च** । चन्दति । रक् (द्र० उ० २।१३) चन्द्रः । चन्द्रिका । **इषितिमिमदिमुदिखिदिभिदिछिदिमन्दिचन्दि** (दश० उ० ८।२६ क०) इति किरच्—चन्दिरः । **बहुलमन्यत्रापि** (उ० २।७८) युच्—चन्दनम् । **चन्देरादेश्च छः** (उ०४।२१८) असुंश्च—छन्दो गायत्र्यादि । बाहुलकाद्[7] अदन्तोऽपि स्वभावः छन्दानुवर्ति[8] ॥६५॥

---

१. तुचो रूपं लुटो वेति सन्दिग्धमिव । णिसि चुम्बने (क्षीर० २।१८) धातौ 'प्राणिंस्ते, प्रनिंस्ते' इति लटि णत्वविकल्पदर्शनादिहापि लुटो रूपद्वयमनुमीयते । 'वा निंसनिक्षनिन्दाम्' (८।४।३३) इत्यनेन कृत्येव णत्वविकल्पो भवति । आख्यातप्रयोगे णत्वविकल्पपक्षो धातुवृत्तौ (पृष्ठ ५४) सम्यङ् निराकृतः ।

२. नान्दी=मङ्गलपाठः ।  ३. 'पत्युः स्वसा' पाठा० ।

४. प्रकृतिप्रत्ययनिर्देशः । सूत्रं त्वेवं पठ्यते—स्तनि-हृषि-पुषि-गदि-मदिभ्यो णेरित्नुच्' ।

५ पाठोऽयं क्वचिन्नास्ति ।  ६. 'आह्लादने' पाठा० ।

७. 'कृतो बहुलम्' (३।३।११३ वा०) इति बहुलवचनेन । लीबिश-महोदयेन 'उणादयो बहुलम्' (३।३।१) इत्यस्य संख्यानिर्दिष्टा, न सा युक्ता ।

८. 'छन्दानुवर्ती' इति दीर्घपाठो युक्तः । तथा च तदीयामरटीकायां (पृष्ठ ३२८) पाठः—'छन्दति छन्दः पद्ये गायत्र्यादौ, अभिलाषेऽकारान्तोऽपि, यथा छन्दानुवर्ती' । वस्तुतः छन्दःपदं छदि (छन्द) धातोरपठितादेव निष्पादनीयम्, यथामरटीकायां स्वामिना व्युत्पादितम् । दैवतब्राह्मणेऽपि छन्दःपदनिर्वचनं 'छन्दांसि छन्दयन्तीति वा' (१।३) इत्येवोक्तम् । एतेनापि छदि (छन्द)

५७. **अदि चेष्टयाम्**। अन्दति ॥६६॥

५८. **कदि क्रदि क्लदि आह्वाने रोदने च**। कन्दति । कन्दो मूलम् । कन्दुः पाकस्थानम् । कन्दुकम् । कन्दरा[1] । क्रन्दति । आक्रन्दः । ल्युः (द्र० ३।१।१३४)—संक्रन्दनः । कदि-क्रदि-क्लदि एते त्रयोऽपि वैक्लव्ये (धा० १।५२३) इति घटाद्यात्मनेपदिनः ॥६७-६९॥

५९. **क्लिदि परिदेवने**। क्लिन्दति शोचतीत्यर्थः । आद्यो (१।११५) ऽनुदात्तेत्-क्लिन्दते । क्लिन्द्यते । क्लिन्दितः । दिवादौ **क्लिदू आर्द्रभावे** (४ १२८) क्लिद्यति, क्लिद्यते । क्लिन्नः ॥७०॥

६०. **शुन्ध शुद्धौ**। शुन्धति । शुधितः । दिवादौ **शुध शौचे** (४ ८०) शुध्यति, शुद्धः । चुरादौ **शुन्ध शौचकरणे** (१०।२५९) शुन्धयति, शुन्धितः ॥७१॥

६१. **उदात्ता उदात्तेतः** ॥

[सेट आत्मनेपदिनः]

६२. **शीकृ सेचने**। इतः श्लाघान्ताः (१।८०) त्रिचत्वारिंशदुदात्ताः सेटोऽनुदात्तेतश्चात्मनेपदिनः । शीकते, शीकिता, अशिशीकत् । शीकनम् । शीका । **अर्तिकमिभ्रमि** (उ० ३।१३२) इति शीकरः । चुरादौ **शीक आमर्षणे** (१०।२५३) शीकयति, अशीशिकत् ॥७२॥

६३. **लोकृ दर्शने**। लोकते, अलुलोकत् । लोकः । आलोकः । चुरादौ **लोकृ भासार्थः** (१०।२२३) विलोकयति । उलूक ऊर्ध्वलोकनात्[2] ॥७३॥

---

प्रकृत्यन्तरकल्पना युक्तैव । वैदिकनिघण्टौ (३।१४) 'छन्दति' पदम् अर्चतिकर्मसु पठ्यते । सायणस्तु चुरादौ 'छदि संवरणे' इत्यस्मात् 'छन्दति' 'छन्दः' रूपमाह (द्र० धातु० पृष्ठ ३८१) । क्षीरस्वामी तु चुरादौ 'छद संवरणे' (क्षीर० १०।३६) इत्यनिदितमाह । अतस्तन्मते 'छन्द' स्वतन्त्रो धातुरभ्युपेयः ।

१. कन्दरा=कृत्रिमगृहाकारो गिरिविवरः ।

२. अमरटीकायां (पृष्ठ १२७) क्षीरस्वामी—'उलति नेत्राभ्यां दहति उलूकः । ऊर्ध्वलोकनादिति निरुक्तम्' इत्याह । दशपाद्युणादिवृत्तौ (३।४६) 'उत्क्रम्य दृष्टिविषयमालोकयतीति उलूकः कौशिकः' इत्युक्तम् । अत्र हैमोणादिविवरणम् (सूत्र ६१) अपि द्रष्टव्यम् ।

६४. **श्लोकृ संघाते**[1] । संहनने, संहन्यमाने च । श्लोकते । श्लोकः । **श्लोकः पद्ये यशसि च**[2] ॥७४॥

६५. **द्रेकृ धेकृ शब्दोत्साहे** । शब्दस्यौद्धत्ये[3] । **चन्द्रो** वृद्धावित्याह[4] । द्रेकते, अदिद्रेकत् । उद्द्रेकः ॥७५,७६॥

६६. **रेकृ शङ्कायाम्** । शङ्कात्र संशयः । रेकते । **आरेकं संशयं प्राहुः**[5] ॥७७॥

६७. **शीकृ सेकृ स्रेकृ [स्रकि]**[6] **श्रकि श्लकि गत्यर्थाः** । शीकेरर्थभेदात् पुनः पाठः । अत एव **चन्द्रो** नैनमध्यैष्ट, **अन्ये** षेकृ इति विकल्पेन षोपदेशकार्यार्थं पेठुः[7]—सेकते, असिसेकत्, असिषेकत् । अत्रान्त्यौ तालव्यादी ॥७८-८३॥

६८. **शकि शङ्कायाम्** । शङ्का परत्रासः । शङ्कते । उणादौ (द्र० १।३६) शङ्कुः[8] । शङ्कुला आयुधम् ॥८४॥

६९. **अकि लक्षणे** । लक्षणं चिह्नम् । अङ्कते । घञि (३।३।१९) अङ्कः । **गुरोश्च हलः** (३।३।१०३) इत्यः—अङ्का । **न न्द्राः संयोगादयः** (६।१।३) इति नो न द्विरुच्यते[9]—अञ्चिकिषते । चुरादौ (१०।३५५) अङ्कयति । **ण्यासश्रन्थ** (३।३।१०७) इति युच्—अङ्कना खड्गादिलालना[10] । **मन्दि-वाशि** (उ० १।३८) इत्युरच्—अङ्कुरः ॥८५॥

---

१. संघातो ग्रन्थः । स चेदं पठ्यमानव्यापार इति स्वाम्यादयः, काश्यपादयस्तु ग्रन्थितृव्यापार इति मथ्नातिवत् सकर्मकः (धातुवृत्ति पृष्ठ ५५) ।

२. इदं वाक्यममरानुसारी (द्र० अमरकोश ३।३।२) ।

३. उद्धृतमिदं धातुवृत्तौ (पृष्ठ ५५) ।

४. द्रेकृ धेकृ वृद्धौ । चान्द्र धा० सू० १।३३६॥

५. श्लोकांशोऽयमनुपलब्धमूलः ।

६. पुरुषकारे पठ्यते(पृ०४६) । त्रिचत्वारिंशत्संख्यापूरणार्थमप्यावश्यकः ।

७. पुरुषकार इदमुद्धृतम् (पृष्ठ ४६) मतमिदं सायणेन स्मृतम् (धा० वृ० पृष्ठ ५५) ।

८. शङ्कुः जलजन्तुभेदः, स्थाणुः, शल्यं च ।

९ पुरुषकार इदमुद्धृतम् (पृष्ठ ४६), मतमिद सायणेन स्मृतम् (धा० वृ० पृष्ठ ५५) ।

१०. इदं क्वचिन्न, अस्पष्टमिदम ।

७०. **वकि कौटिल्ये** । वङ्कते । वङ्कः । वङ्क्र्यादौ (द्र० उ० ४।६६) वङ्क्रिः, पशुः[1] । वक्रम् वञ्चेरक्[2] (द्र० उ० २।१३) वङ्केस्त्वयुक्तम्[3] ।८६।।

७१. **मकि मण्डने** । मङ्कते[4] । मङ्कनः, मङ्कना वस्त्रम् । उणादौ (उ० १।४०) मकुरः[5] ।।८७।।

७२. **कक लौल्ये** । लौल्यं सतृष्णत्वं[6] चापल्यञ्च । ककते । काकः पृषोदरादिः (द्र० ६।३।१०९) ।।८८।।

७३. **कुक वृक आदाने**[7] । कोकते । के (द्र० ३।१।१३५) कुकः केकरः[8] । सञ्ज्ञायां कोकश्चक्रवाकः । उणादौ (द्र० १।५४) कोकिलः । वर्कते । वृकः । **णौ चङ्युपधाया ह्रस्वः** (७।४।१) उऋत् (७।४।७) वा[9] अवीवृकत्, अववर्कत् । उणादौ[10] वर्करः ।।८९—९०।।

७४. **चक तृप्तौ**[11] । चकते । चकितः । **कठिचकिभ्यामोरः** (दश० उ० ८।२९) चकोरः । **चकिरम्योरुच्चोपधायाः** (उ० २।१४) चुक्रम्[12] । **चक तृप्तौ प्रतिघाते च** (१।५३२) इति घटादौ मित्—चकयति।।९१

---

१. हस्तलेखेषु 'पशु.' इत्येव पठ्यते ।

२. नेदमुणादिसूत्रम्, अपि तु प्रकृतिप्रत्ययनिदर्शनमात्रम् ।

३. इदित्वादनुनासिकलोपाप्राप्तेः ।

४. इतोऽग्रे 'मङ्कः' इति क्वचिदधिकं पठ्यते ।

५. अमरटीकायां क्षीरस्वामी 'मुकुर' इति पठति । तथा चाह प्रक्रियासर्वस्वकारः—अकारं मुकुरस्यादावुकारं दर्दुरस्य च । बभाण पाणिनिस्तौ तु व्यत्ययेनाह भोजराट् ।। (प्रक्रियासर्वस्व उणादिप्रकरण १।४०) ।

६. 'गर्वः' पाठा० ।

७. 'अदने' पाठा० ।

८. (द्र० अमरटीका २।६।४९) 'एँचाताना' इति लोके प्रसिद्धः ।

९. वेति न सूत्रावयवः, जिघ्रतेर्वा (७।४।६) इत्यतो वेत्यनुवर्तते ।

१०. उज्ज्वलदत्तेन 'ऋच्छेररः' (उ० १।१३१) सूत्रे बाहुलकाद् मन्दरवर्करादिशब्दाः साधिताः ।

११. इदं सायणेनोद्धृतम् (धा० वृ० पृष्ठ ५६) ।

१२. चुक्रोऽम्लव्यञ्जनम् इत्यमरटीकायां (पृष्ठ ३४९) क्षीरस्वामी ।

७५. **ककि श्वकि त्रकि ढौकृ त्रौकृ ष्वक्क वस्क मस्क टिकृ टीकृ रघि लघि गत्यर्थाः**। कङ्कने। कङ्कः। श्वङ्किस्तालव्यादिः। ढौकते, अडुढौकत्। टौकृ इति दुर्गः—टौकते। ष्वक्कते। **सुब्धातुष्ठिवुष्वक्कीनाम् प्रतिषेधात्**[1] सत्त्वाभावः। टेकते। टीकते, अटिटीकत्। रङ्घते। बाहुलकात रघुः। लङ्घते। **लङ्घिवंह्योर्नलोपश्च** (उ० १।२९) इति लघु। चुरादौ भासार्थौ (१०।२२३) रङ्घयति, लङ्घयति ॥९२-१०३॥

७६ **लघि भोजननिवृत्तौ च**। चाद् गत्यर्थः—**नवज्वरो लङ्घनीयः** ॥१०४॥

७७. **अघि वघि मघि गत्याक्षेपे**। गत्याक्षेपो वेगगतिर्गमनारम्भो वा[2]। अङ्घते। उणादावघम्[3], वङ्क्र्यादौ (द्र० उ० ४।६६) अङ्घ्रि-रित्येके ॥१०५—१०७॥

७८. **मघि कैतवे च**। कैतवं व्याजः। मङ्घते। **श्वनुक्षन्**[4] (उ० १।१५९) इति मघवन् मघवा[5] इन्द्रः ॥१०८॥

७९. **राघृ लाघृ द्राघृ ध्राघृ[6] सामर्थ्ये**। राघते, लाघते। **निष्ठा-यामनुपसर्गात् फुल्लक्षीब** (८।२।५५) इत्युल्लाघः नीरुक्, [अन्यत्र] उल्लाघित इति स्यात्। द्राघिमन्ये न पेठुः ॥१०९—११२॥

---

१. 'सुब्धातुष्ठिवुष्वष्कतीनां प्रतिषेधः' इति महाभाष्ये (६।१।६४) पठ्यते।

२. 'गतौ गमनारम्भे चेति स्वामी' इति धातुवृत्तौ (पृष्ठ५७) पाठः।

३. स्वामिनामरटीकायां (पृष्ठ३६) 'न जहाति अघम्' इति व्याख्यातम्।

४. उणादिषु 'श्वन्नुक्षन्' इत्यपि पठ्यते। ङमो ह्रस्वादचि (८।३।३२) इति इत्यत्र नित्यपदं 'नित्यहमितः', 'नित्यप्रज्वलितः' इतिवद् आभीक्ष्ण्ये द्रष्टव्यम् (महा० १।१। आ०१)। तेन नुडागमविरहितपाठोऽपि साधुः।

५. मघवन् नान्तस्यैव 'मघवा' पदम् इति ज्ञापनाय प्रातिपदिकस्यापि निर्देशः। मघवान् इति तु मतुबन्तस्य भवति।

६. क्षीरस्वामिना चास्य रूपाणि न निर्दिष्टानि। सायणः 'धाघृ तवर्ग-चतुर्थादिमपि केचित् पठन्ति' (धा० वृ० पृष्ठ ५७) इत्युक्तवान्, न तु स्वामीति।

८०. **द्राघृ आयासे च।** आयासः कदर्थनम्[1]। कौशिकस्त्वायामे, दैर्घ्यविशिष्टायां क्रियायामित्याख्यत्[1]। **कालपनिके हि प्रकृति-प्रत्यय-विभागे द्राघिमादयः कस्मिंश्चिद् व्याकरणे धातोरेव[2] साधिताः, एवम् नेदिष्ठादयो नेदत्यादेः[3]**। द्राघते, अदद्राघत् ॥११३॥

८१. **श्लाघृ कत्थने।** कत्थनमुत्कर्षाख्यानम्। **श्लाघह्नुङ्स्था** (१।४।३४) इति सम्प्रदानम्– चैत्राय श्लाघते। अशश्लाघत् ॥११४॥

८२. **उदात्ता अनुदात्तेतः**॥

[सेटः **परस्मैपदिनः**]

८३. **फक्क नीचैर्गतौ।** नीचैर्गतिर्मन्दगमनम्, असद्व्यवहारो वा। इतः शिघ्यन्ताः (१।६५) पञ्चचत्वारिंशत् सेटः परस्मैपदिनश्च।

---

१. उद्धृतमिदं धातुवृत्तौ (पृष्ठ५७) प्रौढमनोरमायां (पृष्ठ ५५८) च।

२. 'धातुष्वेव' पाठा०।

३. नामानि सर्वाणि धातुजानीति नैरुक्तानां प्राचां वैयाकरणानां च मतम्। औत्तरकालिकैस्तु वैयाकरणैरुत्तरोत्तरं नाम्नां धातुजत्वं विहाय तद्धितान्तत्वं स्वीकृतम्। यथा गोमयपदस्य 'गोम उपलेपने' इति चौरादिकाद् (१०।३०१) धातोर्निष्पत्तौ सम्यगर्थसिद्धौ सत्यामपि 'गोश्च पुरीषे' (४।३।१४५) इत्यनेन गोप्रातिपदिकात् निष्पत्तिरुक्ता, तथा सति माहिषगोमये लक्षणा कर्तव्या भवति (धातुजत्वे तु न लक्षणाया आवश्यकता)। एवं वध्यशब्दस्य कृदन्तत्वेऽपि वार्त्तिककारेण 'तद्धितो वा' (महा०३।१।९७ वा०) इत्यनेन तद्धितान्तत्वमपि प्रतिपादितम्। अपि च 'होमी' पदं पाणिनीयलक्षणेन होमोऽस्यास्तीत्येवं तद्धितान्तं प्रतीयते, परन्तु यास्केन 'सन्त्यल्पप्रयोगाः कृतोऽप्यैकपदिकाः, यथा··· ··
······दर्वी होमी' (नि० १।१४) इत्यस्मिन् वाक्ये कृदन्तत्वं प्रतिपादितम्। अपि च काशकृत्स्नधातुपाठस्य कन्नडटीकायां कांचित् प्राचीनां टीकामश्रित्य बहूनां तद्धितप्रत्ययान्तत्वेन मन्यमानानां पदानां कृदन्तत्वं प्रतिपादितम्। यथा—द्युत धातोः द्योतनं द्योतनीयं द्युत्य द्यौत्यम् (१।२६५, पृष्ठ ९४) एवं रुचधातोः रौच्यम् (१।५६५, पृ०९४) मिदेः मेद्यं मैद्यम् (१।५६७, पृ० ९५), घुटेः घुट्यं घौट्यम्, रुटेः रोट्यं रौट्यम् (१।५६९, ५७०; पृष्ठ ९५) चोरयतेः चौर्यम् (९।१, पृष्ठ १८७) इत्यमेव कस्मिंचित् प्राचीने व्याकरणे द्राघिमादयो द्राघतेः, नेदिष्ठादयश्च नेदत्यादेर्निरुक्ताः स्युः। यथायथा हि लोके यौगिकार्थपरिज्ञानशक्तेरभावः संजातस्तथातथा शब्दा रूढत्वमापन्नाः। अत एव

फक्कति । फक्किता । फक्कितम् निगीर्णम् । फक्का, फक्किका[1] ।।११५

८४. **तक हसने** । सहन इति दुर्गः[2] । तकति ।।११६।।

८५. **तकि कृच्छ्रजीवने** । आतङ्कति । आतङ्कः[3] ।।११७।।

८६. **शुक गतौ** । शोकति । के (द्र० ३।३।१३५) शुकः[4] । उणादौ (२।२८) शुक्लशुक्रौ ।।११८।।

८७. **बुक्क भाषणे** । भषण इत्येके[5] । बुक्कति, श्वा । बुक्का सुगन्धद्रव्यपिष्टम्[6] ।।११९।।

८८. **खर्ख हसने** । खर्खति । खर्खा भगास्यम् । खक्खेति दुर्गः । खक्खटो दृढः ।।१२०।।

---

पाणिनिना यौगिकत्वेन प्रतिज्ञाता पाचकयाजकादयः शब्दा अप्युत्तरकाले रूढत्वेन स्वीकृताः । अतएव च कातन्त्रीयकृद्व्याख्यानारम्भे दुर्गसिंहेनोक्तम्—"वृक्षादिवदमी रूढा कृतिना न कृता कृतः । कात्यायनेन ते सृष्टा विबुद्धिप्रतिपत्तये" ।। इति ।। 'विबुद्धप्रतिबुद्धये' इति पाठभेदः ।

१. इदं क्वचिन्न ।

२. पुरुषकारे (पृष्ठ ४७)तु "क्षीरस्वामी सहन इत्युक्त्वा हसन इति दुर्गः" इत्येवं विपरीतमुद्धृतम् ।

३. अस्तिनास्ति......आदङ्क आतङ्क' इति तिबादिविभक्त्यन्तप्रतिरूपका [अव्यया इति शेषः] । हैमबृहद्वृत्ति १।१।३३ । अत्र लघुन्यासे—आदङ्केति—अत्र तकु कृच्छ्रजीवने इत्यस्य स्थाने दकुरिति पठन्ति ।

४. अत्राह सायणः—'अस्मिन् (शुक-धातौ) हि सति शुकवल्कोल्काः (उ० ३।४२) इति शुभेः कनि भलोपे शुकशब्दनिपातनमनर्थकं स्यात्, इगुपधलक्षणेन कप्रत्ययेनैव सिद्धत्वात्, तथा शुके रग्विधानेनापि शुक्रशब्दसिद्धे ऋज्रेन्द्रादौ शुचेर्निपातनमनर्थकं स्यादित्यस्य पाठोऽनार्ष इव प्रतीयत' इति । यद्युणादिपदसिद्धिं प्रमाणीकृत्य धातूनामनार्षत्ववचनं युक्तं स्यात्तर्हि बहूनामविगीतत्वेन पठितानां सायणेन स्वीकृतानां च धातूनामनार्षत्वं सिद्ध्येत । एवमेव सर्वैः प्राचीनैः पाणिनीयैरितरैश्च वैयाकरणैरविगीतत्वेन भ्वादौ पठितस्य कुञः सायणेन प्रत्याख्यानं कृतम् (एतद्विषये तत्प्रकरण एव विस्तरेण वक्ष्यते) । तस्माच्चिन्त्योऽयं पन्थाः ।

५. इदं पुरुषकारे (पृष्ठ ४६)उद्धृतम् । ६. क्वचिन्न ।

८९. **ओखृ राखृ लाखृ द्राखृ ध्राखृ शोषणालमर्थयोः**। ओखति। **एङि पररूपम्** [६।१।९४] प्रोखति। ओखाञ्चकार। उवोखेति भ्रान्तः[1]। मा भवान् ओचिखत्[2]। ऋदित्त्वादेवौदित्त्वं नास्ति साहचर्यात्[3]॥१२१—१२५॥

९०. **शाखृ श्लाखृ व्याप्तौ**। शाखति, अशशाखत्। शाखा। शाखोटो[4] वृक्षः॥१२६, १२७॥

९१. **उख उखि वख वखि मख मखि नख णख णखि रख रखि लख लखि इख ईखि वल्ग रगि लगि अगि वगि मगि तगि त्वगि श्रगि श्लगि इगि रिगि लिगि गत्यर्थाः**। ओखति, प्रोखति। उखा स्थाली। उखिरिदन्तोऽनार्षः, **न्यूङ्खा ओङ्काराः षोडश**[5]त्याद्यर्थमुन्नीतः। मखति। मखः। मङ्खति। मङ्खो बन्दी। द्विर्नखिर् णोपदेशविकल्पार्थः—प्रनखति, प्रणखति। एखति। इदनुबन्धत्वाद् इङ्खतीत्येके प्रेङ्खति। प्रेङ्खा। वल्गति। वल्गः, वल्गा। रङ्गति। रङ्गः। लङ्गति। लङ्गः खञ्जने पक्षिविशेषेऽयं रूढः। **लङ्घिकम्प्योरुपतापशरीरविकारयोः** (६।४।२८ वा०) नलोपाद् विलगितः पशुः। अङ्गम्। **अङ्गेर्नलोपश्च** (उ० ४।५०) इत्यग्निः। **अङ्गिमदिमन्दिभ्य आरन्** (उ० ३।१३४) अङ्गारः। **ऋतन्यञ्जि** (उ० ४।२) इत्यङ्गुलिः। **अङ्गेर्गुरिरश्च लो वा** (द्र० उ० १।४५) इति व्युत्पत्त्यन्तरेण **निरूढादीनां प्रकृतिप्रत्ययौ यथाकथंचित् कल्पनीयौ इति ज्ञाप्यते**[6]। वङ्गिर्गतिवैकल्ये रूढः—

---

१. कोऽत्र भ्रान्त इति न ज्ञायते। इजादिगुरुमत्त्वादामा भवितव्यम्।

२. 'ओखिखत्' पाठा०। अयं चापपाठः।

३. ऋकारौकारयोरित्त्वेऽनच्को धातुः स्यात्।

४ 'शाखोटकः' पाठा०।

५. द्र० काशिका १।२।३४॥ षोडश न्यूङ्खसंज्ञका ओकारा आश्वलायन-श्रौतसूत्रे (७।११) व्याख्याताः। ते तत्रैव द्रष्टव्याः। कथमुखिरनार्ष इति तु न व्यक्तीकृतं स्वामिना।

६. उणादौ निरूढानामेव शब्दानां स्वरवर्णानुपूर्वीज्ञानार्थं व्युत्पादनमित्याधुनिकानां वैयाकरणानां मतम्। स्वामीदयानन्दसरस्वती तु स्वोणादिकोशव्याख्यायां प्रतिपदं यौगिकार्थं रूढार्थं च प्रदर्शितवान्। तेन तन्मत उणादौ न केवल निरूढपदानामेव व्युत्पादनम्। नैगमरूढिभवं हि सुसाधु, नैगमा रूढिभवाश्च

वङ्गति, वङ्गः। **मङ्गेरलच्** (दश० उ० ८।१२३) मङ्गलम्। तगिः स्खलने रूढः—तङ्गति। इङ्गति, इङ्गितम्। आलिङ्गति, लिङ्गम्। चुरादौ **लिगि चित्रीकरणे** (१०।२०८)—लिङ्गयति। **द्रमिडानाम्** रिखिरपि[1]—रिङ्खति, रिङ्खणम् स्खलनम्[2]। अगीति च **चन्द्रः** (च० धा० १।३८) अङ्गति ॥१२८—१५५॥

९२. **त्वगि कम्पने च**। त्वङ्गति ॥

९३. **युगि जुगि वुगि[3] वर्जने**। युङ्गति। जुङ्गति। जोङ्गनी सुवर्णकारभाण्डम्। भुगि भर्जन **इत्येके** ॥१५६—१५८॥

९४. **दघि पालने च**। चकाराद् वर्जने च—दङ्घति ॥१५९॥

९५. **घग्घ हसने**। घग्घति। घग्घरी कलशी[4]। गादिरित्येके—गग्घति। **कण्ठो** द्वावप्याह ॥१६०॥

९६. **शिघि आघ्राणे**। आघ्राणं गन्धोपादानम्। शिङ्घति। **आणको लूशिङ्घिधाञ्भ्यः** (पशपाद्युणा० ३। २७) शिङ्घाणकः पीनसः[5] ॥१६१॥

९७. **उदात्ता उदात्तेतः** ॥

---

### [सेट आत्मनेपदिनः]

९८. **वर्च दीप्तौ**। इत ईजान्ता (१।११०) विंशतिः, सेटः आत्मनेपदिनश्च। वर्चते, वर्चिता। सुवर्चिका टङ्कनम्, सुवर्चला

---

कथ साधवः स्युरिति वदता महाभाष्यकारेण उणादौ न केवल रूढानामेव व्युत्पादनमपि तु नैगमानामपि, ते च नैगमा यौगिका एव, न रूढा इत्युभयमपि प्रतिपादितम्। अत्र विशेषोऽस्मत्संपादितायां दशपाद्युणादिवृत्तेरुपोद्घाते (पृष्ठ २०, २१) द्रष्टव्यः।

१. 'द्रमिडास्तु रिखमपि पठन्ति' इति सायण आह (धा० वृ० पृष्ठ ५१)।

२. 'लेखनम्' पाठा०।

३. 'रुगि' इति मैत्रेयसायणादयः।

४. 'कलशिः' पाठा०।

५. प्रतिश्यायस्तु पीनस इत्यमरः (२।७।५१)।

६. पूर्वप्रघट्टकान्त्यायां ११४ धातुसंख्यायामेतत्प्रघट्टकस्य ८३ सूत्रव्याख्यो-क्तायाः ४५ धातुसंख्यायाः सम्मेलने (११४+४५=) १५९ संख्या भवति। परमत्र १६१ जायते। अतोऽत्र कौचिद् द्वौ धातू अधिकौ पठितौ।

शाकम् । असुन् (द० उ० ६।४६) वर्चः—अशुचितेजसी ।।१६२।।

९९ षच सेचने । सचते, असीषिचत् । सितनिगमिसिचिमसि (तु० उ० १।६९) इति तुन्—सक्तवः । षच समवाये (धा० सू० १।२८४ व्याख्या) अस्मात्—सचति, सचिवः[1] ।।१६३।।

१००. लोचृ दर्शने । लोचते, अलुलोचत् । आलोचितः, लोचनम् । लोचकः—स्त्रीशिरोवस्त्रम्, शिरस्त्रञ्च । चुरादौ भाषार्थः (१०। २२३) आलोचयति, आलोचना ।।१६४।।

१०१. शच व्यक्तायां वाचि । तालव्यादिः । शचते । शची ।।१६५

१०२[2] श्वच श्वचि गतौ । श्वचते, श्वञ्चते[2] ।।१६६, १६७।।

१०३. कच बन्धने । कचते । कचः, काचः । काचरः । कच शब्द उदात्तेत्[3]—कचति । खच इति लौकिकोऽस्ति[4] ।।१६८।।

१०४. कचि दीप्तिबन्धनयोः । कञ्चते, कञ्च्यते । काञ्चनम् । काञ्चिकम् । काञ्ची । आद्यः कचिरिदित् परस्त्वनिदिदित्येके[5] ।।१६९

१०५. मच मुचि कल्कने । कल्कनं दम्भः क्वथनञ्च[6] । मचते । मुचेति चन्द्रः (तु० च० धा० १।३५९) मोचते । मुञ्चते[7], मुञ्च्यते ।

---

१. क्षीरतरङ्गिण्यां नायं क्वचित् साक्षात् पठ्यते । 'षप समवाये' (१। २८४) इत्यस्य व्याख्याऽत्र द्रष्टव्या । सायणस्तु डुपचष् पाके (१।७२२) इत्यस्मादनन्तरं 'षच समवाये' इति पठति (धा० वृ० पृष्ठ २०२) ।

२. इतोऽग्रे 'शचि श्वचीति कौशिकः' इत्यधिकः क्वचित् पाठः ।

३. अग्रिमेषु परस्मैपदिषु चान्तेषु धातुषु 'कच' धातुः क्षीरतरङ्गिण्यामन्यासु च धातुवृत्तिषु न पठ्यते ।

४. धातुपाठेष्वपठितोऽपि लोके प्रयुज्यत इत्यर्थः । अपरे लौकिकशब्दस्य प्राकृत इत्यर्थः प्रतिजानते । तन्न, संस्कृतशब्दानां साधुत्वान्वाख्याने प्राकृतानामपभ्रंशभूतानां शब्दानामन्वाख्यानस्य प्राप्तेरसंभवात् ।

५. सायणस्तु 'कचि काचि दीप्तिबन्धनयो.' इत्येवं पठति । मैत्रेयस्तु काचि न पपाठ । काञ्चनं काञ्ची इत्युभयत्रान्येषामपि दृश्यते (६।३।१३७) इति दीर्घत्वमाह (धातुप्रदीप पृष्ठ १९) ।

६. पाठोऽयं धातुवृत्तौ (पृष्ठ ६१) उद्धृतः । मैत्रेयस्तु कल्कनं दम्भः शाठ्यं चेत्याह (धा० प्र० पृष्ठ १९), दीक्षितस्तु कथने चेत्याह (सि० कौ०)।

७. उद्धृतमिदं पुरुषकारे (पृष्ठ ३९) ।

तुदादौ **मुच्लृ मोक्षणे** (६।१३९) मुञ्चति, मुच्यते ।।१७०, १७१।।

१०६. **मचि धारणोच्छ्रायपूजनेषु** । मञ्चते । मञ्चः । उणादौ मञ्चुका खट्विका । मञ्चिकेति **सभ्याः** ।।१७२।।

१०७. **पचि व्यक्तीकरणे** । पञ्चते, प्रपञ्च्यते । अच्—पञ्च । पञ्चिका[1] न्यासः । पञ्च । पञ्चालाः । घञ्—पङ्कः । चुरादौ **पचि विस्तारवचने** (१०।११९) प्रपञ्चयति । **एरजण्यन्तानाम्**[2] इत्यस्य प्रायिकत्वात् प्रपञ्चः, अस्य तु घञि कुत्वं स्यात् । **दुर्गो**ऽदन्तमाह ।।१७३।।

१०८. **ष्टुच प्रसादे** । स्तोचते । घञि—स्तोकः[3] ।।१७४।।

१०९. **ऋज गतिस्थानार्जनोर्जनेषु**[4] । ऊर्जनम् प्राणनम् । अर्जते, उपार्जते, आनृजे । **अन्ये** तूद्रिक्तोद्रेकार्थं हलादिमेनं मन्यन्ते[5] ।।१७५।।

११०. **ऋजि भृजी भर्जने** । भर्जनं पाकप्रकारः । ऋञ्जते, आनृञ्जे[6] । उणादौ (द्र० ४।२२) ऋजीकं पिष्टपचनम् । भर्जते । घञ्

---

१. पञ्चिका स्थाने पञ्जिका शब्दोऽपि प्रयुज्यते ।

२. महाभाष्ये नैतादृशं किञ्चिद् वचनमुपलभ्यते । काशिकाकारोऽपि 'उञ्छादीनां च' (६।१।१६०) सूत्रवृत्तौ 'एरजण्यण्तानाम् इति वचनाद्' इत्येवं स्मरति । मूलमस्य मृग्यम् ।

३. 'स्तौति स्तोकम्' इति क्षीरस्वाम्यमरटीकायाम्(पृष्ठ २४९) । निरुक्ते (२।१) तु 'अथाप्याद्यन्तविपर्ययो भवति स्तोका रज्जुः सिकता तर्क्विति' इति ब्रुवता यास्केन श्चुतिर् क्षरणे इत्यस्मात् स्तोकपदनिष्पत्तिरुक्ता ।

४. 'ऊर्जनेष्विति क्षीरस्वामिधनपालशाकटायनाः' (धातु० वृत्ति पृ० ६२)। तथैव पुरुषकारे (पृष्ठ ५८) ऽपि । प्रौढमनोरमायां(पृ० ५५९) 'क्षीरस्वामिप्रभृतयस्तु अर्जनेष्विति पेठुः' इति मुद्रितोऽपपाठो बोध्यः ।

५. 'ऋज' स्थाने 'रिज' इत्यर्थः ।

६. 'आनृजे (?, आनृञ्जे) इति सम्मतातरङ्गिण्योः, तदसत् । नुम्विधावुपदेशिवद्वचनात् । अत एव काश्यपमैत्रेयादयः आममेव (ऋञ्जांचक्रे) सर्वं उदाजह्रुः' इति सायणः (धा० वृ० पृ० ६२) । मैत्रेयस्त्वाह—'नुमागमनिमित्ताऽपि यस्य गुरुमत्ता ततोऽप्यां भवति, यथा इन्दाञ्चकार । केचित्तु आनृञ्जे इति प्रत्युदाहरन्ति । तत्रेन्धिभवतिभ्यां च (१।२।६) इन्धिग्रहणेनानित्य आम् इति ज्ञापितम् । तदनित्यमाम् इति न भवतीति यथाकथञ्चित्

(द्र० ३।३।१६) भर्गो रुद्रः। ईदित्वाद् (द्र० ७।२।१४) भृक्तः[1]। भृष्ट भ्रस्जेः (६।४) रूपम्। अबीभृजत्, अबभर्जत्। **ऋदुपधाच्चाक्लृपिचृतेः** (३।१।११०) क्यप् भृज्यम्। अवश्यभर्ज्यम् **ण्य आवश्यके** (७।३।६५) इति कुत्वाभावः। उणादौ भर्जू रभ्योषः[2]॥१७६, १७७॥

१११. **एजृ भ्रेजृ भ्राजृ दीप्तौ**। एजते। **एङि पररूपम्** (६।१। ९४) प्रेजते। मा भवानेजिजत् इत्यत्र नित्यत्वादन्तरङ्गत्वाच्च द्विर्वचने कृते ह्रस्वप्रसङ्गाभावाद् ऋदित्वं व्यर्थमिति न वाच्यम्, ओणृज्ञापकात्[3]। **अनुपसर्गाल्लिम्पविन्द** (३।१।१३८) इति शः—उदेजयः। **एजृ कम्पने** (१।१४३) अस्मादेजति, तथा **एजेः खश्** (३।२।२८) अङ्गमेजयः। भ्रेजते, भ्राजते, **भ्राजभासभाषदीप** (७।४।३) इति विकल्पेनात्वम्[4]—अबभ्राजत् अबिभ्रजत्। **भ्राज-टुभ्राशृ** (१।५७०) इति वक्ष्यते, तस्य फणादित्वाद् वेत्वाभ्यासलोपौ प्रयोजनम्—भ्रेजे, बभ्राजे, तथा **व्रश्चभ्रस्ज** (८।३।४६) इति षः, राजृसहचरितस्य यथा स्यात्—बाभ्राष्टि। अस्य तु बाभ्राक्ति[5]। **भ्राजभासधुर्वि** (३।२। १७७) इति क्विप्—विभ्राट्। **नभ्राण्नपात्**। (६।३।७५) इति प्रकृतिः[6]। **भुवश्च** (३।२।१३८) इति चकारादिष्णुच्[7]—भ्राजिष्णुः। **रेजृ** इति च **चन्द्रः**[8] (च० धा० १।३६४)॥१७८-१८०॥

११२. **ईज गतिकुत्सनयोः**। ईजते, वीज्यते। ईजीति **दुर्गः**—

---

समाधेयम्' इति (धा० प्र० पृ० २०)।

१. श्वीदितो निष्ठायाम् (७।२।१४) इत्यनेनेडागमाभाव इत्यर्थः।

२. द्र० अमरक्षीरटीका (वैश्यवर्ग ४७) अभ्यूषपदव्याख्याने।

३. द्विर्वचनात् पूर्वं ह्रस्वत्वं प्रवर्तत इति शेष।

४. नायं विकल्पेनात्त्वं विधत्ते, तेन 'विकल्पेन ह्रस्वत्वम्' इति वाच्यम्।

५. मतमिदं सायणेन स्मृतम् (धा० वृ० पृष्ठ ६३)।

६. नञो नकारस्य प्रकृतिभावः इत्यर्थः।

७. यथोक्तं काशिकायाम्——'चकारोऽनुक्तसमुच्चयार्थः। भ्राजिष्णुना लोहितचन्दनेन' इति।

८. अत्रोक्तं धातुवृत्तौ—अत्र रेजिरपि क्वचित् पठ्यते, तदनार्षमिव (पृ० ६३)।

ईङ्जते । बीजेर्लौकिका[1] दवीजयत् ॥१८१॥

**११३. उदात्ता अनुदात्तेतः ॥**

---

**[सेटः परस्मैपदिनः]**

**११४. शुच शोके ।** इतो व्रजान्ताः (१।१५४) द्वासप्ततिः सेटः परस्मैपदिनश्च । शोचति, शोचिता । शोकः । शोच्यमिति[2] कुत्वं नेष्टं, ण्यन्तस्य वा रूपम् । **जुचङ्क्रम्य** (३।२।१५०) इति युच्—शोचनः । **इगुपधात् कि.**[3] (चान्द्र उ० ११५२) शुचिः । **अर्चिशुचि** (उ० २।१०९) इतीस्—शोचिर्दीप्तिः ॥१८२॥

**११५. कुच शब्दे तारे**[4] । कोचति, **कुच सम्पर्चने**[5] (धा० सू० १।५९६) इत्यर्थभेदार्थे ज्वलादौ पठिष्यते । **उदुपधाद् भावादिकर्मणोरन्यतरस्याम्** (१।२।२१) इति कित्त्वं वा—संकुचितं, संकोचितम् ॥१८३॥

**११६. क्रुन्च[6] गतौ ।** क्रुञ्चति । क्रुङ् । क्रुञ्चा । **अञ्चुयुजिक्रुञ्चाम्** (३।२।५९) इति निपातनान्नलोपाभावः । **प्रज्ञादिभ्योऽण**

---

१. वीजधातुः शास्त्रेष्वपठितोऽपि लोके लब्धप्रचार इत्यर्थः । 'संवीजते' इति प्रयोगस्तु जाम्बवतीविजये दृश्यते । यथा—'असौ गिरेः शीतलकन्दरस्थः पारावतो मन्मथचाटुदक्षः, घर्मालसाङ्गीं मधुराणि कूजन् संवीजते पक्षपुटेन कान्ताम्' इति ।

२. 'शोच्यमिनि निपातनात्' इति पाठा० । शोच्यपदस्य कुत्राप्यनिपातनादपपाठोऽयम् । 'अशोच्यानन्वशोचस्त्वम्' (गीता २।११) इत्यादिषु शोच्यपदस्य दर्शनात् 'कुत्वं नेष्टम्' इत्येव युक्तः पाठः ।

३. इदं सूत्रं सर्वेषु पाणिनीयोणादिपाठेषु न दृश्यते । चान्द्रपाठेन सहेदं संवदति ।

४ कुच गताविति स्वामी (धा० वृ० पृ० ६३) । अत्र तु न तथा पाठ उपलभ्यते ।

५. ज्वलादौ (१।५७३) तु 'कुच सम्पर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु' इति पठ्यते ।

६. क्रुन्चेत्यादिषु धातुस्वरूपप्रदर्शनार्थं परसवर्णमकृत्वा नकारनिर्देशः कृत इति बोध्यम् । प्रयोगावस्थायां तु परसवर्णं भवत्येव ।

(५।४।३८) क्रौञ्चः ॥१८४॥

११७. **कुन्च गतिकौटिल्याल्पीभावयोः**। गतेः कौटिल्ये द्रव्याल्पत्वे च[1]। कुञ्चति, कुञ्चितम्। कुञ्चिका। कुक्[2]। कुञ्चेण्वुंलि नलोप इष्टः[3]–संकोचकः। एवमपि **न धातुलोप आर्धधातुके** (१।१।४) इति निषेधः स्यात्, तस्मादेतत् **कुचेः** (१।११२) रूपम्। **चान्द्रमुदित्त्वमतन्त्रम्**[4] (च० धा० १।४७), यत् **कात्यः** सन्निपातपरिभाषायाः प्रयोजनमदात्[5] **उवुपधत्वम् अकित्त्वस्य निकुचिते** (महा० १।१।३८) इति। यदि चायमुदित् स्यात्, इडागमोऽत्र न स्यात्[6] ॥१८५॥

११८ **लुन्च अपनयने**। अनुपयुक्तापासने। लुञ्चति। **वञ्चिलुञ्च्यृतश्च** (१।२।२४) इति क्त्वा निष्ठा च वा कितौ–लुञ्चित्वा, लुचित्वा, लुञ्चितः, लुचितः ॥१८६॥

११९. **अन्चु गतिपूजनयोः**। अञ्चति। आनञ्च। अक्त्वा, अञ्चित्वा, **उदितो वा** (७।२।५६) इट्। **अञ्चेः पूजायाम्** (७।२।५३) इति क्त्वानिष्ठयोर्नित्यमिट्–अञ्चित्वा गुरून्, अञ्चितो राजा, अन्यत्र **यस्य विभाषा** (७।२।१५) इति निष्ठायां नेट्—**समक्नौ शकुनेः पादौ**, **अञ्चोऽनपादाने** (८।२।४८) इति नत्वम्, अपादाने तु–उदक्तम् उदकं कूपात्। **अनिदितां हल उपधायाः क्ङिति** (६।४।२४) इति नलोपो **नाञ्चेः पूजायाम्** (६।४।३०) इति नास्ति–अञ्चिता गुरवः। **नावञ्चेः** (उ० १।१७) इति कुः–न्यङ्कुः[7], न्यङ्क्वादित्वात् (द्र०

---

१. 'गतौ कौटिल्ये द्रव्याल्पत्वे चेति क्षीरस्वामी' (पृ० ६३) इत्येवं धातुवृत्तौ पाठ उपलभ्यते। २. क्विपि नलोपे रूपम्।

३. प्रयोगप्राचुर्यदर्शनादिति शेषः।

४. धातुवृत्तौ 'अत एव उदित्पाठिनौ चन्द्रतरङ्गिणीकारौ प्रत्युक्तौ' इति पठ्यते (पृष्ठ ६४)। अत्र तरङ्गिणीकारस्योल्लेखोऽयुक्तः, क्षीरस्वामिना तूदित्पाठः प्रत्याख्यायानुदित्पाठस्य व्यवस्थापनात्। ५. 'अधात्' पाठा०।

६. यस्य विभाषा (७।२।१५) इति निषेधाद् इति शेषः।

७. कुरङ्गसदृशो विकटबहुविषाणः [मृगविशेषः] इत्यष्टाङ्गहृदयस्य हेमाद्रिटीकायां, सूत्रस्थान ३।५०। न्यङ्कोर्विकारो नैयङ्कव इति पाणिनीयाः, न्याङ्कव इत्यापिशलाः। अत्र विशेषः 'संस्कृत व्याकरण शास्त्र का इतिहास' ग्रन्थस्य प्रथमाध्याये (पृष्ठ ३० च० सं०) द्रष्टव्यः।

७।३।५३) कुत्वम् । वृक्षशुनोरन्यत्र—न्यञ्चुः स्वेदविन्दुः । **उदङ्कोऽनुदके** (३।३।१२३) साधुः, उदके तु ल्युट्—उदञ्चनी जलोद्धरणी । **ऋत्विग्दधृग्** (३।२।५९) इति क्विप्, **उगिदचाम्** (७।१।७०) इति नुम्—प्राङ् । घञि—पर्यङ्कः, पल्यङ्कः[1] । उदकमिति निपातितम्[2] ।१८७

१२०. **वन्चु, चन्चु, तन्चु, त्वन्चु, स्रुचु[3], म्लुचु गत्यर्थाः** । वञ्चति । यङि अभ्यासस्य दीर्घे प्राप्ते **नीग्वञ्चुस्रंसुध्वंसु** (७।४।८४) इति नीगागमः—वनीवच्यते । **उदितो वा** (७।२।५६) इति वेट्—वक्त्वा, वचित्वा, [वञ्चित्वा] **वञ्चिलुञ्च्यृतश्च** (१।२।२४) इति वा कित्त्वम्, वेट्त्वाद् **यस्य विभाषा** (७।२।१५) इति निष्ठायां नेट—वक्तः । वञ्जितस्तु चुरादौ **वञ्चु प्रलम्भने** (१०।१४८) इत्यस्मात् । **गृधिवञ्च्योः प्रलम्भने** (१।३।६९) तङानौ बालं वञ्चयते । नेह—अहिं वञ्चयति । **स्फायि** (उ० २।१३) इति रक् वक्रम्, न्यङ्क्वादिः (द्र० ७।३।५३) । घञि **वञ्चेर्गतौ** (७।३।६३) इति कुत्वं नास्ति—**वञ्चं वञ्चन्ति वणिजः**[4] । चञ्चति । चञ्चा तृणपुरुषः । चञ्चुस्त्रोटि, चञ्चलश्चपलः । चाचलस्तु चले (धा० १५६८) रूपम् । तञ्चेस्तक्रम् । स्रोचति । मलिनं म्लोचति, मलिम्लुचश्चौरः । **जृस्तम्भुम्रुचुम्लुचुग्रुचुग्लुचुग्लुञ्चुश्विभ्यश्च** (३।१।५८) इत्यङ् वा—अस्रुचत्, अस्रोचीत्; अम्लुचत्, अम्लोचीत् ॥१८८-१९३॥

१२१. **ग्रुचु ग्लुचु कुजु खुजु स्तेयकरणे** । अग्रुचत्, अग्रोचीत्, अग्लुचत्, अग्लोचीत् । घञ्—ग्लोचः, **न क्वादेः** (७।३।५९) कुत्वाभावः ॥१९४-१९७॥

१२२. **ग्लुन्चु षस्ज गतौ** । न्यग्लुचत्, न्यग्लुञ्चीत् । सज्जति, सिसज्जिषति, सिसज्जयिषति । सज्जः सज्जितो हस्ती । क्वापि तङानौ[5]—**प्रकृतेर्गुणसम्मूढाः सज्जन्ते गुणकर्मसु** (गीता ३।२९),

१. परेश्च घाङ्कयोः (८।२।२२) इत्यनेन लत्वविकल्पः ।

२. 'उदकं च' इत्युणादिसूत्रेण (२।३९) इति शेषः ।

३. इतोऽग्रे 'स्रुन्चु म्लुन्चु' इत्यधिकौ क्वचित् । प्रकृतसूत्रव्याख्यायामनयोरुदाहरणादर्शनान्नेमौ स्वामिसम्मताविति स्पष्टम् । ४. द्र० काशिका ७।३।६३ ।

५. अत्राह सायणः—'अतोऽस्यात्मनेपदं दूषयन्तो वर्धमानक्षीरस्वाम्यादयः एव दुष्टाः' (धा० वृ० पृ० ६७) । क्षीरस्वामिना त्वस्यात्मनेपदित्वमत्र स्वीकृतम्, न तु दूषितम् । अतः सायणीयो लेखश्चिन्त्यः ।

**सज्जमानमकार्येष्ववति,** (का० नीति, ४।४१)। चान्तो[1]ऽयमिति शिवः[2]—सश्चति ।।१९८,१९९।।

१२३. **गुजि अव्यक्ते शब्दे** । गुञ्जति । गुञ्जितम्, गुञ्जा । अनिदिदित्येके[3]—गोजति । जुगोज ।।२००।।

१२४. **अर्च पूजायाम्** । अर्चति, आनर्च । अर्चितः । अर्चा । **यजयाचरुचप्रवचर्चश्च** (७।३।६६) इति कुत्वाभावः, अर्च्यः । येषां मतेऽत्र ऋचेर् (धा० ६।२३) ग्रहणम्,[4] तत्पक्षे अर्क्यः । **अर्चिशुचिहुसृपि** (उ० २।१०९)—इतीस्—अर्चिः । अर्च्यत इत्यर्कः[5] । चुरादौ (१०।२३२) अर्चयति ।।२०१।।

१२५. **म्लेछ अव्यक्तायां वाचि** । म्लेच्छति । म्लेच्छनम्, म्लेच्छः । **म्लेच्छो ह वा एष योऽपशब्दः, न म्लेच्छितवै, नापभाषितवै**[6] । **क्षुब्धस्वान्तध्वान्त** (८।२।१८) इत्यविस्पष्टे म्लिष्टम् साधु, म्लेच्छित[7]मन्यत् ।।२०२।।

१२६. **लछ लाछि लक्षणे** । लक्षणं चिह्नम् । लच्छति, लाञ्छति । लाञ्छनम् ।।२०३, २०४।।

१२७ **वाछि इच्छायाम्** । वाञ्छति । वाञ्छितम्, वाञ्छा ।२०५।

---

१. 'अति नः सश्चतो नय' (ऋ० १।४२।७) इत्यादिषु चान्तोऽपि दृश्यते ।

२. अयं महावैयाकरणः शिवस्वामी । उत्तरत्र (५।१०) अप्यय ग्रन्थकृता स्मर्यते । शिवस्वामिनो विषये 'संस्कृत व्याकरण शास्त्र का इतिहास' नाम्नि ग्रन्थे (पृष्ठ ६८२-६८४ च० सं०) विस्तरश उक्तम् । तत्रैव द्रष्टव्यम् ।

३. मतमिद धातुवृत्तौ (पृष्ठ ६७) पुरुषकारे (पृष्ठ ६०) चोद्धृतम् । स्वयं क्षीरस्वामिनापि 'गुज शब्दे' (६।७८) इत्यत्रायं पाठ उद्धृतः ।

४. इदं काशिकाकारमतम् (काशिका ७।३।६३) । अर्चतेर्ग्रहणे 'प्रवचर्च' इत्यत्र कथ सन्धिरिति नोक्तं स्वामिना ।

५. घञि रूपम्, उ० ३।४० द्रष्टव्यम् ।

६. महाभाष्ये (अ० १ पा० १ अ० १) त्वेव पठ्यते—'तेऽसुरा हेलयो हेलय इति कुर्वन्तः परा बभूवुः । तस्माद् ब्राह्मणेन न म्लेच्छितवै, नापभाषितवै । म्लेच्छो ह वा एष यदपशब्दः ।'

७. म्लेच्छितम्=म्लेच्छाचरणम् ।

१२८. **आछि आयामे**। आञ्छति, आञ्छयते। **दोर्दण्डाञ्छितचन्द्रशेखरधनुर्दण्डावभङ्गोद्यतः**[१]। आञ्छ, आञ्छतुः, आञ्छुः, तस्माद ग्रहणात् (द्र० ७।४।७१) नुडभावः[२] ॥२०६॥

१२९. **ह्रीछ लज्जायाम्**। ह्रीच्छति, जिह्रीच्छ ॥२०७॥

१३० **हुर्छा कौटिल्ये**। हूर्छति, **र्वोरुपधायाः** (८।२।७६) इति दीर्घः[३]। निष्ठायाम् **आदितश्च** (७।२।१६) इतीण् नास्ति—हूर्णः, **राल्लोपः** (६।४।२१) **रदाभ्यां निष्ठातो नः** (८।२।४२)। **विभाषा भावादिकर्मणोः** (७।२।१७) इति वेट्, हूर्छितमनेन, हूर्णम्, प्रहूर्छितः, प्रहूर्णः। क्विप्—हूः हुरौ ॥२०८॥

१३१. **मुर्छा मोहसमुच्छ्राययोः**। मूर्छति, मूर्छा। **न ध्याख्यापॄमूर्छिमदाम्** (८।२।५७) इति निष्ठानत्वं नास्ति, मूर्तः। **क्तिन् निष्ठावत्** (द्र० का० ३।३।९४) मूर्तिः, मूर्छितमनेन, मूर्तम्, प्रमूर्छितः, प्रमूर्तः। सम्मूर्छित इति तारकादित्वात् (द्र० ५।२।३६) इतच् ॥२०९।

१३२. **स्मुर्छा विस्मृतौ**[४]। स्मूर्छति। स्मूर्छा। **स्फुर्छा विस्मृताविति** दुर्ग.—स्फूर्छति, स्फूर्णः ॥२१०॥

१३३. **युछ प्रमादे**। युच्छति ॥२११॥

१३४ **उछि उञ्छे**। उञ्छ उच्चयनम्। उञ्छति, उञ्छाञ्चकार। उञ्छितः। शिलोञ्छनम्, शिलोच्चयनमित्यर्थः ॥२१२॥

१३५. **उछी विवासे**। विवासो विनाशः समाप्ति[५]रित्यर्थः। उच्छति। उष्टः। '**रजन्यां व्युष्टायामुषसि जनयामास तनयम्**[६]'।

---

१. अनुपलब्धमूलमिदम्।

२. अयं भावः—तस्मात् पदेन पूर्वसूत्र (७।४।७०) विहितस्य दीर्घत्वस्य परामर्शात् नात्र नुडागमः। अत्र स्वाभाविक एव दीर्घ आकारः, न तु 'अत आदेः' सूत्रविहितः।

३. वस्तुतस्तु 'उपधायां च' (८।२।७८) इत्यनेन।

४. 'विस्तृतौ' पाठा०।

५. इदं धातुवृत्तौ (पृष्ठ ६९) उद्धृतम्।

६. अनुपलब्धमूलम्।

एताविह न पाठ्यौ तुदादित्वादेवेष्टसिद्धेः[१] ॥२१३॥

१३६. **वृज व्रजि[२], व्रज ध्वजि गतौ** । वर्जति । वरीवृज्यते **रीगृदुपधस्य** (७।४।९०) इति रीक् । इदुपधोऽयमित्येके वेजति । व्रञ्जति । व्रजति, ध्वञ्जति । ध्वजेत्येके ध्वजति. ध्वजः, **अतो हलादेः** (७ २।७) इति सिचि वा वृद्धिः—अध्वजीत्, अध्वाजीत् ॥२१४-२१७॥

१३७ **कूज अव्यक्ते शब्दे** । कूजति । कूजितम् ॥२१८।

१३८ **अर्ज सर्ज अर्जने** । अर्जति । आनर्ज । अर्जिजिषति । **अर्जिदृशिकम्यमि** (उ० १।२८) इत्युः—ऋजुः । **अर्जेर्णिलुक् च** (उ० ३। ५८) इत्युनन्—अर्जुनः । **अर्जेर्ऋज च** (दश० ९।११) इतीषन्—ऋजीषम् पिष्टपचनम् । सर्जति । सर्जिका । **कृषिचमितनिधनिसर्जिखर्जिभ्य ऊः** (उ० १।८२) सर्जूः ॥२१९, २२०॥

१३९ **गर्ज शब्दे** । गर्जति । गर्जित स्तनितम् ॥२२१॥

१४०. **तर्ज भर्त्सने** । तर्जति । चुरादौ (१०।१५१) तर्जयते ॥ ॥२२२॥

१४१. **कर्ज खर्ज व्यथने** । कर्जति । खर्जति । **कृषिचमि** (उ० १। ८२) इत्यूः—खर्जूः ॥२२३, २२४॥

१४२ **खर्ज मार्जने च** । **खर्जपिञ्जादिभ्य ऊरोलचौ** (उ० ४।९०) खर्जूरः ॥

१४३. **अज गतिक्षेपणयोः** । अजति, **अजेर्व्यघञपोः** (२।४।५६) आर्धधातुके संविवाय, संवीय । उदात्तत्वं त्वार्धधातुके वलादौ वीभा-

---

१. इदमत्रावधेयम्—भ्वादौ पाठाद् उञ्छति उच्छति इत्यनयोः शप्तिपोरनुदात्तत्वात् उञ्छतः उच्छतः इत्यनयोश्च लसार्वधातुकानुदात्तत्वाद् धातुस्वरो भवति, तुदादौ पाठात् शस्वरः स्यात् । तस्मात् स्वरभेदार्थमुभयत्र पाठः कर्तव्य एव ।

२. अत्राह सायणः—'तरङ्गिणीकाश्यपसंमतास्तु (? सु) आद्यौ व्रज व्रजी इति दन्त्योष्ठ्यादी पठ्यते, सर्वत्र तवर्गादी एव ।' (धा० वृ० पृष्ठ ६९) । भट्टोजिदीक्षितोऽपि सायणपाठमेवानूदितवान् (द्र० प्रौ० मनो० पृष्ठ ५६०) क्षीरतरङ्गिण्यां तु नैतादृशः पाठ उपलभ्यते ।

वस्यानित्यत्वे लिङ्गम्, वी ह्यनुदात्तः । प्राजिता रथस्य प्रवेता[1] । वलादाविति किम् ? समज्यते । **वा यौ** (२।४।५७) वा—प्राजनो[2] दण्डः; प्रवयणो दावात्यये । **वातशुनीतिलशर्धेष्वजधेट्तुदजहातिभ्यः खश्** (३।२।२८ वा०) वातमजा मृगाः । अजतीत्यजः छागः । अजा व्यजनम् । **समुदोरजः पशुषु**—(३।३।६९) इत्यप्—समजः पशुसङ्घः, उदजः पशुप्रेरणम्, अन्यत्र घञ्—समाजः, उदाजः । **अजिव्रज्योश्च** (७।३।६०) इति कुत्वाभावः । **सजायां समजनिषद** (३।३।९९) इति क्यप्—समज्या सभा; संज्ञात्वाद् वीभावो नास्ति । **गोचरसंचर** (३।३।११९) इति व्यजः साधुः । **अजेरज** (द० उ० २।४८) इतीनच्—अजिनम् । **अज्यतिभ्याम्** (उ० ४।१३०) इण् आजिर्युद्धम् । **पादे च**[3] (उ० ४।१३१) पदाजिः । **अजिरशिशिर** (उ० २।१४५) इत्यजिरम् । **बहुलं संज्ञाछन्दसोः अन्नवधकगात्रविचक्षणाजिराद्यर्थम्** (२।४।१४ वा०) इति वीभावो नास्ति । **अजिवृरीभ्यो निच्च** (उ० ३।३८) इति णुः—वेणुः । **रास्नासास्ना** (उ० ३।१५) इति वीणा ॥२२५॥

१४४ **कज मदे** । कजति ॥२२६॥

१४५. **खज मन्थे** । मन्थो विलोडनम् । खजति । **खजेराकन** (तु० उ० ४।१३)—खजाको मन्थः, खजाका दर्वी, खजो विद्रव्यपाचकानां मन्थनदण्डः ॥२२७॥

१४६. **खजि गतिवैकल्ये** । खञ्जति । खञ्जः खोडः, खञ्ज नोदकं सर्षपश्च । खञ्जनः, खञ्चरीटः पक्षी ॥२२८॥

१४७. **एजृ कम्पने** । एजति । **एजेः खश्** (३।२।२८) अङ्गमेजयः । **एजृ दीप्तौ** (१।१११) तङानी[4]—एजते ॥२२९॥

---

१. 'एवं हि कश्चिद् वैयाकरण आह—कोऽस्य रथस्य प्रवेतेति । सूत आह—अहमायुष्मन्नस्य रथस्य प्राजितेति' इत्यादि महाभाष्यम् (२।४।५६) अत्रानुसन्धेयम् । २. 'प्राजनम्' पाठा० ।

३. हस्तलेखेषु 'पदे च' इत्येवं पठ्यते ।

४. 'तङानौ' इति हस्तलेखेषु पठ्यते । प्रायेण ग्रन्थकृता 'तङानी' 'तङानौ' इति पदद्वयं व्यवहृतम् । अत्रायं विवेकः—यदा तङ्प्रत्ययः आनप्रत्ययश्चास्य धातोर्भवति इत्यर्थो विवक्षितः, तदा इनि प्रत्यये 'तङानी' इति धातुविशेषणत्वेन प्रयुज्यते । यदा तु तङ्प्रत्यय आनप्रत्ययश्च प्रदर्श्येते इत्यर्थो विवक्षितो भवति

१४८. **टुओस्फूर्जा वज्रनिष्पेषे**। वज्रनिष्पेषोऽशनिनिर्घोषः। स्फूर्जति। स्फूर्जः। दीर्घोच्चारणं दीर्घस्यानित्यत्वार्थम्[1]। **ओदितश्च** (८।२।४५) इति निष्ठानत्वम्—स्फूर्णः, **चोः कुः** (८।२।३०) **आदितश्च** (७।२।१६) इति नेट्। **विभाषा भावादिकर्मणोः** (७।२।१७) स्फूर्जितमनेन स्फूर्णम् प्रस्फूर्जितः प्रस्फूर्णः। **ट्वितोऽथुच्** (३।२।८९)—स्फूर्जथुः ॥२३०॥

१४९. **क्षि क्षये**[2]। क्षयति। क्षेता, लक्ष्यानुरोधादिण् नास्ति वक्ष्यति[3] च—

> **पाठमध्येऽनुदात्तानामुदात्त कथितः क्वचित्।**
> **अनुदात्तोऽप्युदात्तानाम् पूर्वेषामनुरोधतः ॥**[4]

क्षिय, **निष्ठायामण्यदर्थे** (६।४।५९.६०) दीर्घः. **क्षियो दीर्घात्** (८।२।४६) इति निष्ठानत्व क्षीणः। **वाक्रोशदैन्ययोः** (६।४।६१) क्षितः क्षीणः। तुदादौ। **क्षि निवासगत्योः** (६।१०८) क्षियति, क्र्यादौ **क्षिष् हिंसायाम्** (९।३७) क्षिणाति, स्वादौ **ऋ क्षि चिरि जिरि दाश दृ हिंसायाम्** (५।३३) क्षिणोति ॥२३१॥

१५०. **क्षीज अव्यक्ते शब्दे**। क्षीजति, चिक्षीज ॥२३२॥

१५१. **लज लजि भर्त्सने**। लजति लञ्जति। भासार्थश्चुरादौ (१०।१९७) लञ्जयति[5] ॥२३३,२३४॥

---

तदा 'तङानौ' इति प्रयुज्यते।

१. उपाधायां च (८।२।७४) इत्यनेन दीर्घो भविष्यत्येव, अतः स्फूर्जेति दीर्घोच्चारण दीर्घस्यानित्यतां ज्ञापयति। काशकृत्स्नधातुपाठेऽपि दीर्घोकारवान् पठ्यते। (१।७२)।

२. क्षि क्षये, क्षि ऐश्वर्ये इत्येक इति क्षीरस्वामी इति पुरुषकारे (पृष्ठ २३)। काशकृत्स्नधातुपाठे 'क्षी क्षय' इति दीर्घेकारान्तः पठ्यते (१.७३)।

३. 'वक्ष्यति' इत्यस्य कः कर्त्तेति न ज्ञायते अनन्तरमुद्धृतः श्लोकः ग्रन्थेऽस्मिन्नुपरिष्टान्नोपलभ्यते।

४. एतेन ज्ञाप्यते यत् प्राक्पाणिनीयेषु धातुपाठेषु उदात्तानुदात्तधातूनां सांकर्यमासीत्, पाणिनिना यथासम्भवं स दोषो दूरीकृत इति। काशकृत्स्नधातुपाठेऽपि इहैव पाठ उपलभ्यते (१।७३)।

५. यथोक्तं पुरुषकारे—'लञ्जयेदिति क्षीरस्वामिनः पक्षे' (पृ० ६१)।

१५२. **लाज लाजि भर्जने**[1] **च** । लाजति, लाञ्जति, लाज्यते, लाञ्ज्यते । लाजाः, **अजिव्रज्योश्च** (७।३।६०) इति चात् कुत्वाभावः । चत्वारो भर्त्सन इति **चन्द्रः** (च० धातु १।७७) ।।२३५,२३६।।

१५३. **जज जजि युद्धे** । जजति, जञ्जति[2] ।।२३७,२३८।।

१५४. **तुज तुजि हिंसायाम्** । तोजति, तुञ्जति ।।२३९,२४०।।

१५५. **तुजि पालने च** । तुञ्ज्यत इति तुङ्गः, घञ् । तुञ्जिता भूः । चुरादौ भासार्थः (१०।२२३) तथा **तुजि पिजि लुजि हिंसा-बलादाननिकेतनेषु** (१०।३५) तुञ्जयति, तुञ्जो निकेतनम् ।।

१५६ **गज गजि, गृज, गृजि**[3], **मज, मुजि**[4], **शब्दार्थाः** । गजति, गजित्वा । गञ्जति, गञ्जित्वा । गञ्जा मदिरागृहम् । गञ्जः कोशः । गर्जति, गर्जितम्, गर्जः । गृञ्जति । गृञ्जनं मूलविशेषः । मजति, मुञ्जति । मुञ्जस्तृणम् । **मुज मृजीत्यप्याहुः**[5]—मोजति, मृञ्जति ।।२४१-२४६।।

१५७. **गज मदने च** । मदन मदोत्पत्तिः । गजति । अचि –गजो हस्ती । चुरादौ **गज मर्च मार्ज** [**शब्दार्थाः**] (१०।९९) इति गाजयति ।

---

१. 'लज लजि भर्त्सने, लाज लाजि भर्जने च इति तु क्षीरस्वामी' इति पुरुषकारे (पृ० ६१) ।

२. अस्मादेव धातोः घञि 'जङ्ग'-शब्दो निष्पन्नो भवति । कुत्वं च 'चजोः' (७।३।५२) इत्यनेन । धातुप्रदीपे शब्दोऽयं निर्दिष्टः (पृ० २५) । स च युद्धार्थकः । आधुनिकः भाषातत्त्वविदः शब्दमिमं फारसीभाषीयं मन्यन्ते, तदसत् । विशेषस्त्वत्र 'संस्कृत व्याकरणशास्त्र का इतिहास' नाम्नि ग्रन्थे (पृष्ठ ५० च० सं०) द्रष्टव्यः ।

३ 'गज गजि इत्यत्र क्षीरस्वामी मृज मृजि इत्यप्याह—मार्जति मृञ्जतीति' इति पुरुषकारे (पृष्ठ ५८) पाठः । 'मृजमृजीति स्वामिचन्द्रौ' इति धातुवृत्तौ (पृष्ठ ७३) ।

४. 'मुज मुजीति क्षीरस्वामी चन्द्रश्च' इति पुरुषकारः (पृष्ठ ५७) । धातुवृत्तौ (पृष्ठ ७३) स्वामिचन्द्रयोर्मते 'मृज मृजि' इति पाठः प्रदर्शितः । मुद्रिते चान्द्रधातुपाठे तु 'मुज मुजि' इति पाठ उपलभ्यते (चा० धा० सू० १।८०) ।

५. 'मृज मृजीत्यप्याहुः' इति पुरुषकारे (पृष्ठ ५७) पाठः ।

१५८. **वज व्रज गतौ** । वजति । वाजो वेगपक्षौ । व्रजति, वव्राज । **वदव्रज** (७।२।३) इति वृद्धिः—अव्राजीत् । **व्रजयजोर्भावे क्यप्**—(३।३।९८) व्रज्या, परिव्रज्या । गोचरादौ (द्र० ३।३।११९) व्रजः साधुः । ण्यति (द्र० ३।१।१२४) व्राज्यम् । **अजिव्रज्योश्च** (७।३।६०) इति कुत्वाभावः । **क्विब् वचि** (उ० २।५७) इति क्विब्दीर्घौ—परिव्राट्, **व्रश्च** (८।२।३६) इति षः । परिव्राजकः । चुरादौ **वज मार्गसंस्कारगत्योः** (१०।६९) वाजयति ॥२४७,२४८॥

१५९. **उदात्ता उदात्तेतः** ।

---

## [अथ सेट आत्मनेपदिनः]

१६०. **अतट अति[1]क्रमहिंसनयोः** । इतः शाङ्न्ताः(१।१९२)पञ्चत्रिंशत् सेट आत्मनेपदिनश्च । अतिक्रम उल्लङ्घनम् । क्विपि तकारश्रवणार्थं तोपधोऽयं पठितः, ष्टुत्वं न कृतं सन्देहप्रादुर्भावात्[2] । अट्टते, अटिट्टिषते । अट्टः, अट्टनम् । क्विपि—अत् । दोपधत्वपक्षे न न्द्राः द्विरुच्यन्ते[3]—अट्टिटिषते । **अन्ये तु अदड्**[4] इत्याहुः—अड्डते अड्डिडिषते ॥२४९॥

१६१. **वेष्ट वेष्टने** । वेष्टनं ग्रन्थनं लोटनं परिहाणिश्च[5] । वेष्टते, अवेष्टत । प्रवेष्टो बाहुः । वेष्टितः । **विभाषा वेष्टिचेष्ट्योः** (७।४।९६) इति णौ चङि अभ्यासस्यात्वम्—अववेष्टत्, अविवेष्टत् ॥२५०॥

१६२. **चेष्ट चेष्टायाम्**—चेष्टा ईहा । चेष्टते, अचचेष्टत्, अचिचेष्टत् ॥२५१॥

१६३. **गोष्ट लोष्ट संघाते** । गोष्टते, लोष्टते, अलुलोष्टत् ।

---

१. काशकृत्स्नधातुपाठीयकन्नडटीकायाम् 'अदि अति क्रमहिंसनयोः' इति पाठः । अन्दते, अन्तते इति च तयोरुदाहरणे (द्र० पृष्ठ ७१) । वर्णक्रमविरोधादत्र पाठभ्रंशः प्रतीयते ।

२. मतमिदं पुरुषकारे (पृष्ठ ६३) स्मृतम् ।

३. नन्द्राः संयोगादयः (६।१।३) सूत्रेणेति शेषः ।

४. 'डान्तपाठः प्रकरणविरोधादुपेक्ष्यः' इति धातुवृत्तिः (पृष्ठ ७३) ।

५. 'परिपाहश्च' पाठा० ।

उणादौ (३।८२) लोष्टो मृत्पिण्डः ॥२५२॥

१६४. **घट्ट चलने** । घट्टते । **घट्टिवन्दिविदिभ्यः** (३।२।१०७ वा०) युच् घट्टना । अरघट्ट । उद्घट्टनम् । चुरादौ (१०।८१) घट्टयति ।२५३

१६५. **अठि गतौ** । अण्ठते ॥२५४॥

१६६. **वठि एकचर्यायाम्** । एकस्य चर्या सहायत्वेनागमनम् । वण्ठते । वण्ठो[1] दत्तद्रव्यो योद्धा ॥२५५॥

१६७ **मठि कठि शोके** । शोकोऽत्राध्यानम्[2]। [मण्ठते], उत्कण्ठते । उत्कण्ठा । चुरादौ (१०।२३६) उत्कण्ठयति ॥२५६,२५७॥

१६८. **मुठि पलायने**[3] । मुण्ठते ॥२५८॥

१६९ **हेठ विबाधायाम्**[4] । हेठते, जिहेठे । **णौ चङ्युपधाया ह्रस्वः** (७।४।१) अजीहिठत् । णौ—हेठयति । हेठना शाठ्यम् ।२५९॥

१७० **एठ च** । एठते[5] ॥२६०॥

१७१. **हिडि गत्यनादरयोः** । हिण्डते । युच् (३।२।१४९) हिण्डनः ॥२६१॥

१७२. **हुडि संघाते** । हुण्डते । हुण्डिका मुद्रा ॥२६२॥

१७३. **कुडि दाहे** । कुण्डते । कुण्डम् । कुण्डी भाण्डम् । कुण्डो जारजातः । उणादौ (१।१०६) कुण्डलम् । चुरादौ **कुडि रक्षणे** (द्र० १०।४०) कुण्डयति ॥२६३॥

१७४. **वडि विभाजने** । विभाजनं भागीकरणं चरमाभावश्च । वण्डते । वण्डनम्, वण्डः । चुरादौ (१०।४३) वण्डयति । **वटि इत्येके**

---

१. 'ननु चायमिङ् एक एव वण्ठरण्डाकल्पः' इति महाभाष्यव्याख्याने (३।३।२०) वण्ठो मृतभार्य इति नागोजिभट्टः ।

२. आध्यानमुत्कण्ठापूर्वकं स्मरणम् ।

३. 'पालने' इति मैत्रेयसायणौ । 'पलायने' इति काशकृत्स्नचन्द्रौ ।

४. 'विबाधनं शाठ्यम्' इति धातुवृत्तिकारः (पृष्ठ ७३) । 'स्वस्थैर्ये' 'हेठते स्थिरो भवति' इति काशकृत्स्नीयधातुपाठकन्नडटीकायाम् (पृष्ठ ६१) ।

५. 'विपूर्वोऽयमिति स्वामिकाश्यपौ, मैत्रेयादयस्तु केवलमेवोदाजह्रुः' इति धातुवृत्तिः (पृष्ठ७४) . क्षीरतरङ्गिण्यां तु न विपूर्वः पाठो दृश्यते ।

परस्मैपदी – वण्टति, वण्टयते । वण्टो नागः । **नन्दी तु वटि विभाजने वडि वेष्टने**, इति भङ्ग्या पठति[1] ॥२६४॥

१७५. **मडि च** । चकाराद् विभाजने । **पृथक्सूत्रादर्थान्तरेऽपि**[2] । मण्डते । मण्डो रसाग्रम् । मण्डकः । मण्डलम् । मण्डूरं[3] लोहमलम् । मण्डपः । णेरित्नुच् (द्र० उ० ३।२९) मण्डयित्नुः । **शलिमण्डिभ्यामूकञ्** (तु० उ० ४।४२) मण्डूकः । **मडि भूषायाम्** (धा० १।२१९) परस्मैपदी—मण्डति ॥२६५॥

१७६. **भडि परिभाषणे** । भण्डते । भण्डः, भाण्डम् । चुरादौ **भडि कल्याणे** (१०।४६) भण्डयति, भण्डना ॥२६६॥

१७७. **पिडि संघाते** । पिण्डते, पिण्डयते । पिण्डो गोलः । पिण्डी । चुरादौ (१०।११८)पिण्डयति ॥२६७॥

१७८ **मुडि मज्जने**[4] । मज्जनं शुद्धिर्न्यग्भावश्च[5] । मुण्डते । मुण्डः । **मुडि खण्डने** (१।२२३) परस्मैपदी—मुण्डति । **मुण्डमिश्र** (३।१।२१) इति णिच्—मुण्डयति ॥२६८॥

१७९. **तुडि तोडने** । तोडनं हिंसा[6] । तुण्डते, तुण्डयते । **तुण्डम्** । उणादौ (द्र० ४।११७) तुण्डिः ॥२६९॥

१८०. **हुडि वरणे**[7] । वरणं स्वीकारः । हुण्डते । हुण्डो मेषः॥२७०

---

१. 'नन्दी तु वडि विभाजने, मडि वेष्टने इति भङ्क्त्वा पठति' इति धातुवृत्तौ (पृष्ठ ७४) पुरषकारे (पृष्ठ ७१) च पाठः । काशकृत्स्नधातुपाठीयकन्नडटीकाया(पृष्ठ ७३) तु 'वडि मडि वेष्टने' इति पाठः । वाहीक(पञ्जाब) देशीयभाषायां विभाजनार्थिका 'वण्डना' क्रिया प्रयुज्यते । तेन 'विभाजने' इत्यप्यर्थः प्रामाणिक एव ।

२. पुरुषकारे (पृष्ठ ७१) उद्धृतमिदम्, धातुवृत्तौ (पृष्ठ ७४) च स्मृतम् ।

३. 'मण्डूलम्' पाठा० ।

४. 'मार्जने' इति चन्द्रमैत्रेयसायणाः । 'मज्जने' इति काशकृत्स्नधातुपाठीयकन्नडटीकायां (पृष्ठ १००) पाठः । 'मज्जनं स्नानं' इत्यपि तत्रैव ।

५. स्मृतमिदं पुरुषकारे (पृष्ठ ७०) ।

६. स्मृतं पुरुषकारे (पृष्ठ ७३) ।

७. 'हरणे' इति मैत्रेयः (धा० प्र० पृष्ठ २७) । अत्रायं विशेषः—

१८१ **स्फुडि विकसने**[1]। स्फुण्डते ॥२७१॥

१८२. **चडि कोपे**। चण्डते। चण्डः, चण्डा, चण्डी[2]। **पतिचण्डिभ्यामालञ्** (उ० १।११६) चण्डालः। चुरादौ (१०।४४) चण्डयति ॥२७२॥

१८३. **शडि रुजायां संघाते च**। तालव्यादिः। शण्डते। शण्डोऽब्जादिमूलाभोगः। सनोतेर् (धा० सू० ८।२) बाहुलकात् षत्वे डः (द्र० उ० १।११३) — षण्ड उत्सृष्टो गौः ॥२७३॥

१८४ **तडि ताडने**। तण्डते, वितण्डा। तण्डुना प्रोक्तं ताण्डवम्[3]। तण्डुलः **वृङ्लुटितनिताडिभ्य उलच् तण्ड च** (तु० उ० ५।९) इति कुशकाशावलम्बनम्[4] ॥२७४॥

१८५ **पडि गतौ**। पण्डते। पण्डितः। पाण्डुः पाण्डुरोगो हरिणवर्णश्च। **नगपांशुपांडुभ्यो रः** (५।२।१०७ काशिका) पाण्डुरः। पाण्डुस्त्वौणादिकः (द्र० उ० १।३८)। पण्डः क्लीबः ॥२७५॥

१८६. **कडि मदे**। कण्डते। कण्डूः। काण्डः। कण्डूरा स्नायुसंघातः। कण्डोलः पिटकः ॥२७६॥

---

काशकृत्स्नचन्द्रधातुपाठयोरेतद्धातुस्थाने 'भुडि भरणे' इति धातुः पठ्यते। यथात्र भुडि हुडि पृथग्धातू तथैव गृह्णाति गृभ्णाति इत्यत्र स्वतन्त्रौ 'ग्रह-ग्रभ' धातू द्रष्टव्यौ। निरुक्तकारस्तु 'गृभ' इति मेने। तथा ह्युक्तम् "गर्भो गृभेः" (नि० १०।२४)।

१. 'स्फुडि विकसन इति केचित् पठन्ति' इति धातुवृत्तिः (पृष्ठ ७४)।

२. या स्वयं चण्डते सा चण्डा, चण्डस्य स्त्री (या न स्वयं चण्डते) तु चण्डीति विवेकः।

३. 'ताण्डुः, तत्प्रोक्तं ताण्डवम्' पाठा०।

४. तडि ताडने इत्यस्मादेवोलचि तण्डुले सिद्धे वृङादिभ्य उलच् तण्डादेशविधानं तु संज्ञाशब्देषु स्वरूपसंवेदनस्वरवर्णानुपूर्वीमात्रफलमन्वाख्यानमिति नव्या वैयाकरणाः (द्र० श्वेतवनवासी उ० वृ० पृ० १)। तडि (तण्ड) धातोर्न केवलं ताडनमेवार्थ अपि तु वृङ् लुट तनु तड (चु०) इत्येतेषां धातूनां येऽर्थास्तेऽप्यत्र द्रष्टव्या, तेन वृङ् लुट् तनु तड (चु०) इत्येतेषां धातूनामर्थेषु वर्तमानात् तडि (तण्ड) धातोरुचल् इत्यर्थोऽस्य सूत्रस्यावगन्तव्य इत्यस्मन्मतम्। एवमेवान्यत्रापि।

१८७. **खडि मन्थे**। खण्डते। खण्डितः। खण्डः चुरादौ **खड खडि भेदे** (१०।३९) खण्डयति ॥२७७॥

१८८. **खुडि गतिवैकल्ये**। खुण्डते। खोडः पृषोदरादिः (द्र० ६।३।१०९)। चुरादौ **खुडि खण्डने** (१०।४२) खुण्डयति ॥२७८॥

१८९. **हेडृ अनादरे**। हेडते। हेडस्तिरस्कारः। असुनि (द्र० उ० ४।१८८) सान्तः। अचि (द्र० ३।१।१३४) हेडोऽदन्तः। **गुरोश्च हलः** (३।३।१०३) इति हेला[1]। अजिहेडत्। घटादौ **हेड वेष्ठने** (१।५२६) हेडति। हिडयति ॥२७९॥

१९०. **वाडृ आप्लाव्ये**। आप्लाव्यमाप्लावनम्। वाडते। वाडोऽश्वः। वाल.[2] उणादौ वडवा[3]। वले (१।३२९) रित्येके ॥२८०॥

१९१ **द्राडृ ध्राडृ विशरणे**। द्राडते, ध्राडते ॥२८१,२८२॥

१९२. **शाडृ श्लाघायाम्**। शाडते, शालते[4]। शाला। शालिः। गुणशाली। शालूकमुत्पलादिकन्दः। शलेर् (१।३२८) वा **शलिमण्डिभ्यामूकञ्** (तु० उ० ४।४२) ॥२८३॥

१९३ **उदात्ता अनुदात्तेत** ॥

---

## [अथ सेटः परस्मैपदिनः]

१९४. **शौटृ गर्वे**[5]। इतो गडन्ताः (१।२५३) सप्ततिः सेटः

---

१. हेला इति तु डलयोरेकत्वस्मरणात्, इति नव्यानां मतम्। वस्तुतस्तु 'डलयोरेकत्वस्मरणात्, डळयोरेकत्वस्मरणात्, रलयोरेकत्वस्मरणात्, इत्यादिवचनानां 'समानार्थकौ उभयथावर्णविशिष्टौ स्वतन्त्रौ धातू अवगन्तव्यौ' इत्यर्थोऽनुसंधेयः। तेन हेड हेल इति द्वौ स्वतन्त्रौ धातू। एवमेव ईड ईळ इत्यपि द्रष्टव्यौ। अस्मिन् धातुपाठे त्वन्यतरदेवोपदिश्यते लाघवार्थम्। अत एव प्राचीने काशकृत्स्नधातुपाठे (पृ० १२५) 'ईड ईल स्तुतौ' इत्युभौ धातू पठ्येते।

२. डलयोरेकत्वस्मरणादिति शेषः। अत्र पूर्वधातोष्टिप्पणी द्रष्टव्या।

३. 'वडं वलं वा वाति वडवा' इत्यमरटीकायां (पृष्ठ १८५) क्षीरस्वामी।

४. डलयोरेकत्वस्मरणात्। अत एव गुणेन शालते गुणशाली इति निर्वचनमाहुः। अत्रापि पूर्वतमधातोष्टिप्पणी द्रष्टव्या।

५. 'शौण्डृ गर्वे—शौण्डति, शौण्डीरः' इति काशकृत्स्नधातुपाठे, द्र० पृ० १५।

परस्मैपदिनश्च । शौटति । अशुशौटत् । **कृशॄपृकटिपटिशौटिभ्य ईरन्** (उ० ४।३०) शौटीरः ॥२८४॥

१९५. **यौटृ सम्बन्धे**[1] । सम्बन्धः श्लेषः । यौटति अयुयौटत्॥२८५

१९६. **म्रेटृ म्लेटृ उन्मादे**[2]। म्रेटति । एनं **म्रेडृ** इति **पठन्ति** आम्रेडितम्[3] । म्लेटति । **मेटृ** इति **दौर्गाः**—अमिमेटत् ॥२८६,२८७॥

१९७. **कटे वर्षावरणयोः** । वृष्टावावरणे चार्थे । कटति । कटः । **ह्म्यन्तक्षण** (७।२।५) इति सिच्यतो वृद्धिर्नास्ति-अकटीत् । कटः । कटीरः । कटुः । **कृकदिकडिकटिभ्योऽम्बच्** (उ० ४।८२) कटम्बः । वरट् (तु० उ० ३।१) कट्वरः, कट्वरी तक्रव्यञ्जनम् । कटकम् । काटो घञि (द्र० ३।३।१९) ॥२८८॥

१९८ **अट पट गतौ** । अटति । अटनः । **अटयर्त्यर्शूर्णोतीनाम् उपसंख्यानात्** (द्र० ३।१।२१ वा०)यङ्—अटाटयते वृथाद्यलोकः । अटाटया । उणादौ अटविः(द्र०उ० ४।१३४ वृ०)अटवी[4] । पटति । पटः । पटीरः । पटुः । तनट् (तु० उ० ३।१५०) पट्टनम् । पटनः । **कपिकण्डिकटिपटिभ्य ओलः** ( तु० उ० १ । ६७ ) पटोलः । पटहस्तु, पटे हन्यत इति डः । चुरादौ **पट वट ग्रन्थे** (१०।२४५) अदन्तः पटयति, तथा **पट भाषार्थः**(१०।१९७) पाटयति ।।२८९,२९०॥

१९९. **रट परिभाषणे** । रटति, रटिता ॥२९१॥

२००. **लट बाल्ये** । बाल्यं बालक्रिया । लटति । ललाटः । लटकः । लाटः । लाटकः । **अशुप्रुषिलटि** (उ० १।१५१) इति लट्वा भ्रमरकः ॥२९२॥

---

१. 'यौण्डृ सम्बन्धे—यौण्डति, यौण्डीरः' इति काशकृत्स्नधातुपाठीयकन्नडटीका (पृष्ठ १२) ।

२ 'मेडृ म्रेडृ उन्मादे—मेडति, मेडीरः, म्रेडति म्रेडीरः' इति काशकृत्स्नधातुपाठीयकन्नडटीका (पृष्ठ १५) ।

३. 'आम्रेडितं द्विस्त्रिरुक्तम्'(१।५।१६) इत्यमरव्याख्याने 'द्विर्भूते पूर्वाचार्यसञ्ज्ञैषा, अतश्च म्रेडृ उन्मादे इति पेठुः' इत्याह स्वामी(पृष्ठ ४५) ।

४. 'अटनिः' पाठा० ।

२०१. **शट रुजाविशरणगत्यवसादनेषु**[1] । चतुर्ष्वर्थेषु । शटति । शाटी । शाटकः । तालव्यादिः ॥२९३॥

२०२ **वट वेष्टने** । रज्जुं वटति । वटः । वटिः । वटकम् । वाटः । वाटी वृत्तिः । वटुः । वटाकरो रज्जुः । **वट भट परिभाषणे** (१।५२७) मित्—वटयति । **पट वट ग्रन्थे** (१०।२४५) अदन्तः ॥२९४॥

२०३. **खिट उत्त्रासे** । उत्त्रासो भयोद्गतिः । खेटति । आखेटः । खेटो ग्रामोऽधमश्च । चुरादौ (१०।२६०) खेटयति । खड्गखेटकौ हेती ॥२९५॥

२०४. **शिट षिट अनादरे** । एतौ तालव्यमूर्धन्यादी । शेटति । सेटति । सिषेट ॥२९६॥

२०५. **जट झट संघाते**[2] । जटति जटा । झटति, उज्झटति । झटोऽचि (द्र० ३।१।१३४) । घञि (द्र० ३।३।१८) झाटः षण्डः ॥ २९७,२९८॥

२०६. **भट भृतौ** । भृतिर्वेतनम् । भटति । भटः । भाटिः । भाटकम् । भटित्रम् ॥२९९॥

२०७. **तट उच्छ्राये** । तटति । तटम् । तटाकम् । ताटकः ॥३००

२०८. **खट काङ्क्षे** । काङ्क्षास्त्यस्येति काङ्क्षः । काङ्क्षाविशिष्टे धात्वर्थे । खटति । खटस्तृणम् । **खेटकामुहहं हस्तकः**[3] । खटिका । **अशुप्रुषिलटि** (उ० १।५१) इति क्वन्—खट्वा ॥३०१॥

२०९. **नट नृतौ** । नटति । नटः । **नतावित्येके**[4] । घटादित्वात् (१।५२८) नटयति, अनीनटत् । चुरादौ **नट अवस्यन्दने** (१०।१२)

---

१. अत्र काशकृत्स्नधातुपाठे 'शट निवासे, रुट विशरणगत्यवसादनेषु' इति द्वौ धातू पठितौ (पृष्ठ १३) । अत्र सम्भवत उभयोर्धात्वोः संकरः संजातः स्यात् ।

२. संघातो मिश्रीभावः संहननं च । जट धातुर्मिश्रीभावे, झट धातुः सहनने वर्तते । तस्यैव वाहीक (पंजाबी) भाषायां 'झटका' पदं प्रयुज्यते ।

३. सन्दिग्धोऽयं पाठः ।

४. अत्र कदाचित् 'नृत्तावित्येके' पाठः स्यात् । अत एव पुरुषकारे (पृष्ठ ६६)'नृतौ नृत्ताविति च क्षीरस्वामी' इत्युक्तम् । अयं णोपदेश इति मैत्रेयपुरुषकारसायणादयः । धातुवृत्तिः (पृष्ठ ७८) अत्रानुसंधेया ।

उन्नाटयनि नाटकम् ॥३०२॥

२१०. **पिट शब्दसंघातयोः** । पेटति । पेटकः । पेटा मञ्जुषा । पिटः । पिटकः कण्डोलः । पिटकं विस्फोटः ॥३०३॥

२११. **हट दीप्तौ** । हटति । हाटकम् ॥३०४॥

२१२. **षट अवयवे** । सटति, सिषाटयिषति । सटा ॥३०५॥

२१३. **लुट विलोटने** । विलोडन इति **दुर्गः** । लोटति । दिवादित्वात् (४।११६) लुट्यति । **लुट भासार्थः** (१०।१९७)—लोटयति **लुड** इति **द्रमिडाः**—आलोडितः, व्यालोलः ॥३०६॥

२१४. **चिट परप्रैष्ये** । परप्रैष्यं दासत्वम् । चेटति । चेटकः । चेटः । चेटिः, चेटी[1] ॥३०७॥

२१५. **पिट शब्दे** । अर्थभेदाद् द्विः पाठः । पेटति । **पिड** इत्येके पेडति । पेडः । पेडा मञ्जूषा ॥३०८॥

२१६. **बिट आक्रोशे** । वेटति । विटः । वेटकः । डान्तोऽयमिति **नन्दी**—विडालः, **तमिविशिविडि** (उ० १।११७) इति कालन्, अत एव **विड शब्दे, पिट आक्रोशे** इति **मल्लः**[2] पर्यट्टकान्तरे विभङ्ग्याह[3] ॥ ३०९॥

२१७ **हेड विबाधायाम्** । हेडति । **कौशिकस्तु** नेतानाह ॥३१०॥

२१८. **इट किट कटी गतौ** । एटति । केटति । कटति । ईदित्वात् (द्र० ७।२।१४) कट्टः कट्टवान् । कटकम् । **कटे वर्षे** (१।१९८) इत्यर्थभेदार्थः । **अन्ये** इदितमेनम् ई च प्रश्लिष्टमाहुः[4] । कण्टति कण्टाफलम पनसम् । कण्टकः ।

**उदयति दिननाथो याति शीतांशुरस्तम् ।**[5]

---

१. कृदिकारादक्तिनः (गणसूत्र ४।१।४२) इति वा ङीष् ।

२. 'मल्लः' क्वचिन्न ।

३. 'विभञ्ज्याह' पाठा० ।

४. अत्र पुरुषकारः(पृष्ठ २५,२६)धातुवृत्तिः(पृष्ठ ७९) चावलोकनीया । काशकृत्स्नधातुपाठे (पृष्ठ १८) तु 'अट पट इट ईट किट कीट कुट कूट गुट उट इ गतौ' इति विस्पष्टम् 'इ' धातुः पठ्यते ।

५. अनुपलब्धमूलमिदम् ।

तथा—

**उदयति विततोर्ध्वरश्मिरज्जावहिमरुचौ हिमधाम्नि याति चास्तम्** ।(शिशुपालवध ४।२०) ॥३११-३१४॥[1]

२१९. **मडि भूषायाम्** । मण्डति **क्रुधमण्डार्थेभ्यश्च** (३।२।१५१) इति युच्—मण्डनः । चुरादौ (१०।४५) मण्डयति, मण्डना । **शलिमण्डिभ्यामूकञ्**[2] (तु० उ० ४।४२) मण्डूकः ॥३१५॥

२२०. **कुडि वैकल्ये** । कुण्डति । कुण्डः । **कुटि** इति **कौशिकदुर्गौ**[3] — कुण्टति । कुण्टः ॥३१६॥

२२१. **मुडि प्रमर्दने** । मुण्डति । मुण्डः । **मुट** इति **दुर्गः**[4]—मोटति, मुटित्वा, मोटित्वा । मुटितः, मुटितम्, प्रमुटितः, प्रमोटितः । आमोटनम् । चुरादौ (तु० १०।६६) मोटयति[4] । पुडि **इत्येके**[5]—पुण्डति । पुण्डरीकम् । पुण्ड्रेक्षुः, त्रिपुण्ड्रकम्, पुण्ड्रोऽश्वतिलकम्[6] । पुण्ड्रा देशः ॥३१७॥

२२२ **चुडि अल्पीभावे** । चुण्डति । **चुटि इत्येके**—चुण्टति । **चुट** इति **दुर्गः**—चोटति । उच्चोटनम् ॥३१८॥

२२३. **मुडि खण्डने** । अर्थभेदात् (द्र० १।१७८) पुनः पाठः । अत एव **मुडि खण्डनप्रमर्दनयोरिति कण्ठः**[7] । **मुटि** इति **कौशिकदुर्गौ**— मुण्टति ।

२२४. **वटि विभाजने** । वण्टति । वण्टः । चुरादौ (तु० १०।४३) वण्टयति[4] ॥३१९॥

२२५. **रुटि लुटि स्तेये** । रुण्टति । लुण्टति । लुण्टयते । **जल्पभिक्ष**

---

१. प्रश्लिष्टम् 'ई' धातुं परिगणय्य चत्वारः ।

२. दशपादीपञ्चपाद्युणादिषु 'ऊकण्' प्रत्ययः, चान्द्रे (२।२१) 'उकञ्' मण्डूकशब्दे मध्योदात्तत्वदर्शनात् 'ऊकण्' इत्येव युक्तम् । शालूलपदं नैव सस्वरेषु वैदिकग्रन्थेषूपलभ्यतेऽतस्तस्य कः स्वर इति न शक्यते वक्तुम् ।

३ इदं धातुवृत्तावुद्धृतम् (पृष्ठ ८०) । पुरुषकारे (पृष्ठ ७३) तु 'क्षीरस्वामी त्वाह—कुठीति कौशिकदुर्गौ, कुण्ठति कुण्ठः' इति टकारस्थाने ठकारः पठ्यते ।

४. चुरादौ पाठोऽन्यमतेन ।

५. अत्र प्रौढमनोरमा (पृष्ठ ५३६) द्रष्टव्या ।

६. 'पुण्ड्रकमश्वतिलकः' पाठा० ।

७. पुरुषकारे (पृष्ठ ७०)ऽप्युद्धृत ।

(३।२।११५) इति षाकन्—लुण्टाकः। रुठि लुटि इत्येके[1] [रुण्ठति, लुण्ठति][2] लुण्ठिः। चुरादौ (१०।२५) लुण्ठयति ॥३२०,३२१॥

२२६. स्फटि स्फुटिर्[3] विशरणे[4]। स्फण्टति। स्फट इति नन्दिस्वामी[5]—वस्त्रं स्फटति। स्फाटितम्। कर्पूरस्फटः। स्फटिकम्। स्फोटति, अस्फुटत्, अस्फोटीत्। स्फोटः, आस्फोटः, विस्फोटः। कुटादौ स्फुट विकसने (६।७८) स्फुटति स्फुटः, अस्फुटीत्। चुरादौ चट स्फुट भेदे (१०।१६७) स्फोटयति। स्फुटयतीति स्फुटं करोति (द्र० धा० सू० १०।२९६) इत्यर्थे ॥३२२,३२३॥

२२७ पठ व्यक्तायां वाचि। पठति। नौ गदनद(३।३।६४) इति वा अप्—निपठः, निपाठः। निपठितिः, तितुत्र (७।२।९) इति निषेधे प्राप्तेऽग्रहादीनाम्। (७।२।९ वा०) इतीट् ॥३२४॥

२२८. वठ स्थौल्ये। वठति। वठरोऽतीक्ष्णधीः ॥३२५॥

२२९. मठ मदनिवासयोः। मठति। मठः। मठरोऽधमः बाहुलकादरप्रत्ययः, जनेररष् ठ च (उ० ५।३८) वनिमनिभ्यां चिच्च (तु० उ० ५।३९) इत्युणादावमुष्यादर्शनात् ॥३२६॥

२३०. कठ कृच्छ्रजीवने[6]। कठति। कठः। कठिचकिभ्यामोरः(उ० १।६५) कठोरः। बहुलमन्यत्रापि (उ० २।४९) इतीनच्—कठिनः ॥३२७॥

२३१. अठ गतौ। अठति ॥३२८॥

---

१. इदं धातुवृत्तावुद्धृतम् (पृष्ठ ८०) पुरुषकारे (पृष्ठ ६४) च।

२. पुरुषकारे (पृष्ठ ६४) अस्य पाठस्योद्धृतत्वादावश्यकत्वाच्चास्माभिः प्रवर्धितः।

३. अत्राह सायणः—'स्वामिकाश्यपौ तु स्फट स्फुटि स्फुटिर् इति त्रीन् धातून् पठतः' इति (धा० पृष्ठ ८०)। क्षीरतरङ्गिण्यां तु नैतादृशः पाठ उपलभ्यते।

४. काशकृत्स्नधातुपाठे तु 'स्फुटिर् विशरणे विकासे च' इति पठ्यते (पृष्ठ १६)।

५. 'नन्दिस्वामिनौ' पाठा०।

६. 'मठ कठ मदनिवासयोः'। अयं पाठो मैत्रेयस्य। अन्येषां मठ मदनिवासयोः। कठ कृच्छ्रजीवने इति (धातु० पृष्ठ ८१)। काशकृत्स्नधातुपाठे तु 'मठ निवासे, कठ कृच्छ्रजीवने' इति पाठः (पृष्ठ १६,१७)।

२३२. **रठ परिभाषणे** । रठति ॥३२९॥

२३३. **हठ प्लुतिशङ्कुबन्धनयोः** । प्लवने कीलबन्धने चार्थे । **हठ बलात्कारे** इति तु **चान्द्राः**(चा० धा० १।११७) हठति । हठः ॥३३०

२३४. **उठ उपघाते**[2] । ओठति । उवोठ । ऊठुः । **रुठ लुठ** इत्यपि **दौर्गाः**[3] — रोठति, लोठति ॥३३१॥

२३५. **पिठ हिंसासंक्लेशनयोः** । पेठति । पिठरं स्थाली । पिठिरम् । पीठम्, पीङः (धा० ४।३२) ठग् वा[4] ॥३३२॥

२३६. **शठ कैतवे**[5] । शठति । शठः । चुरादौ **शठ श्वठ असंस्कारगत्योः** (१०।२६) शाठयति ॥३३३॥

२३७ **शुठि**[6] **गतिप्रतिघाते**[7] । शुण्ठति । **शुठ** इति **दुर्गः** —शोठति ॥३३४॥

२३८ **कुठि च** । कुण्ठति कुण्ठः । **कुण्ठेर्नलोपश्च** (सर० कण्ठा० २।३।४३) कुठारः ॥३३५॥

---

१. काशकृत्स्नधातुपाठे 'हठ बलात्कारे' इत्येव पाठः (पृष्ठ १७) ।

२: 'उपसंघाते' पाठा० ।

३. पुरुषकारे (पृष्ठ ६८) धातुवृत्तौ (पृष्ठ ८१) च स्मृतम् । अत्र धातुवृत्तौ (पृष्ठ ८१) 'तथा च स्वामी — लुठतीति प्रयोगदर्शनात् तुदादौ पाठ इति' इत्युद्धृतः पाठः क्षीरतरङ्गिण्यां नोपलभ्यते । ४. 'वा' क्वचिन्न ।

५ अन्यत्र 'कैतवे च' इति चकारविशिष्टः पाठः । काशकृत्स्नधातुपाठेऽपि चकारः पठ्यते (पृष्ठ १७) । स्वामिनः चकाररहितः पाठः पुरुषकारे (पृष्ठ ७०) धातुवृत्तौ (पृष्ठ ८१) च स्मृतः ।

६. मैत्रेयसायणादयः 'शुठ' इत्ययेव पठन्ति । तथैव काशकृत्स्नधातुपाठेऽपि (पृष्ठ १७) । पुरुषकारे तु 'शुठ गतिप्रतीघाते, शूठ इति क्षीरस्वामी' इत्यन्यथा पाठ उपलभ्यते (पृष्ठ ६९) ।

७. "प्रतिघाते इति धनपालः । तथा च 'कुठि च' इत्युत्तरधातौ कुण्ठ इत्यादौ प्रतिहतिमात्रं प्रतीयते, 'अनिशित इत्यर्थः' इति च स एवाह" इति पुरुषकारः (पृष्ठ ६९), इत्थमेव सायणः (धातुवृत्तिपाठस्त्वत्र त्रुटितः द्र० पृ० ८१) । काशकृत्स्नधातुपाठे (पृष्ठ १७) तु 'शुठि शोषणे' इति पठ्यते । शुण्ठ्यादौ तस्यैवार्थस्य प्रतीयमानत्वात् । क्षीरस्वामी त्वग्रे (१।२४०) 'शुठि शोषणे' इत्यपि पठति ।

२३९. **रुठि[1] आलस्ये गतिप्रतिघाते[2] च** । रुण्ठति[1] ॥३३६॥

२४०. **शुठि शोषणे** । शुण्ठति । शुण्ठी । एनं **कौशिको** नाध्यैष्ट । चुरादौ (१०।९५) शुण्ठयति ॥३३७॥

२४१. **रुठि लुठि गतौ** । रुण्ठति । लुण्ठति । चुरादौ स्तेये (१०।२५) लुण्ठयति ॥३३८,३३९॥

२४२. **चुद्ड हाववरणे** । हावो भावसूचनम् । चुड्डति । चुड्डम् भगम्[3] । चुल्लिः ॥३४०॥

२४३. **अद्ड अभियोगे** । अड्डति । न न्द्राः द्विरुच्यन्ते—अड्डिडिषति । अदोपधात्वे अडिड्डिषति । क्विपि च विशेषः—अड्डनम् अट्, दोपधात्वेऽत् । चुड्डेर् (पूर्वधातौ) अप्येवम् इति पञ्जिका[4]—चुट्, चुत् ॥३४१॥

२४४ **क्रीडृ विहारे** । क्रीडति । अचिक्रीडत् । **क्रीडोऽनुसम्परिभ्यश्च** (१।३।२१) इत्यात्मनेपदम्—अनुक्रीडते, परिक्रीडते । **समोऽकूजने** (१।३।२१ वा०) इति वक्तव्येन नेह—संक्रीडन्ति शकटानि ॥३४२॥

२४५. **तूडृ तोडने**[5] । तोडनं द्रावणम्[6] । तूडति । **तुडृ** इति **दुर्गः**—तोडति ॥३४३॥

२४६. **हूडृ हुडृ हौडृ गतौ**[7] । हूडति । हूडोऽजः । होडति । होडः । हौडति ॥३४४-३४६॥

---

१. अन्यत्र धातुप्रदीपादिषु लुठि···'लुण्ठति' पाठः । २. प्रतीघाते' पाठा० ।
३. 'भगः' पाठा० । ४. 'पञ्जिकाकारः' पाठा० ।

५. तुडृ इति मैत्रेयसायणचन्द्रादयः । तुड (तूडृ) इति स्वामिशाकटायनौ (धा० वृ० पृ० ८२)

६. अत्र 'दारणम्' इति शुद्धः पाठः । यदाह पुरुषकारे तच्च दारण हिंसा च । यदाहान्त्ययोः (पुरुषकार, पृष्ठ ७३) अस्यायमर्थः—तुडि तोडने इत्यत्र 'तोडनं हिंसा' इत्याह स्वामी (क्षीर०१।१७९, पृष्ठ ५१) तूडृ तोडने इत्यत्र च 'तोडनं दारणम्' (क्षीर० २४५ पृष्ठ ५९) एतेनात्र द्रावणमित्यस्य स्थाने दारणमिति शुद्धः पाठो ज्ञेयः ।

७. उद्धृतं पुरुषकारे (पृष्ठ ७१)। 'हुडृ' धातुं नाधीयाते चन्द्रमैत्रेयौ, हौडृ

२४७. **रौडृ अनादरे** । रौडति ॥३४७॥

२४८. **लौडृ उन्मादे** । लौडति ॥३४८॥

२४९. **अड उद्यमे** । व्यडति । व्यड[1] । तदपत्यं व्याडि: । व्याड:, व्याल.[2] ॥३४९॥

२५०. **लड विलासे** । लडति । लडन्नपि दशन्नपि लडना लनना प्रमदा लाडयति । **लडयोरेकत्वाल्**[3] लालयति बालम् । **लल ईप्सायाम्** (१०।१३५)वा[4]। लल्लित: । **परिललल्लने ललितम्**? । **जिह्वोन्मथनयो:** (१।५५१) इति मित्—लडयति । चुरादौ **लड उपसेवायाम्** । (१०। ७) उपलाडयति ॥३५०॥

२५१. **कडि मदे** । कण्डति । कण्डू: । आद्यो (१।१८६) ऽनुदात्तेत्—कण्डते । **कड इति दुर्ग:**[5]—कडति । कडित्रं लेखनचर्म, **अशित्रादिभ्य इत्रोत्रौ** (उ० ४।१७३) । **कृकदिकटिकडिभ्योऽम्बच्** (तु० उ०४।८२) कडम्ब: शाकम् । कडङ्करो बुसम् । कडार:—**गडे: कड च**

---

धनपालशाकटायनौ । 'हौडृ' स्थाने 'होडृ' पठन्ति चन्द्रमैत्रेयसायणादय: । पुरुषकारे (पृष्ठ ७१) 'होडृ इति चन्द्र:' इति पाठदर्शनात् 'हौडृ' इति मुद्रितचान्द्रपाठोऽयुक्त: ।

१. 'अडो वृश्चिकलाङ्गूलम्, तेन तैक्ष्ण्यं लक्ष्यते । विशिष्टोऽडस्तैक्ष्ण्यमस्य व्यड:' इति धा० वृ० पृ० ८२ ।

२. डलयोरेकत्वस्मरणात् । चिन्त्यमिदं मतम् । नहि डलयो: पृथक्स्थानप्रयत्नसाध्ययोर्वर्णयोरेकत्वं शक्यते प्रतिज्ञातुम् । एवमेवडळयोरेकत्वं, रलयोरेकत्वं, बवयोरेकत्वं च द्रष्टव्यम् । एभिर्नियमैर्निष्पादिता: प्रयोगा वस्तुतस्तत्तद्विशिष्टवर्णवद्भ्यो धातुभ्यो निष्पन्ना: । आसन् पुरा एतादृशा: पृथगेव धातव: । तथा च दृश्यते काशकृत्स्नधातुपाठे (पृष्ठ १७०) 'ईड ईल (?, ईळ) स्तुतौ इति पृथग् द्वौ धातू । अर्वाक्कालिकैस्तु वैयाकरणैर्यदा भाषायां प्रयोगादर्शनाद् ग्रन्थस्य संक्षेपकरणाद्वा केचन धातवो धातुपाठे न निबद्धास्तदा तत्समानार्थका वर्णभिन्ना अपि प्रयोगा एतादृशैर्नियमैर्निष्पादिता: ।

३. एतत्पृष्ठस्था पूर्वा टिप्पणिर्द्रष्टव्या । स्मृतमिदं सिद्धान्तकौमुद्याम् (भाग ३, पृष्ठ १२६) ।

४. उद्धृतमिदं पुरुषकारे (पृष्ठ ६२), तत्र लड इति पाठ: ।

५. स्मृतमिदं धातुवृत्तौ (पृष्ठ ८२,३८१) पुरुषकारे (पृष्ठ ७२) च ।

(दश० उ० ८।६५) इति। **कलत्रम्—गडेरादेश्च कः** (उ०३।१०६) ॥३५१॥

२५२. **कडु कार्कश्ये**। कडुति कल्लोलः। **कद्ड**[1] इत्येके॥३५२॥

२५३. **गडि वदनैकदेशे**। गण्डगतसंहननक्रियायामित्यर्थः। गण्डति[2]। गण्डः। इञि—गाण्डिः, गाण्डी। सास्त्यस्य गाण्डिवं गाण्डीवम्—**गाण्डयजकात् संज्ञायाम्**[3] (५।२।११०) वः। गण्डिका, गण्डिः। गण्डूपदः क्रिमिः॥३५३॥

२५४. **उदात्ता उदात्तेतः**।

---

[**अथ सेट आत्मनेपदिनः**]

२५५. **तिपृ तेपृ ष्टिपृ ष्टेपृ क्षरणार्थाः**। इतः स्तुभान्ताः (१। २७८) षट्त्रिंशत् सेट आत्मनेपदिश्च। तेपते, स्तेपते, अतितेपत्, अतिष्टेपत्। किति विशेषः—तिपित्वा[4] तेपित्वा, स्तिपित्वा स्तेपित्वा। तेपिता, **गणकृत्यमनित्यम्**[5] (तु० सीरदेव परि० वृत्ति सं० १२१) इति तेप्ता॥३५४-३५७॥

२५६. **तेपृ कम्पने च**॥

२५७. **ग्लेपृ दैन्ये**। ग्लेपते, अजिग्लेपत्॥३५८॥

२५८. **टुवेपृ कम्पने**। वेपते, वेपिता, अविवेपत्। अथुच्—(द्र० अ० ३।३।८९) वेपथुः। **न भाभूपूकमिगमि** (८।४।३४) इति कृत्यचो णत्वं नास्ति—प्रवेपनम्। **वेपितुह्योर्ह्रस्वश्च** (उ० २।५२) विपिनम् ॥३५९॥

९. **केपृ गेपृ ग्लेपृ च**। चकारात् कम्पने, गतौ [च] सूत्रविभागात्[6]। केपते, गेपते, ग्लेपते॥३६०-३६२॥

---

१. 'कड' पाठा०। २. अत्र न्यायमञ्जरी (पृष्ठ ४१४) द्रष्टव्या।

३. गाण्डयजकात् इत्युभयथा संहितायास्तुल्यत्वाद् उभाभ्यां गाण्डिगाण्डीशब्दाभ्यां वः।

४. अत्र धातुवृत्तिर्द्रष्टव्या, पृष्ठ ८२।

५. उदात्तगणे पाठाद् इड्रूपं यत्कार्यं प्राप्नोति तदनित्यमिति भावः।

६. उद्धृतमिदं धातुवृत्तौ (पृष्ठ ८३) सिद्धान्तकौमुद्यां (भाग ३, पृष्ठ

२६०. **मेपृ रेपृ लेपृ गतौ**[1] । मेपते, रेपते,लेपते, अलिलेपत् । तुदादौ **लिप उपदेहे** (६।१३७)—लिम्पते, लिम्पति, अलीलिपत् । **हेपृ** च इति **कौशिकः** ।।३६३-३६५।।

२६१. **रेपृ शब्दे च** ।।

२६२. **त्रपूष् लज्जायाम्** । त्रपते **स्वरतिसूतिसूयति** (७।२।४४) इति वेट्—त्रपिता, त्रप्ता । **तॄफलभजत्रपश्च** (६।४।१२२) इत्येत्वाभ्यासलोपौ—त्रेपे । **षिद्भिदादिभ्योऽङ्** (३।२।१०४)—त्रपा । **आसुयुवपि** (३।१।१२६) इति ण्यत्—अपत्राप्यम् । **अलंकृञ् निराकृञ्** (३।२।१३६) इतीष्णुच्—अपत्रपिष्णुः । **शॄस्वृस्निहि** (उ० १।११) इत्युः—त्रपुः ।।३६६।।

२६३. **कपि चलने** । कम्पते । **चलनशब्दार्थाद्** (३।२।१४८) युच् कम्पनः । **नमिकम्पि** (३।२।१६७) इति रः—कम्प्रः । **निगरणचलनार्थेभ्यश्च** (१।३।८७) इति णौ परस्मैपदम्—कम्पयति । **मृगिकम्प्योः शविधिः**,[2] कम्पया । कम्पितः । **लङ्गिकम्प्योरुपतापशरीरविकारयोः** (६।४।२४ वा०) इति नलोपः-निकपतिः । **कुण्ठिकम्प्योर्नलोपश्च** (श्वेत० उ० ४।१५४, दश० उ० १।७३ कपाठः)—कपिः । **कपिकण्डिकटिपटिभ्य ओलः** (तु० उ० १।६६) कपोलः ।।३६७।।

२६४. **रबि लबि अबि शब्दे** । रम्बते । के रम्बते—करम्बः । स्वर्ण रत्नकरम्बितम्, **कृञश्चिद्**[3] इत्यम्बज् वा । लम्बते । अम्बते ।

---

१२७) च । अनूदितं च प्रौढमनोरमायाम् (पृष्ठ ५६७) । वस्तुतस्त्वत्र देहलीदीपन्यायेन चकारात् पूर्वसूत्रनिर्दिष्टं कम्पनम्, उत्तरसूत्रनिर्दिष्टा च गतिः समुच्चेया । काशकृत्स्नधातुपाठे तु 'केपृ गेपृ ग्लेपृ गतौ च' (१।४६१; पृष्ठ ७६) इति स्पष्टमेव गतिर्निर्दिश्यते ।

१. उद्धृतमिदं धातुवृत्तौ (पृष्ठ ८३) प्रौढमनोरमायां (पृष्ठ ५६७) च ।

२. नेदं पाणिनीयसम्प्रदाये स्मर्यते । व्याकरणान्तरीयमिदं वचनं स्यात् । 'मृगया' शब्दस्तु वार्त्तिककारेण निपातितः (महा० ३ । ३ । १०१) । तथैव 'कम्पया' शब्दोऽपि द्रष्टव्यः ।

३. नैतद् वचन क्वचिदुपलभ्यते । उणादौ तु 'कृकदिकडिकटिभ्यो ऽम्बच्' (४।८२) इति पठ्यते ।

अम्त्रा, **मूशक्यम्बिभ्यः क्लः** (तु० उ० ४।१०८) अम्ब्लम् ।।३६८-३७०।

२६५. **लबि अवस्रंसने च** । उल्लम्बते, विलम्बते, अवलम्बते, आलम्बत इत्यनेकार्थत्वम् उपसर्गद्योतितम्, [एवम्] अन्यत्रापि उदाहार्यम् । प्रालम्बिका स्वर्णमाला । प्रालम्बं कण्ठाद् ऋजुलम्बि माल्यम् । लम्बिका त्रिकटा । विलम्बिका शकृद्बिलम्बः । **नञि च लम्बेः** (तु० उ० १।८७) इत्यूः अलाबूः । अलम्बुसा[1] नाम शाकम् ।।३७१।।

२६६. **कबृ[2] वर्णे** । वर्णनं वर्णः, शुक्लादिश्च । कबते । अचकाबत् । ण्यत् (द्र० ३।१२४) काव्यम्[3] । इः (द्र० उ० ४।१३९) कविः । कबरः कृष्णः । कबरी केशवेषः[4] ।।३७२।।

२६७. **क्लीबृ अधाष्टर्ये** । क्लीबते, अचिक्लीबत् । क्लीबः । क्लीबितः ।।३७३।।

२६८. **क्षीबृ मदे** । क्षीबते अचिक्षीबत् । **अनुपसर्गात् फुल्लक्षीब** (८।२।५५) इति निष्ठायां क्षीबः साधुः, उपसर्गात् प्रक्षीबितः । दिवादौ **क्षीबु निरसने**[5] क्षीब्यति ।।३७४।।

२६९. **शीभृ कत्थने** । शीभते । शीभरः कत्थनः ।।३७५।।

२७०. **चीभृ च** । चात् कत्थने । चीभते ।।३७६।।

२७१. **रेभृ शब्दे** । रेभते । **क्षुब्धस्वान्तध्वान्त** (७।२।१८) इति

---

१. द्र० 'अलम्बुमानां याता' इति पातञ्जलप्रयोगः (महा० १।१। प्रथमाह्निकान्ते) ।

२. वान्त इति क्रियारत्नसमुच्चयः (पृष्ठ ९८) ।

३. काव्यम् कविः इत्येतावन्तस्थवर्णोपेतौ 'कु शब्दे' इत्यस्माद्धातोः सिध्यतः, न तु 'कबृ वर्णे' इत्यस्माद् बान्तधातोः । बवयोरभेदस्तु चिन्त्य इति पुरस्ताद् (पृष्ट ६१ टि० २) उक्तम् । यच्चात्र कविसिद्धये इप्रत्यय उक्तः । सोऽप्यजन्तादेव भवति, न तु हलन्तात् । तथा चौणादिक सूत्रम्—अच इः (४।१३९) ।

४. 'केशपाशः' पाठा० ।

५. दिवादौ नायं क्षीरस्वामिना पठ्यते । चान्द्रधातुपाठे तु दिवादौ 'ष्ठिवु क्षीवु निरसने' (४।४) इति वान्तः पठ्यते, न तु बान्तः । क्षीरस्वाम्यपि उत्तरत्र वान्तप्रकरणे क्षीव निरसने (१।३७७) इति वकारान्तं पठति ।

विरिब्धः स्वरे साधुः। विरेभितोऽन्यः। **अभि रभि शब्द** इति दुर्गः— अम्भते, अम्भः। रम्भते, रम्भा। करम्भो दधिसक्तवः ॥३७७॥

२७२. **ष्टभि स्कभि प्रतिबन्धे**। प्रतिबन्धः क्रियानिरोधः। स्तम्भते। स्तम्भः। विष्टम्भः **अवादौर्जित्यालम्बनाविदूर्येषु**[1] (चान्द्र ६।४।५३॥ सर० क० ७।४।५६) इति षत्वम्—अवष्टम्भते शूरः, दण्डमवष्टम्भते, अवष्टब्धे सेने। **उदः स्थास्तम्भोः पूर्वस्य** (८।४।६१) इति तत्वम्—उत्तम्भते। **झरो झरि सवर्णे** (८।४।६५) वा लोपः। तिस्तम्भिषते, तिष्टम्भयिषति[2], **टपरः षकारोऽयमित्येके**[3]—ष्टम्भते [टिष्टम्भे], टिष्टम्भिषते, टिष्टम्भयिषति, विष्टम्भ्यते। विष्टभ्यत इति तु स्तभ्नातेः। स्कम्भते, स्कम्भ्यते। विष्कभ्यत इति स्कभ्नातेः। स्तन्भुस्कन्भू सौत्रौ स्तः—स्तभ्नाति स्तभ्नोति, स्कभ्नाति स्कभ्नोति (द्र० अ० ३। १।८२)। **वेः स्कभ्नातेर्नित्यम्** (८।३।७७) षत्वम्— विष्कम्भः ॥३७८-३७९॥

२७३. **जभ जृभि गात्रविनामे**। जभते, जृम्भते। जभितः, जृम्भितः जृम्भः। **रधिजभोरचि** (७।१।६१) इति नुम् जम्भकः, जम्भनम्, जम्भः। **लुपसदचर** (३।१।२४) इति भावगर्हायां यङ्, **जपजभदहदश** (७।४।८६) इति नुक्—जञ्जभ्यते ॥३८०,३८१॥

२७४. **शल्भ कत्थने**। शल्भते ॥३८२॥

२७५. **वल्भ भोजने**। वल्भते, वल्भः ॥३८३॥

२७६. **गल्भ धार्ष्ट्ये**। प्रगल्भते। प्रगल्भः। **गल्भक्लीबहोडेभ्यः क्विप्** (तु० ३।१।११ वा०) **कास्प्रत्ययादाममन्त्रे लिटि** (३।१।३५) प्रगल्भाञ्चक्रे[4], प्रजगल्भे[5] ॥३८४॥

---

१. अवाच्चालम्बनाविदूर्ययोः (अ० ८।३।६८) इति पाणिनीयं सूत्रम्।

२. स्तौतिण्योरेव (अ० ८।३।६१) इति षत्वम्।

३. मतमिदं धातुवृत्तौ (पृष्ठ ८४) पुरुषकारे (पृष्ठ ६३) च स्मृतम्।

४. 'अवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः' इति महाभाष्ये (३।१।११) अवोपसर्गविशिष्टपाठादन्योपसृष्टादनुपसृष्टाच्च क्विपि प्रगल्भति गल्भति इत्येव भवतीति धातुवृत्तिकारः (पृष्ठ ८६)। क्षीरस्वामी तु चान्द्रमतम् (१।१।२८) अनुसृत्य निरुपसर्गं पपाठ।

५. आमः कथं विकल्प इति न स्पष्टीकृतं स्वामिना।

२७७. **स्रम्भु[1] प्रमादे** । प्रमादोऽवलेपः । विस्रम्भते[1], विस्रभ्यते[1] । **स्रन्सु[2] इत्येके** ॥३८८॥

२७८. **ष्टुभु स्तम्भे** । स्तम्भः क्रियानिरोधः । **स्तोभो दोषवृद्ध्याख्यार्थ** इति **दुर्गः**—स्तोभते । **उपसर्गात् सुनोति** (८।३।६५) इति षत्वम्—अभिष्टोभते । स्तुब्ध्वा, स्तोभित्वा, स्तुभित्वा । स्तुब्धः । अनुष्टुप् । त्रिष्टुप् । स्तुन्भुः सौत्रोऽस्ति (द्र० अ० ३।१।८२)—स्तुभ्नाति, स्तुभ्नोति ॥३८९॥

२७९. **उदात्ता अनुदात्तेतः** ।

---

[**अथ सेटः परस्मैपदिनः**]

२८०. **गुपू रक्षणे** । इतः शुम्भान्ताः (१।२९२) चतुस्त्रिंशत् सेटः परस्मैपदिनश्च । **गुपूधूपविछ**[3] (तु० ३।१।२८) इत्यायः—गोपायति । **आयादय आर्धधातुके वा** (३।१।३१) गोप्ता, गोपिता, गोपायिता । **राजसूयसूर्य** (३।१।११४) इति कुप्यं साधु । **गुप गोपने** । (१।६९६) तूत्पत्तिचिकीर्षितः[4]—जुगुप्सते **गुप्तिज्किद्भ्यः** (३।१।५) इति । चुरादौ **गुपू भासार्थः** (१०।१९७) गोपयति, गोपना ॥३८७॥

२८१. **धूप सन्तापे** । धूपायति, धूपयाञ्चकार, दुधूप । चुरादौ भासार्थः । (१०।१९७) धूपयति ॥३८८॥

२८२. **जल्प जप व्यक्तायां वाचि** । जल्पति । **प्रतिषेधे ह्सादीनामुपसंख्यानात्** (द्र० १।३।१५ वा०) व्यतिजल्पन्ति । घञि (३।१।१८) जल्पः । **जल्पभिक्ष** (३।२।१५५) इति जल्पाकः ॥२८९॥

२८३. **जप मानसे च** । मनोनिवर्त्ये वचने । जपति । **लुपसदचर** (३।१।२४) इति यङ्—जञ्जप्यते, **जपजभदह** (७।४।८६) इति नुक् ।

---

१. हस्तलेखेषु सर्वत्र तालव्यशकारवान् पाठः ।

२. अत्र पुरुषकारः (पृष्ठ ११७) धातुवृत्तिश्च (पृष्ठ८६) द्रष्टव्या ।

३. काशिकादिषु 'विच्छ' इति सतुक्पाठः ।

४. चिकीर्षित इति सनः प्राचां संज्ञा । उत्पत्त्यवस्थायामेवास्मात् स्वार्थे सन् भवतीति भाव. ।

**पोरदुपधाद्** (३।१।९८) यत्—जप्यम् । **स्तम्बकर्णयोरमिजपोः** (३।२।१३) अच्—कर्णेजपः । **व्यधजपोरनुपसर्गे** (३।३।६१) अप्—जपः । जपितः । जप्तस्त्वादितश्च (७।२।१६) इति चकारस्यानुक्तसमुच्चयार्थत्वादित्याहुः[1] ॥३६०॥

२८४. **चप सान्त्वने**[2] । चपति । चपस्य विकारः चापः[3] । चपेटः[4] चपटी विपुलः ॥३६१॥

२८५. **षप समवाये** । सपति । सिषापयिषति । सप्त । सप्तिरश्वः[5] । **सचेति चन्द्रः**(चा० धा० १।१४०) सचति, सचिवः[6] ॥३६२

२८६ **रप लप व्यक्तायां वाचि** । रपति लपति । **आसुयुवपि** (३।१।१२६) इति ण्यत् अपलाप्यम् । लपितम् । लपनं मुखम् । आलापः, अपलापः, प्रलापः ॥३६३,३६४॥

२८७ **चुप मन्दायां गतौ** । चोपति किञ्चिच्चलति । चोपनम् । उणादौ चुप्पम्[7] निष्पन्दत्वम्[8] । **चुपेरच्चोपधायाः**(तु० उ० १।११०) —चपलः । **इत्थं चात्र विपरीतार्थावगमादिममभिप्रायं न विद्मः, यथाकथञ्चित् नाम्नां व्युत्पत्तिः कार्येति चेत् तर्हि चपेर्** (१।२८४) **एवाप्रयासेन साध्यताम्** ॥३६५॥

२८८. **तुप तुम्प त्रुप त्रुम्प तुफ तुम्फ हिंसार्थाः** । तोपति तुम्पति ।

---

१. तुलनीयम्—'चकारोऽनुक्तसमुच्चयार्थे—आश्वस्तः'(का० ७।२।१६) ।

२. 'सान्त्वङे' इति सर्वकोशेषु पाठः ।

३ 'चपो वेणोर्विकारश्चापम्' इत्यमरटीकायां स्वामी (पृष्ठ १९२) ।

४. 'खण्डिकोपाध्यायस्तस्मै चपेटां ददाति' इति वृद्धिरादैच् (१।१।१) इत्यत्र भाष्ये स्त्रीलिङ्गः ।

५. अमरटीकायां 'सपति समवैति सप्तिः' इति स्वामी (पृष्ठ १८६) । सायणस्तु 'सप्तानामपत्यं साप्तिः' इत्युक्तवान् (धा० वृ० पृष्ठ ८७) ।

६. उद्धृतमिदं पुरुषकारे (पृष्ठ ४६) धातुवृत्तौ(पृष्ठ ८७)तु पाठो भ्रष्टः । उत्तरत्र (पृष्ठ २०२) तु 'शाकटायनक्षीरस्वामिनौ तु सप्त सप्तिश्चोदाहृत्य सचेति कश्चित् पठति' इति शुद्धः पाठ उपलभ्यते ।

७. बाहुलकात् पः प्रत्यय इति भावः ।

८. 'निष्कर्मत्वम्' पाठा० । तुलनीयम्—हैमोणादि० ३०१ ।

प्रात् तुम्पतेर्गतौ[1] सुट् प्रस्तुम्पति गां वत्सः। अुफ अुन्फ इति चन्द्रः (चा० धा० १।१४२) अधिकौ पठति ॥३९६-४०१॥

२८९. **वर्फ[2] रफ रफि अर्ब बर्ब कर्ब खर्ब गर्ब घर्ब शर्ब षर्ब सर्ब चर्ब भर्ब नर्ब[3] गतौ**। पञ्चदशैते गत्यर्थाः। बर्फादींस्त्रीन् हिंसार्थे कण्ठः पठति। गर्वेत्यनार्षः, ओष्ठ्योऽत्र बः, पवर्गप्रस्तावात्। अर्बेत्यादौ रेफस्थाने नकारं कौशिको मन्यते। एकः शर्बस्तालव्यादिः,अपरः षोपदेशः, अन्यो दन्त्यादिः। अर्बा[4] अश्वः। बर्बरः, बर्बरी कुञ्चिताः केशाः। कर्बटो ग्रामचतुःशतीमध्ये पुरम्[5]। कर्बुरश्चित्रो वर्णः। खर्बः[4], गर्ब[4], शर्ब[4], सर्बः[4]। चर्बणम् ॥४०२-४१६॥

२९०. **चुबि वक्त्रसंयोगे**। नमस्तुङ्गशिरश्चुम्बि (हर्षचरित ५।२) इत्युपचारात्। चुम्बति। चुम्बितम्। चुम्बनम् ॥४१७॥

२९१. **सृभु सृन्भु हिंसार्थौ**। सर्भति। सृम्भति। एतावप्यषोपदेशौ, सृवर्जम् (६।१।६४ भाष्ये) इत्यनेनानर्थकस्यापि ग्रहणात्[6] ॥४१८,४१९

२९२. **शुन्भ भाषणे हिंसायां च**[7]। भासन इति दुर्गः। शुम्भति। शुभ शुन्भ शोभार्थौ (६।३४) इत्यस्य शुम्भते[8]। षोपदेशोऽयमिति गुप्तः, सावष्टम्भनिषुम्भन[9]नमद्भूगोले (द्र० मालतीमाधव ५।२२) इत्यादिदर्शनात्, सुम्भति। कुषुम्भम् ॥४२०॥

२९३. **उदात्ता उदात्तेतः**।

---

१. 'प्रात्तुम्पतेर्गवि' इति सर० कण्ठा० ६।१।१७३॥ प्रात्तुम्पतौ गवि कर्तरि इति पारस्करादिगणसूत्रम्। (द्र० काशिका ६।१।१५७)।

२. 'वर्प' 'वर्फ' पाठान्तरे। ३. 'तर्ब' पाठा०।

४. दन्त्योष्ठ्यवकारवन्त एते, तथैव च कोशेषु पठ्यन्ते। ओष्ठ्यबकारवतां पाठे कारणं मृग्यम्। ५. 'ग्रामचतुःशतीमुख्यपुरम्' पाठा०।

६. स्मृतमिदं धातुवृत्तौ (पृष्ठ ८८) नैतादृश भाष्यव्याख्यानमन्यत्र दृष्टम्।

७ 'शुम्भ भाषणे ...... दुर्गः' इत्येवं पुरुषकार उदाजहार (पृष्ठ १८)। अत्र धातुवृत्तिरपि द्रष्टव्या (पृष्ठ ८८)।

८. तुदादौ परस्मैपदिषु पाठात् 'शुम्भति' इति युक्तम्।

९. 'निशुम्भसंभ्रम' इति पाठो मुद्रिते। पुरुषकारेऽप्ययमेव पाठ उद्ध्रियते (पृष्ठ ६८)।

[ अथ सेट आत्मनेपदिनः ]

२९४. **घिणि घुणि घृणि ग्रहणे ।** इतः कम्वन्ताः (१।३००) दश सेट आत्मनेपदिनश्च । घिण्णते, घिण्णितः । घुण्णते[1] । घृण्णते ।।४२१-४२३।।

२९५. **घुण घूर्ण भ्रमणे ।** घोणते । घोणः । घुणाक्षरम् । घुणावर्तोऽरघट्टः । घूर्णते । तुदादौ (६।४९) परस्मैपदिनौ स्तः—घुणति, घूर्णति ।।४२४,४२५।।

२९६. **पण व्यवहारे स्तुतौ च ।** चक्रपाणि पणायति, आयव्यवधानात् तङ् नास्ति[2] । **गुपूधूपविच्छिपणिपनिभ्य आयः** (तु० ३।१।२८) इति स्तुत्यर्थेन पनिना साहचर्यात् व्यवहारार्थस्य पणेरायो नास्ति[3] । **व्यवहृपणोः** (२।३।५७) इति षष्ठी—शतस्य पणते । **न चोपलेभे वणिजां पणायाम्** (भट्टि० ३।२७) इति तु भट्टिर्भ्रान्तः[4] । **अवद्यपण्य** (३।१।१०१) इति पणितव्ये पण्यः साधुः । **नित्यं पणः परिमाणे** (३।३।६६) इत्यप्—पणः । **गोचरसंचर** (३।३।११९) इत्यापणः साधुः ।

---

१. इतोऽग्रे 'घुण्णः' इति क्वचिदधिकम् ।

२. धातुवृत्तौ क्षीरस्वामिनो मते 'पणायते' इत्यात्मनेपदमुक्तम् (पृष्ठ ९०), परन्त्वत्र तदभावो विधीयते । काशकृत्स्नधातुपाठे तु 'पण पन व्यवहारे स्तुतौ च' इति पठ्यते । तस्य कन्नडटीकायां 'पणते पणायते, पनते पनायते' इत्येवमुभाभ्यां सार्वधातुक आयविकल्प आत्मनेपदं चोदाह्रियते (१।४८०, पृष्ठ ७९) क्रियारत्नसमुच्चयेऽपि 'पणायते पनायते इति पक्षान्तरे' इत्युक्तम् (पृ० ९७) ।

३ वृत्तिकारदयोऽप्यत्रैवानुकूलाः । तथापि निघण्टावर्चतिकर्मसु (३।१४) 'पणायति पणते' इत्युभयपाठदर्शनात् स्तुत्यर्थादपि पणतेरायविकल्पो द्रष्टव्यः । तथा सति काशकृत्स्नीयं पूर्वोक्तं (टि० २) व्याख्यानं युक्तमेव ।

४. उद्धृतमिदं धातुवृत्तौ (पृष्ठ ८९) । काशकृत्स्नपाठानुसारं तु व्यवहारेऽप्यायो भवति (अस्मिन्नेव पृष्ठे टि० २ ) तथा सति न भट्टिर्बभ्रामेति शक्यते वक्तुम् । वणिक्पदनिर्वचने (उ० २।७१) पाणिपदनिर्वचने (उ० ४।१३४) च 'पणायति व्यवहरति' इत्येवं निर्दिशन् स्वामिदयानन्दोऽप्यत्रैवानुकूलः । विशेषस्तु दयानन्दीयोणादिवृत्तौ (३।६९) टिप्पण्यां द्रष्टव्यः (पृष्ठ ९५, टि० ४) ।

**आङि पणिपनि** (उ० २।४५) इतीकन्—आपणिकः। **पणेरिज्यादेशश्च वः** (उ० २।७०) इति वणिक्। **अशिपणाय्यो** (उ० ४।१३२) इति पाणिः ॥४२६॥

२९७. **पन च**। चकारात् स्तुतौ। पनायते[1] हरिम्। अत्र **अवयवेऽपि कृतं लिङ्गं समुदायस्य विशेषकं भवति** (महा० ३।१।५) इत्यायव्यवधानेऽप्यात्मनेपदम्[1]। **अत्यविचमि** (उ० ३।११७) इत्यसच्—पनसः ॥४२७॥

२९८. **भाम क्रोधे**[2]। भामते भामिनी ॥४२८॥

२९९. **क्षमूष् सहने**। क्षमते। क्षन्ता, क्षमिता। क्षान्तः। क्षमा। दिवादौ (४।९९) क्षाम्यति। क्षान्तिः ॥४२९॥

३००. **कमु कान्तौ**। कान्तिरभिलाषः। उत्पत्तिकारितो[3]ऽयम्। **कमेर्णिङ्** (३।१।३०)—**कामयते**। **आयादय आर्धधातुके वा** (३।१।३१) इति चकमे, कामयाञ्चक्रे। कमनम्, कामनम्। कान्तिः। कामना। कमित्वा, कान्त्वा, कामयित्वा। कान्तः, कामितः। अचीकमत, **कमेश्चङि उपसंख्यानात्** (तु० ३।१।४८ वा०) अचकमत। **तुं काममनसोरपि** (६।१।१४४ काशिका) इति कर्तुकामः। **शीलिकामिभक्षाचरिभ्यो णः** (३।२।१ वा०) मांसकामा स्त्री। **लषपतपद** (३।२।१५४) इत्युकञ्—दास्याः कामुकः, **न लोकाव्यय** (२।३।६९) इति निषेधे प्राप्ते **कमेर्भाषायाम्** (२।३।६९ वा०) इति षष्ठी। **नोदात्तोपदेशस्य** (७।३।३४) इति निषेधे प्राप्ते **अवमिकमिचमीनाम्** (७।३।३४ वा०) इति वृद्धिः—कामी। **नमिकम्पि** (३।२।१६७) इति रः—कम्रः। युजपीष्यते—(द्र० ३।२।१५०भा०) कमनः। **कमिमनि-**

१. स्मृतमिदं प्रक्रियाकौमुद्याम् (भाग २ पृष्ठ १४०)। निघण्टावर्चतिकर्मसु (३।१४) 'पनायते' इत्यात्मनेपदं श्रूयते। यथा तु वैयाकरणानां मतं तथा पनायतेरार्धधातुके आयप्रत्ययाभावेऽनुदात्तत्वस्य चरितार्थत्वादनात्मनेपदेन न भवितव्यम्।

२. 'कोपे' पाठा०।

३. कारित इति णेः प्राचां संज्ञा, उत्पत्त्यवस्थायामेव ण्यन्त इत्यर्थः। काशकृत्स्नीयकन्नडटीकायामत्रापि 'कमते कामयते' इत्येवं सार्वधातुके णिङो विकल्पो दृश्यते। ६९ पृष्ठस्था चतुर्थी टिप्पण्यपि द्रष्टव्या।

**जनि** (उ० १।७३) इति कन्तुः। **कमेरठः** (उ० १।१०२) कमठः। **कलस्त्रपश्च** (उ० १।१०६) इति कमलम्। **वृतॄवदि** (उ० ३।६२) इति सः—कंसः। उणादौ कम्बलः, कोमल, कमला, कामला। **अतिकमिभ्रमि** (उ० ३।१३२) इत्यरः—कमरः। **कमेरुश्चोपधायाः** (तु० उ० ३।१३८) कुमारः। **अतः कृकमिकंस** (८।४।४६) इति सत्वम्—पयस्कामः। **न भाभूपूकमिगमि** (८।४।३४) इति कृत्यचो न णत्वम्—प्रकमनम्, प्रकामनम् ॥४३०॥

३०१. **उदात्ता अनुदात्तेतः**।

---

[**अथ सेटः परस्मैपदिनः**]

३०२. **अण रण वण मण कण क्वण व्रण भ्रण ध्वण शब्दार्थाः**। एते शब्दनक्रियार्थाः। इतः क्रम्वन्ता (१।३१६) अर्यास्त्रिंशत् सेट् परस्मैपदिनश्च। अणति। **क्वुन् शिल्पिसंज्ञयोः**। (उ० २।३१) अणको नापितः। इञ् (द्र० उ० ४।१२४) आणिर् अक्षाग्रकीलकः, अणिरित्यमरसिंहः (२।८।५७)। अण्डम्। **अणश्च** (उ० १।८) इत्युः—अणुः। **अणो ड च** (श्वेत० उ० १।८४) इति णित्वाद् आडूः—आलुका। रणति। **वशिरण्योश्च** (३।३।५८ वा०) इत्यब् वक्तव्यः, रणन्त्यस्मिन्निति रणः। **रण-मण-क्वणां गतौ मित्त्वं स्मर्यते**[१] रणयति, अन्यत्र राणयति। वणति। उद्व्रणः, उल्वणः, उदूखलोलूखलवत्[२] पृषोदरादित्वात् (६।३।१०९) लत्वं वा। वणत्यस्मिन् ज्या—वाणः[४]। वण्यतेऽसावनया वा—इञ्- वाणिः, वाणी[३]। मणितं सुरतकूजिते रूढम्, एवं कणितम् आर्ते, क्वणितं वीणादौ, रणितं नपुरादौ, कूजितं विहगादौ, बृंहितं गजे, ह्रेषितं हये, वाशितं पशुषु, गर्जितं मेघादौ, गुञ्जित भ्रमरादौ, गुञ्चितम् सिंहादौ, **इत्यादि प्रतिधातुस्थं कियद् व्याचक्ष्महे वयम्, लोकात् सूरिभिरत्यूह्यम्, लक्ष्यमूलं हि लक्षणम्**। मणिः। मणिको महाकुम्भः। कणति। कणः, कणिका, कङ्कणः,

---

१. नेदमस्माभिः क्वचिदुपलब्धम्।

२. यथा उदूखल-उलूखलशब्दयोरुपसर्गदकारस्य विकल्पेन लत्वं तथैव उद्व्रण-उल्वणशब्दयोरपि द्रष्टव्यमिति भावः। ३. कृदिकारादक्तिनः (४।१।४१ गणसूत्रम्) इति ङीष्। ४. बाण ओष्ठ्यादिः, न दन्त्योष्ठ्यादिः।

कणूकः, कण्ठः। **अशूप्रुषि** (उ० १।१५२) इति **क्वन्**—कण्वं पापम्। काण्डम्। क्वणति। **क्वणो वीणायां च** (३।३।६५) इति **वाप्**—निक्वणः निक्वाणः, क्वणः क्वाणः, प्रक्वणः प्रक्वाणः, उपक्वणः उपक्वाणः। **पीयुक्वणिभ्यां कालड्ध्रस्वः प्रसारणञ्च** (तु० उ० ३।७६) कुणालम्। **क्वणेः सम्प्रसारणञ्च** (उ० ३।१४३) कुणपः। व्रणति व्रणः। चुरादौ **व्रण गात्रविचूर्णने** (१०।३२३) अदन्तः—व्रणयति। **मूर्धन्यान्तो ध्वणिर् लोके नास्ति** ॥४३१-४३९॥

३०३. **ओणृ अपनयने**। ओणति। मा भवान् ओणिणत्। एतदेव ऋदित्त्व ज्ञापकम्—नित्यमन्तरङ्गञ्च द्विर्वचनमुपधाह्रस्वत्वेन बाध्यत इति, अन्यथा द्विर्वचने कृत उपधाया अभावाद्ध्रस्वो न प्राप्नोति, किम् ऋदित्त्वेन कृतं स्यात्, अतो मा भवानटिटदित्यादौ ह्रस्वः सिद्धः॥४४०

३०४. **शोणृ वर्णगत्योः**। शोणति। शोणो लोहितः। शोणितं रुधिरम्। गतौ—शोणो नदः॥४४१॥

३०५. **श्रोणृ संघाते**। श्रोणिः। श्रोणः पङ्गुः॥४४२॥

३०६. **श्लोणृ च**॥४४३॥

३०७. **पैणृ[1] गतिप्रेरणश्लेषणेषु**। पैणति[1] अपिपैणत्[1]।॥४४४॥

३०८. **वन भण धण शब्दे**। वनति। वनम्। संवननं वशीकरणम्। भणति। भाणः अलङ्कारे सुप्रसिद्धः। धणति। **कौशिकस्तु** दन्त्यान्त्यमाह। उस् (द्र० उ० २।११८) धनुः[2]। वनिप्—धन्वा[3]। **कृषिचमि** (उ० १।८२) इत्यूः—धनूः राशिः॥४४५—४४७॥

३०९. **कनी दीप्तिकान्तिगतिषु**। दीप्तिः प्रकाशः। कान्तिः शोभा। कनति। कनीनिका। कनकम्। अघ्न्यादौ (द्र०उ० ४।१११)

---

१. 'पेणृ', 'पेणति', 'अपिपेणत्' इति पाठा०।

२. उणादिवृत्तिकारास्तु धन धान्य इत्यस्माद् 'धेनुः, धन्व, धनूः' शब्दान् व्युत्पादयन्ति।

३. अत्र लिपिवशेन भ्रान्त्या 'उ० १।१५६' संख्या निर्दिष्टा। अस्मिन्नुणादिसूत्रेण तु धवि धातोः (धन्व) कनिन्प्रत्ययो विहितः। इह तु वनिप् प्रत्ययो निर्दिष्यते। स च अन्येभ्योऽपि दृश्यते, (अष्टा० ३।१।७५) सूत्रेण भवति।

कन्या[1]। कान्तः ॥४४८॥

३१०. **स्तन ध्वन शब्दे**[2] । स्तनति । स्तनितम् । स्तनः । स्तानयति । चुरादावदन्तः **स्तनगदी देवशब्दे**[3]। (१०।२४८) मेघः स्तनयति । **अभिनिसः स्तनः शब्दसंज्ञायाम्** (८।३।८७) षत्वम्—अभिनिःष्टानो[4] विसर्गः[5]। ध्वनति । ध्वानः, ध्वनिः । **क्षुब्धस्वान्तध्वान्त** (७।१।१८) इति ध्वान्तं तमश्चेत्, ध्वनितमन्यत्। चुरादौ अदन्तः (१०।२७५) ध्वनयति ॥४४९, ४५०॥

३११. **वन षण भक्तौ** । भक्तिर्भजनम् । वनति । वनम् उदकम्[6] । वनिता । ऋतन्यञ्जि (उ० ४।२) इति वनिष्ठु पुष्पान्त्रम् । उणादौ—वानरः, वानीरो वेतसः । तनादौ **वनु याचने** (८।८) वनुते, वनोति[7] । सनति । सनो **ये विभाषा** (६।४।४३) आत्त्वम्—सायते सन्यते । कथं सन्यात् ? ये इत्यदन्ते ये परे विधानात्[8] । **सनीवन्तर्ध**(७।१ ४९)इति वेट्—सिसनिषति, **स्तौतिण्योरेव षण्यभ्यासाद्** (८।३।६१) इति नियमात् षत्वं नास्ति। सिषासति **सनोतेरनः**(८।३।१०८) इति

---

१. अस्मादेव धातोः कन्यार्थकः कनीना शब्दः, यस्य 'कानीन' इति ताद्धित रूपम् । विशेषस्त्वत्र अस्मदीये 'संस्कृत व्याकरण शास्त्र का इतिहास' (भाग १, पृष्ठ ३३,च०संस्क०) पुस्तके द्रष्टव्यः ।

२ 'ष्टन ध्वनेति क्षीरस्वामी' इति पुरुषकारः (पृष्ठ ९०)। अजन्त्यपराः सादयः षोपदेशाः (अ० ६।१।६४) इति भाष्यवचनात् षोपदेश एवायम् । क्षीरतरङ्गिण्यां कदाचित् पाठभ्रंशो जातः स्यात् । ३. 'मेघ शब्दे' पाठा० ।

४. अभिनिष्टान' इति सार्वत्रिको विभक्तिरहितोऽपपाठः ।

५. चन्द्रस्तु 'अभिनिष्टानो वर्णे' (७।४।७३) इति सूत्रयन् वर्णमात्रस्य संज्ञामाह ।

६. 'उदकम्' इति क्वचिन्न । निघण्टौ(११२)उदकनामसु पठितः । काशकृत्स्नीयधातुपाठस्य कन्नडटीकायामपि तथैव (काशकृत्स्नधातुव्याख्यानम् १। २१९) ।

७. तौदादिको वनिरनुदात्तेत्, न स्वरितेत् । तौदादिके वनधातौ 'अनुदात्तेत्वं' स्पष्टमुच्यते (८।८) । तेनेह 'वनोति' इति पाठभ्रंशो द्रष्टव्यः ।

८. धातुपारायणकारस्याप्येतदेव मतम । अन्ये तु यासुटयपि 'सायात् सन्यात्' आत्वविकल्पमिच्छन्ति । द्र० धातुवृत्तिः पृष्ठ ९४ ।

षत्वम् । **दृसनिजनि** (उ० १।३) इति ञुण्—सानुः । **खनिकष्यञ्ज्यसि** (उ० ४।१३९) इति सनिः । **न क्तिचि दीर्घश्च** (६।४।३९) सातिः[1] **लोपश्चास्यान्यतरस्याम्** (६।४।४५) सातिः सन्तिः । तनादौ **षणु दाने** (८।२) सनुते सनोति ।।४५१,४५२।।

३१२. **अम गत्यादिषु** । **कनी दीप्तिकान्तिगतिषु** (१।३०९) इयं गतिः, **स्तन ध्वन शब्दे** (१।३१०) अयं शब्दः । **वन षण भक्तौ** (१।३११) इयं भक्तिः—एते गत्यादयोऽर्थाः । अमति **न कम्यमिचमाम्** (१।५५७) इति न मित्त्वम्—आमयति । **रुष्यमत्वरसंघुषास्वनाम्** (७।२।२८) इति निष्ठायां वेट्—अम्यमितः अभ्यान्तः । अम्भः । **अमेः सन्** (उ० ५।२१) अंसः । **अमेर्गुरोरश्च लोवा** (दश० उ० १।४५) अङ्गुरिः अङ्गुलिः । **अर्जिदृशि** (उ० १।२८) इत्यन्धुः कूपः । अन्धयतेस् (१०।३११) तु युक्तः । **अमितम्योर्दीर्घश्च** (उ० २।१६) इत्याम्रः । **हसिमृग्रि** (उ० ३।८६) इति तन्—अन्तः । **अमिचिमिदिशसिभ्यः क्त्रः** (उ० ४।१२३) अन्त्रम् । **अमिनक्षिकलियजिवधिपतिभ्योऽत्रन्** (तु० उ० ३।१०४) अमत्रम् पात्रम् । अमेरित्रन्[2] अमित्रोऽरिः । **ट्रन्**[3] (द्र० दश० उ० वृत्ति ८।८६) अन्त्रम् ।।४५३।।

३१३. **द्रम हम्म मीमृ**[4] **गतौ** । द्रमति । **ह्म्यन्तक्षण** (७।२।५) इति सिचि वृद्धिर्नास्ति—अद्रमीत् । दन्द्रम्यते । **जुचङ्क्रम्यदन्द्रम्य** (३।२।१५०) इति यङन्ताद् युच्— दन्द्रमणः । **द्रमिमस्योरुच्च** (दश० (उ० ८।११३) द्रमलं मानभाण्डम् । **हम्मतिः सुराष्ट्रेष्विति भाष्यात्** (पस्पशाह्निक) द्विर्बद्धो मकारः ।।४५४—४५६।।

३१४. **मीमृ शब्दे च** । मीमति, अमिमीमत् ।।

---

१. 'न क्तिचि दीर्घश्च (६।४।३०) सूत्रं तु दीर्घत्वस्य प्रतिषेधं शास्ति । तस्मादस्यात्र निर्देशश्चिन्त्यः । आत्व, पक्षेऽनुनासिकस्य लोपश्च लोपश्चास्यान्यतरस्याम् (६।४।४५) इत्यनेनैव विधीयेते तेन सातिः सति सन्ति इति त्रीणि रूपाणि भवन्ति ।

२. प्रकृतिप्रत्ययनिर्देशोऽयम् । सूत्रं तु 'अमेर्द्विषति चित्' (उ० ४।१७४) द्रष्टव्यम् । ३. अत्र 'क्त्रन्' 'क्त्रः' वा पाठो द्रष्टव्य ।

४. काशकृत्स्नधातुव्याख्याने तु 'मी मृ' इति विच्छिद्य धातुद्वयं व्याख्यायते (१।२२४, पृष्ठ ३०) । तेन 'मरति' इति लोकेऽपि साधु ।

३१५. **चमु छमु जमु झमु अदने**। चमति, विचमति[1]। **ष्ठिवुक्लम्वाचमां शिति** (७।३।७५) इति दीर्घः—आचामति। **न कम्यमिचमाम्** (१।५५७) इति मित्त्वं नास्ति—आचामयति। **आसुयुवपि** (३।१।१२६) इति ण्यत्—आचाम्यम्। **नोदात्तोपदेशस्य मान्तस्यानाचमेः** (७।३।३४) इति वृद्धिनिषेधाभावः—आचामकः। **कृषिचमि** (उ० १।८२) इत्यू—चमूः। **अव्यविचमि** (उ० ३।११७) इत्यसच्—चमसः। **कृदरादयश्च** (उ० ५।४१) इति चमरः। **उदितो वा** (७।२।५६) इट्—चान्त्वा चमित्वा। आचान्तः, आचामः। आच्छमति; आच्छामः। जमति। इदुपधोऽयमित्येके[2]—जेमनम जेमः। झमति ॥४५७—४६०॥

३१६. **क्रमु पाद[3]विक्षेपे**। पादन्यासेऽर्थे। **क्रमः परस्मैपदेषु** (७।३।७६) इति दीर्घः—क्रामति। **वृत्तिसर्गतायनेषु** (१।३।३८) इत्यात्मनेपदम्—ऋक्षत्रम्य क्रमते बुद्धिः, न प्रतिहन्यत इत्यर्थः, युद्धाय क्रमते, उत्सहत इत्यर्थः, प्राज्ञे शास्त्राणि क्रमन्ते, स्फीतीभवन्तीत्यर्थः। **आङ उद्गमने** (१।३।४०) आक्रमते नभोऽर्कः। **ज्योतिरुद्गमन इति वक्तव्यात्** (द्र० १।३।४० वा०) नेह—आक्रमति धूमो हर्म्यतलम्[4]। **वेः पादविहरणे** (१।३।४१) साधु विक्रमतेऽश्वः, नेह—विक्रामत्यजिनसन्धिः। **प्रोपाभ्यां समर्थाभ्याम्** (१।३।४२) प्रक्रमते भोक्तुम्, उपक्रमते। **अनुपसर्गाद् वा** (१।३।४३) क्रमते क्रामति। **स्नुक्रमोरनात्मनेपदनिमित्ते** (७।२।३६) इतीट—प्रक्रमितुम्, चिक्रमिषति, चिक्रमिषा, चिक्रमिषुः, नेह—प्रचिक्रंसते। **उदितो वा** (७।२।५६) इट्—क्रमित्वा क्रान्त्वा, अनिट् पक्षे **क्रमश्च क्त्वि** (६।४।१२) इति वा दीर्घः क्रान्त्वा। उणादौ क्रमुकः। **नित्यं कौटिल्ये गतौ** (३।१।२३) यङ्—चङ्क्रम्यते। **जुचङ्क्रम्य** (३।२।१५०) इति युच्—चङ्क्रमणः। घञि **नोदात्तो-**

---

१. अयं काशिकासम्मतः पाठः। अन्यत्र 'ष्ठिवुक्लमुचमा शिति' इत्येवं पठ्यते।

२. धातुवृत्तौ स्मृतम् (पृष्ठ ६५)। काशकृत्स्नधातुपाठेऽपि 'जिमु अदने' पठ्यते (२।२२०, पृष्ठ १६)। अस्यैव 'जिमु' धातो राजस्थान (मारवाड़ी) भाषायाम् 'जीमना' पदं प्रयुज्यते। ३. 'पद०' इति पाठा०।

४. 'हर्म्यतलात्' इति महाभाष्ये पाठान्तरम्। अत्र नागेशीय उद्द्योतो द्रष्टव्यः (१।३।४०)।

**पदेशस्य** (७।३।३४) इति वृद्धिर्नास्ति—क्रमः, उपक्रमः। **जनसनखन** (३।२।६७) इति विट् **विड्वनोः** (६।४।४१) आत्—दूरक्राः। **क्रमितमिशतिस्तम्भाम् 'अत इच्च** (उ० ४।१२१) इति किः—क्रिमिः, बाहुलकात् सम्प्रसारणञ्च—कृमिः। **शकधृषज्ञाग्ला** (३।४।६५) इति तुमुन्—प्रक्रमते भोक्तुम् ॥४६१॥

३१७ **उदात्ता उदात्तेतः**॥

---

[**अथ सेट आत्मनेपदिनः**]

३१८. **अय वय पय मय चय तय नय**[1] **गतौ**। इतो रेवृपर्यन्ता (१।३३६) एकोनचत्वारिंशत्[2] सेट आत्मनेपदिनश्च। अयते। **उपसर्गस्यायतौ** (८।२।१९) इति लत्वं—पलायते, पल्ययते, **येन नाव्यवधानम्**[3] इत्येकेन वर्णेन व्यवधानमाश्रीयते, नेह—प्रत्ययते। **दयायासश्च** (३।१।३७) इति लिट्याम्—पलायाञ्चक्रे। वयते। **असुन्** (दश० उ० ४।१८८) वयो बाल्यादि, पक्षी च। **वयो णित्** (दश० उ० ९।४६) वायसः। पयते। पयः। मयते। मेङोऽपि (१।६८५) मयते। चयते। घञ्—चायः। चिनोतेः (५।२)--चयः। नयते। लिटि—नेये। **णीञ् प्रापणे** (१।६४०) नयति, नयते, निनाय, निन्ये ॥४६२-४६८॥

३१९. **तय रक्षणे च**। तयते। तायी जिनः॥

३२०. **दय दानगतिरक्षणहिंसादानेषु**। दयते। **अधीगर्थदयेषां कर्मणि** (२।३।५२) षष्ठी—मातुर्दयते। दय्यते। दयिता। **दयायासश्च** (३।१।३७) इति लिट्याम्—दयाञ्चक्रे। **स्पृहिगृहिपतिदयि** (३।२।

---

१. 'नय' सर्वहस्तलेखेष्वपपाठः, 'णय' इति तु धातुवृत्त्यादिषु सार्वत्रिकः पाठः। 'णय रक्षणे च' इति काशकृत्स्नीयः पाठः (पृष्ठ ८१)। मैत्रेयोऽपीत्थमेवाह (धा० प्र० पृष्ठ ३६)।

२. एकोनपञ्चाशद्' पाठा०। अयुक्तमिदम् एकोनचत्वारिंशद्धातूनामेवोपलम्भात्।

३. 'येन नाव्यवधानं तेन व्यवहितेऽपि वचनं प्रामाण्यात्' इति कृत्स्नः पाठः। द्र० काशिका ८।२।१९।

१५८) इत्यालुच्—दयालुः। भिदादित्वाद् (द्र० ३।३।१०४) दया। दयितम्। **देङ् रक्षणे** (१।६८१) मातरं दयते, दीयते, दाता ॥४६९॥

३२१. **रय गतौ**। रयते। रयः। निरयः ॥४७०॥

३२२. **ऊयी तन्तुसन्ताने**। ऊयते। ऊयिता। ऊयाञ्चक्रे। **श्वीदितो निष्ठायाम्** (७।२।१४) नेट्—ऊतः ॥४७१॥

३२३. **पूयी विशरणे दुर्गन्धे च**। पूयन्ते[1] यवाः। व्रणः पूयते। पूयिता। पूतः, पूतिः ॥४७२॥

३२४. **क्नूयी शब्दे उन्दने च**। उन्दनं क्लेदनम्। क्नूयते। क्नूयिता। क्नूतः। **न यः** (३।२।१५२) इति युज् नास्ति, अतस्तच्छीलादौ कर्तरि तृन् एव—क्नूयनशीलः क्नूयिता। **अर्तिह्रीव्ली** (७।३।३६) इति णौ पुक्—क्नोपयति। **चेले क्नोपेः** (३।४।३३) इति णमुल्—वस्त्रक्नोपं वृष्टो देवः ॥४७३॥

३२५. **क्ष्मायी विधूनने**। क्ष्मायते। क्ष्मापयति। क्ष्मातः ॥४७४॥

३२६. **स्फायी ओप्यायी वृद्धौ**। स्फायते। **स्फायो वः** (७।३।४१) इति णौ वत्वम्—स्फावयति॥ **निष्ठायां स्फायः स्फी** (६।१।२२) स्फीतः। ईदित्वं स्फायेरादेशानित्यत्वे लिङ्गम्[2]—स्फातः। उणादौ फेनः, स्फिरो बहुः। **स्फायी** (उ० २।१३) इति रक्—स्फारम्। प्या-

१: 'विपूयन्ते' पाठा०।

२. अयं भावः—यदि निष्ठायां नित्यं 'स्फी' भावः स्यात्तर्हि ईदित्त्वमनर्थकं स्यात्। ईदित्त्वस्य तु 'श्वीदितो निष्ठायाम्' (७।२।१४) इति निष्ठायामिट्प्रतिषेध एव फलं, नान्यत। तस्माद्द्व्यर्थ सज्ज्ञापयति 'स्फी' भावोऽनित्य इति। कातन्त्रव्याख्यात्रा दुर्गसिंहेनापि ईदनुबन्धबलादादेशोऽयमनित्य इत्युच्यते (द्र० सर० कण्ठा० व्याख्या, भाग ४, भूमिका पृष्ठ १९)। मुग्धबोधेऽपि 'स्फाय. स्फी वा' (क्तादिः, सूत्र १०७९) इति पठ्यते। सरस्वतीकण्ठाभरणव्याख्याता दण्डनाथस्तु 'स्फायः स्फी' (६।१।३७) इति सूत्रे 'वाम्यवाम्' (६।१।३७) सूत्रतो वा' पदमनुवर्त्य स्फीभावं विकल्पेनाह—स्फीतः स्फीतवान्, स्फातः स्फातवान् इति। तथा सति 'स्फातीभवति' इति प्रयोगोऽप्युपपद्यते। एव च सति 'स्फातीभवति इत्येतदपि क्तिन्नन्तस्यैव रूपं, न निष्ठान्तस्य' इति यत् काशिकावचनं (६।१।१२) तत् क्लिष्टकल्पना-मात्रम्। धातुवृत्तिकारस्तु अनुदात्तेत्त्वार्थमीदित्करणमाह (पृष्ठ ९१) तदप्यसत्, अनुदात्तेत्त्वार्थं त्वन्यत्रेवेहाप्यकारस्यानुबद्धुं शक्यत्वात्।

यते । **दीपजनबुध** (३।१।६१) इति कर्तरि वा चिण्—अप्यायि, अप्यायिष्ट । पीनः, **प्यायः पी** (६।१।२८) स्वाङ्गे[1], **ओदितश्च** (८।२।४५) इति निष्ठानत्वम् **अन्धूधसोराङीति वक्तव्यात्** (३।१।२८ वा०) आपीनोऽन्धुः आपीनमूधः । नेह—आप्यानश्चन्द्रमाः । **लिड्यङोश्च** (६।१।२९) इति पी—आपिप्ये, आपेपीयते । **कृत्यच** (८।४।२९) इति प्राप्ते **न भाभूपूकमिगमि** (८।४।३४) इति णत्वं नास्ति—प्रप्यानः ।।४७५,४७६।।

३२७ **तायृ सन्तानपालनयोः** । सन्तानः प्रबन्धः । तायते । अतायत् । **दीपजनबुधपूरि** (३।१।६१) इति कर्तरि वा चिण्—अतायि, अतायिष्ट । **तय रक्षणे** (१।३१९) तयते, अतीतयत् ।।४७७।।

३२८. **शल चलनसंवरणयो,** । शलते । शलतीति **शल हुल पत्लृ गतौ** (१।५८०) तथा **शल श्वल्ल आशुगमने** (१।३६७) । **इण् भीकापा** (उ० ३।४३)इति शल्कः काष्ठत्वक् । **शलिपटिपतिभ्यो नित्** (दश० उ० ३।३३) शलाका । **कृशृशलि** (उ० ३।१२२) इत्यभच्—शलभ । **शलिमण्डिभ्यामूकञ्** (तु० उ० ४।४२) शालूकः । शललं शलञ्च श्वाविल्लोम । **सानसिवर्णसिपर्णसितण्डुलाङ्कुशचषालेल्वलधिष्ण्यशल्या**(उ० ४।१०७) इति शल्यम् । शल्यकः श्वावित् ।।४७८।।

३२९. **वल सवरणे** । वलते अपोद्वलितः । वालाः केशाः । वाल्मीकम् । ज्वलादौ **वल प्राणने**[2] (१।५७६) वलति । चुरादौ मित् (१०।८०)—वलयति । **शुकवल्कोल्का** (उ० ३।४२) इति वल्कः । **इन्** (दश० उ० १।४६)—वलिस्त्वक्सङ्कोचः । **वलेर्गुश्च**[3] (तु० उ०

---

१. स्वाङ्ग एव 'पी' भाव इति त्वन्यत्र न दृष्टम्, व्यवस्थितविभाषया कथंचिल्लब्धुं शक्यते । अत्र काशिका (६।१।२८) द्रष्टव्या ।

२. ज्वलादिस्थं 'बल प्राणने' धातुं दन्त्योष्टयादिं मत्वेहोदाजहार क्षीरस्वामी, तदीयामरटीकायाः 'वल्यते वालः, ज्वलादित्वाण्णो वा, ज्वलितिकसन्तेभ्यो णः (३।१।१४०)' इति वचनादपीदमेव प्रतीयते । अत इहैव स्वामी 'अयं दन्त्योष्टयादिः, बल प्राणने त्वोष्ठयादिरित्याहुः' इति मतान्तरे ज्वलादिस्थमोष्ठयादिमाह । उज्ज्वलदत्तोऽपि 'बलेर्गुक् च' (उ० १।२०) इत्यत्र दन्त्योष्ठयादिवल्गुपदसिद्धये ज्वलादिस्थमुदाहृतवान् । वस्तुतस्त्वयं दन्त्योष्ठयादिः, ज्वलादिस्थश्चोष्ठयादिरेव । ३. 'वलेर्गुक् च' इत्येवं शुद्धः पाठः ।

१।१०) इति वल्गुः। **वलिमलितनिभ्यः कयन्**(उ० ४।९९)—वलयः। वलीकं (द्र० उ० ४।२५) पटलप्रान्तः। अयं दन्त्योष्ठ्यादिः, बल प्राणने त्वोष्ठ्यादिरित्याहुः—बलम्, बलिरूपहारः, बालः, बलाका, बल्वजः। **बल बल्ल** इति **दुर्गः** तथोपक्रमात्। वल्लूरं शुष्कमांसम्। वल्लवो गोधुक्। वल्लभः प्राणप्रियः। वल्ली, वल्लरी, वल्ला ॥४७९॥

३३० **मल मल्ल धारणे**। मलते। मल्यते। माला। मालती तरुभेदः। मलम्। मलयः। मालयति। चुराद्यन्तात् मलयतीति **भट्टिः**। घे—घःधभङ्गिः परिमलः[1]। मल्लते। मल्लः। मल्लकः पात्रम्। मल्लिका मल्लीपुष्पम् ॥४८०,४८१॥

३३१. **भल भल्ल परिभाषणहिंसादानेषु**। भलते। ऊकः—(द्र० उ० ४।४०) भलूक ऋक्षः। भल्लते उलूकादौ (द्र० उ० ४।४१) भल्लूकोऽच्छभल्लः। भल्लः क्षरप्रः। भल्लिः। भल्लटः। चुरादौ **भल आभण्डने** (१०।१४७) तङानी[2]—विभालयते। भालूकः ॥४८२,४८३

३३२ **कल शब्दसंख्यानयोः**। कलते। आकलते, सङ्कलते, परिकलते, प्रत्याकलते, विकलते। अच्—कलः। कल्यते—कालः, घञ्। कलनीयम्। कल्यम्। काल्यं प्रभातम्, काले साधु वा। कलितम्। कलिः। कलिका। **कर्दिकडेरमच्**[3](तु०उ० ४।८४)—कलमः। **पृकलिभ्यामुषच्** (दश० उ० ९।१५)—कलुषः। उणादौ कल्मषम्, कल्माषः। कल्योऽघ्न्यादौ (द्र० उ० ४।१११) कलासु साधर्वा। कलायः सतीनकः। कलितं व्याप्तं गहनञ्च। कललं शुक्रशोणितमलम्। चुरादौ **कल संख्याने**(१०।२५३)अदन्तः—कलयति। कलना, कला बाहुलकात्। **कल किल पिल क्षेपे** (१०।५३) इत्यस्मात् कालयति, कालः, कालनम्, कालना कालिः। कालिका तु मेघजालम्, मनोज्ञादौ (द्र० गण० ५।१।१३३) ॥४८४॥

---

१. अनुपलब्धमूलम्। 'सुरभिमाल्यगन्धादिपरिमर्दनोत्पन्नो हृद्यो गन्धः परिमलः' इति अमरटीकायां (पृष्ठ ४०) क्षीरस्वामी।

२. 'तङादौ' पाठा०। 'तङानौ' शुद्धं पाठान्तरं द्रष्टव्यम्। अत्र पूर्वा टिप्पणी (पृ० ४६ टि० ४) अवलोकनीया।

३. 'कर्दिकड्योर०' पाठा०।

३३३ **कल्ल अशब्दे** । अशब्दे तूष्णीम्भावे[1] । कल्लते । कल्लः । कल्लोलः ।।४८५।।

३३४. **तेवृ देवृ देवने** । तेवते, अतितेवत् । देवते, अदिदेवत् । **अर्तिकमिभ्रमि** (उ० ३।१३२) इत्यरः–देवरः । **शकादिभ्योऽटन्** (उ० ४।८१) देवटः ऊर्णावृत्तिः । **वृषादिभ्यश्चित्** (उ० १।१०८) देवलः । दिवादौ (४।१) दीव्यति । चुरादौ **दिवु परिकूजने** (१०।१५२)—देवयते, **आकुस्मात्** (१०।१२३) तङ्, अदीदिवत, तथा **दिवु अर्दने** (१०।१७०) परिदेवयति ।।४८६,४८७।।

३३५. **एवृ[2] शेवृ षेवृ सेवृ केवृ खेवृ ग्लेवृ पेवृ प्लेवृ मेवृ म्लेवृ सेवने** । सेवते, सिषेवे, असिषेवत् । अषोपदेशस्य सिसेवे, असिसेवत् । **परिनिविभ्यः सेव** (८।३।७०) इति षत्वम्—निषेवते । **अड्व्यवायेऽपि** (८।३।७१) इति पर्यषेवत । **स्तौतिण्योरेव षण्यभ्यासात्** (८।३।६१) इति नियमे प्राप्ते **स्थादिष्वभ्यासेन चाभ्यासस्य** (८।३।५४) इति षत्वम्—निषिषेविषते । केवते, उणादौ युक्तम्[3], **वृषादिभ्यश्चित्** (उ० १।१०८) इति कलच्—केवलः ।।४८८।।

३३६. **रेवृ प्लुतिगतौ** । प्लुतिभिर्गतौ । रेवते । रेवा नर्मदा । रेवती तु रीङो (४।२८) रूपम् ।।४९९।।

३३७. **उदात्ता अनुदात्तेतः** ।

---

**[अथ सेटः परस्मैपदिनः]**

३३८. **मव्य बन्धने** । इतोऽवान्ता (१।३९२) अष्टाशीतिः सेटः परस्मैपदिनश्च । मव्यति । मव्यः[4] ।।५००।।

---

१. उद्धृतमिदं धातुवृत्तौ (पृष्ठ १०) सिद्धान्तकौमुद्यां (भाग ३ पृष्ठ १५१) च ।

२. 'एवृ' इति सर्वकोशेषु पाठः । 'गेवृ' इति तु युक्तः पाठः, स्यात् ।

३. अस्पष्टार्थोऽयम् । कदाचिदत्र 'केवृ धातुः केवलशब्द एव प्रयुज्यते, स चौणादिकः, ततश्चायं धातुरौणादिक एव, इत्यभिप्रायः स्यात् ।

४. 'मव्यः' क्वचिन्न ।

३३९. **सूर्क्ष्य ईर्क्ष्य ईर्ष्य ईर्ष्यार्याः** । ईर्ष्या कामजमसहनम्[1] । **क्रुधद्रुहेर्ष्या** (१।४।३७) इति सम्प्रदानम्—चैत्रायेर्ष्यति । **ईर्ष्यतेस्तृतीयस्य**- (६।१।३ वा०)एकाचो द्विर्वचनम्—ईर्ष्यिषिषति । व्यञ्जनस्य **इत्येके**[2] —ईर्ष्यियिषति । ण्यन्ताच्चङि तृतीयैकाचोऽभावाद् द्वितीयस्यैव द्वित्वम्, तृतीयाभावेन वार्त्तिकाप्रवृत्तेः, ततश्च हलादिशेषाद् (द्र० ७।४। ६०) अभ्यासे षकार एव श्रूयते—ऐर्षिष्यत् । व्यञ्जनस्येति पक्षे यकारस्यैव द्वित्वम्[3]—ऐर्ष्यियत् ।।५०१-५०३।।

३४०. **हय गतिकान्त्योः** । हयति । हयः ।।५०४।।

३४१. **शुच्यी अभिषवे** । अभिषवो द्रवेनाद्रवणम्, परिवासनम् । स्नानमिति **चान्द्राः**[4] । शुच्यति । लिट्—शुशुच्य । शुक्तः[5]—**यस्य हलः** (३।४।४९) इति यलोपः । **चुच्यी**[6] इति **दुर्गः** ।।५०५।।

३४२. **हर्य गतिकान्त्योः** । हर्यति । **हर्यतेः कन्यन् हिर च** (उ० ५।४४) हिरण्यम् ।।५०६।।

३४६. **अलँ**[7] **भूषणपर्याप्तिनिवारणेषु** । पचतिवत् सानुनासिक इतीत्संज्ञार्थः । अलति । अलकापुरी । अलकाः केशः, **क्वुन् शिल्पि**-

---

१. 'असहिष्णुत्वम्' पाठा० ।

२. 'ईर्ष्यतेस्तृतीयस्य द्वे भवतः' इति वार्तिकव्याख्याने 'केचिदाहुः—एकाच इति— ईर्ष्यिषिषति । अपर आह व्यञ्जनस्येति—ईर्ष्यियिषति' इति भाष्यम् (६।१।३) द्रष्टव्यम् । ३. नेदं वचनमन्यत्र श्रूयते ।

४. चान्द्रधातुपाठव्याख्याने पूर्णचन्द्रः—'अभिषवः स्नानविशेषः' (द्र० चान्द्र धातुपाठ पृष्ठ ६ टिप्पणी) ।

५. श्वीदितो निष्ठायाम् (७।२।१४) इतीण्निषेधः, सायणस्तु 'शुच्य' इति पठित्वा 'शुच्यितः' इत्युदाहरति (धा० वृ० पृष्ठ १०३) ।

६. ईदित्वान्निष्ठायां चुक्तः । अनीदित्वे चुच्यितः । काशकृत्स्नीये धातुपाठे शुची शुची पाठो दृश्यते (पृष्ठ ३१) ।

७. 'अल' इति सायणादयः । क्षीरस्वामिमते तु आदित्वे 'आदितश्च' (७।२। १६) इतीण्निषेधे 'अल्तः' । सायणादिमते 'अलितः' इति भेदः । काशकृत्स्नस्तु 'अलञ्' (१।६८९, पृष्ठ ११४) इति पठति । तेन अलति अलते इत्युभयं भवति । लकारोत्तरवर्तिन उदात्ताकारस्येत्वात् इट्—अलितः । एवमव कातन्त्र धातुपाठेऽपि पठयते ।

**संज्ञयोः** (उ० २।३२)। अलिन्दः। अलिकं ललाटम्। अलीलम्। अलिर्भ्रमरः, आलिश्च। आलिः सखी, पङ्क्तिश्च। अलर्को रोगितः श्वा। अलक्तकम् अरक्तकन्तु रलयोरैक्यात्[1] ॥५०७॥

३४४. **ञिफला विशरणे**। फलति, प्रतिफलति, उत्फलति, **तृफलभजत्रप[श्च]** (६।४।१२२) इति लिट्येत्वाभ्यासलोपौ—फेलुः। फलकं **क्वुन् शिल्पिसंज्ञयोः** (उ० २।१३२)। फलहकस्तूणादौ[2]। **चरफलोश्च उत्परस्यातः**। (७।४।८७,८८) पम्फुल्यते। **ति च** (७।४।८९) वर्तमाने **ञीतः क्तः** (३।२।१८७) प्रफुल्लः। **अनुपसर्गात् फुल्लक्षीब** (८।२।५५ वा०) इति क्ते फुल्लः साधुः। **उत्फुल्लसम्फुल्लौ वक्तव्यात्** (द्र० ८।२।५५ वा०) उपसर्गे प्रफुल्लः, **आदितश्च** (७।२।१६) इतीण् नास्ति। **विभाषा भावादिकर्मणोः** (७।२।१७) फुल्लमनेन फलितमनेन, प्रफुल्लः, प्रफुलितः। **फलिपाटि** (उ० १।१९) इति फल्गुरसारः[3]। फल्गुनी। **फल निष्पत्तौ** (१।३५) इत्यस्मात् फलितः। **फुल्ल विकसने** (१।३५७) फुल्लितः ॥५०८॥

३४५. **मील श्मील निमेषणे**। निमेषणं सङ्कोचः। मीलति। प्रमीला तन्द्री। मीलनम्। **भ्राजभास[भाष]**[4]**दीप** (७।४।३) इत्युपधाह्रस्वो वा—अमिमीलत् अमीमिलत्। लौकिकात्[5] मिलेः–मिलति[6], मेलनम्। श्मील स्थाने **क्ष्मीलेति चान्द्राः** (चा० धा० १।१६२) ॥ ५०९,५१०॥

३४६. **पील प्रतिष्टम्भे**। प्रतिष्टम्भो रोधनम्[7]। पीलति। पील-

---

१. 'एकत्वात्' पाठा०।

२. 'फलहक' शब्दो हैमोणादेः (३३ सूत्रस्य) स्वोपज्ञवृत्तेरन्ते पठ्यते।

३. 'फल्गु असारम्' पाठा०।

४. द्रष्टव्यः १।३७५ धातुसूत्रे।

५. सायणादयस्तुदादौ 'मिल श्लेषणे' इति पठन्ति। क्षीरस्वामी तु 'हिल हावकरणे' (६।६८) सूत्रव्याख्याने दुर्गमतेन मिल-धातुं पठति, न स्वमतेन। अत एवात्र लौकिकात्=लोकप्रसिद्धान्न तु शास्त्रपठिताद् इति विशेषणमुपादत्ते।

६. 'मिलति न खलु यस्याः' इति नाट्यशास्त्रस्य (अ० १४, श्लो० ३०) अभिनवगुप्तकृतायां व्याख्यायामुद्ध्रियते (भाग२, पृष्ठ २३२, बडोदा संस्क०)।

७, 'रोध.' पाठा०।

नम् । क्वसु—नेड् वशि कृति (७।२।८)—पिपील्वान् । खरुशङ्कु (उ० १।३७) इति बाहुलकात् पीलुः[1] । पिपीलकः, पिपीलिका ॥५११॥

३४७. णील वर्णे । वर्णोपलक्षितायां क्रियायाम् । यथा—श्वेतं नीलति मरकतकान्त्या[2] । प्रणीलति । नीलम्, नीली, नीलः[3], नीलङ्गुः क्रिमिः ॥५१२॥

३४८. शील समाधौ । समाधिरैकाग्र्यम् । परिशीलति । अनुशीशीलितः । शिलिकामि (३।२।१ वा०) इति णः—मांसशीलः । शैलूषो नटः, बाहुलकात् । शिलूषापत्यमित्येके । चुरादौ (१०।२६४) शीलयति ॥५१३॥

३४९. कील बन्धे । कीलति । उत्कीलितः । कीलकः । कीला[4] । कीलालम् । कीलिर्धात्वर्थे[5] । णिच्—कीलयति ॥५१४॥

३५०. कूल आवरणे[6] । अनुकूलति । कूल्यतेऽम्भसा कूलम् । कुल संस्त्याने (१।५७९) अस्मात् कुलम् । करोतेर्द्वे च (तु० ६।१।१२ वा०) इति चकारात्—कुकूलं तुषाग्निः ॥५१५॥

३५१ शूल रुजायाम् । शूलति । अच्—शूलम् ॥५१६॥

३५२. तूल निष्कर्षे । निष्कर्षो वस्तुनिःसारणम् । तूलति । तूलं तूलिस्तूलशय्या, शलाकायान्तु तूलिका[7] ॥५१७॥

३५३. पूल संघाते । पूलति । पूलः । पूली तृणोच्चयः ॥५१८॥

३५४. मूल प्रतिष्ठायाम् । मूलति । मूलम् । उन्मूलयति क्लेशान् । उन्मूलितः । चुरादौ मूल रोहणे (१०।५८) मूलयति ॥५१९॥

३५५. फल निष्पत्तौ । निष्पत्तिः सिद्धिः । फलति । फलितः ।

---

१. पीलुः हस्ती (काश० धातुव्याख्यानम् पृष्ठ ३२) तदस्यास्तीति पीलुमान् हस्तिपकः । तस्यैव 'पीलवान्' इत्यपभ्रंशः । पीलुरिति हस्त्यर्थे म्लेच्छप्रसिद्ध इति कुमारिलभट्टः (तन्त्रवार्त्तिक १।३।९) । मीमांसाशास्त्रीयार्यम्लेच्छप्रसिद्धार्थाधिकरणविषये विशेषविचारः 'संस्कृत व्याकरण शास्त्र का इतिहास' ग्रन्थस्य प्रथमाध्यायान्ते (पृष्ठ ४९, च० संस्क०) द्रष्टव्यः ।

२. अनुपलब्धमूलम् । ३. 'नील कुट्टिमः' पाठा० ।

४. पशुबन्धनी रज्जूर्यस्यां निबद्ध्यते, 'कीला खूंटा' इत्येवं प्रसिद्धः ।

५. कीलिर्बन्धनमित्यर्थः । ६. 'संवरणे' पाठा० । ७. अनुपलब्धमूलम् ।

त्रिफला (१।३४४) इत्यस्य फुल्लः[1] फलम् । **फलेरितजादेश्च पः** (उ० ५।३४)—पलितम् ॥५२०॥

३५६. **चुल्ल हावकरणे**[2] । अभिप्रायसूचनेऽर्थे । चुल्लति । चुल्लिः[3] ॥५२१॥

३५७ **फुल्ल विकसने** । फुल्लति । फुल्लम् । फुल्लितम् ॥५२२॥

३५८. **चिल्ल शैथिल्ये** । चिल्लति । चिल्लितः । चिल्लः[4] पक्षी ॥ ॥५२३॥

३५९. **तिल्ल गतौ** । तिल्लति । **तिल** इत्यपि **दुर्गः** तेलति ॥५२४॥

३६०. **वेल्लृ चेलृ केलृ खेलृ क्ष्वेलृ**[5] **चलने** । वेल्लेर्द्विर्बद्धो लकारः —वेल्लति । वेल्लितः । अविवेल्लत् । वेला तु **वेल कालोपदेशो** (१०। २६६) इत्यस्मात् । चेलति । पापचेली । चेला **चिल वसने** (६।६२) इत्यस्मात् । केलति । केलिः । केलितम् । **कील बन्धे** (१।३४६) अस्मात् कीलः, कीलकम्, कीलितम् । खेलति । खेल्यतेऽत्रेति खेलम्[6] । खेलतीति खेला खुरलिः । खिलम्, पृषोदरादित्वात् (द्र० ६।३।१०६)। क्ष्वेलति । क्ष्वेला ॥५२५-५२६॥

३६१. **पेलृ फेलृ शेलृ**[7] **गतौ** । पेलति । पेलितम् । अपिपेलत् । पेलं वृषणः । पेलवं तनु । पेलकस्त्वग्गन्धः । फेलति । फेला भुक्तोज्झितम् । के (द्र० ३।१।१३५) फेलः पलः । शेलति, अशिशेलत्[8] ॥५३०-५३२

३६२. **स्खल चलने** । स्खलति । स्खलित्वा ॥५३३॥

३६३. **खल सञ्चये च** । चकाराच्चलने । **खलं भगः पदञ्च** (३। ३।१२५ वा०)इति वक्तव्याद् घः । अच्—खलः । खलिः पिण्याकः[9] ।

---

१. 'संफुल्लः' पाठा० ।

२. चुल चुल्ल द्रावकरणे पाकाग्निकुण्डे च इति काशकृत्स्नः (१।२४३) अस्य व्याख्या तत्रस्था टिप्पणी च द्रष्टव्या ।

३. चुल्लिः 'चूल्हा' इति प्रसिद्धः । ४ 'चील' इति प्रसिद्धः ।

५. 'क्ष्वेलृ' पाठा० ।

६. 'घत्रबन्तः' (लिङ्गा० पुंलिङ्ग २) इत्यस्य प्रायिकत्वान्नपुंसकत्वम् । यथा 'संबन्धमनुवर्तिष्यते' (महा० १।१।१) इति ।

७. 'सेलृ' पाठा० । ८. 'सेलति । असिसेलत्' पाठा० ।

९. 'खली' इति भाषायां प्रसिद्धम् ।

खलितः खल्वाटः। खल्वं गभीरम्। खलीनमश्वमुखावरणम्[1] ॥५३४॥

३६४. **गल अदने**। गलति। गलः। स्रवणेऽपि अनेकार्थत्वात्। उणादौ गल्लः[2] कपोलादिः, गल्वर्कः[3] स्फटिकः[4]। **गलेश्च** (दश० उ० ७।१४) इति गुल्फः। चुरादौ **गल स्रावणे** (१०।१४६) तङि—उद्गालयते ॥५३५॥

३६५. **सल गतौ**। सलति। सलिलम्। सालः ॥५३६॥

३६६. **दल विशरणे**। दलति **उषिकुटिदलिकचिखजिभ्यः कपन्** (उ० ३।१४२) दलपः। दलम्। मित्त्वाद् (धा० सू० १।५५३ व्याख्याने) दलयति। चुरादौ (१०।१९६) दालयति ॥५३७॥

३६७. **शल श्वल्ल आशुगमने**। शलति। **अतो ल्रान्तस्य** (७।२।२) इति वृद्धिः—अशालीत्। उणादौ (द्र० उ० ४।९५) शुल्वं ताम्रं रज्जुश्च। शुल्कम्[5] ॥५३८, ५३९॥

३६८. **खोर्ऋ खोलृ गतिप्रतिघाते**। खोरति। खोरा अधमा स्त्री। खोरिका पात्री। खोर[6], खञ्जः। **खोडृ** इति **दुर्गः**– खोडः कुणिः। खोलं शिरस्त्रम् ॥५४०, ५४१॥

३६९. **धोर्ऋ गतिचातुर्ये**। धोरति। अदुधोरत्। आधोरणो हस्तिपकः[7]। धोरितम्। धोरितकम् अश्वगतौ ॥५४२॥

३७०. **त्सर छद्मगतौ**। छदमप्रकारार्थे। त्सरति। **भृमृशी** (उ० १।७) इत्युः—त्सरुः खड्गादिमुष्टिः। **त्सद्म** इत्यपीति **कौशिकः**—त्सद्मति ॥५४३॥

३७१. **अभ्र बभ्र मभ्र चर गत्यर्थाः**। अभ्रति। अभ्रम्। बभ्रति। **कृञो द्वे च**[8] **कुर्भ्रश्च** (तु० उ० १।२२,२३) इति बभ्रुर्नकुलः। मभ्रति। चरति ॥५४४-५४७॥

३७२. **चरिर्भक्षणेऽपि**। **उदश्चरः सकर्मकात्** (१।३।५३) इति

---

१. क्वचिन्न।

२. 'गाल' इति भाषायां प्रसिद्धम्। ३. 'गल्लकः' पाठा०।

४. 'स्फटिका' पाठा०।

५. 'शुल्कं' क्वचिन्न। ६. राजस्थानभाषायाम् 'खोड़ा' इति प्रयुज्यते।

७. 'आधोरणः करिपकः' पाठा०। ८. 'याकृञोद्वे च' इत्यपपाठः।

तृङ गेहमुच्चरते उल्लङ्घयतीत्यर्थः[1], नेह—उच्चरति ध्वनिः । **समस्तृतीयायुक्तात्** (१।३।५४) अश्वेन संचरते । **चरफलोश्च, उत् परस्यातः** (७।४।८७-८८) चञ्चूर्यते, चञ्चुरः **ति च** (७।४।८९) चूर्तिः । चरितम् । **गदमदचरयमश्चानुपसर्गे** (३।१।१००) यत्—चर्यम् । **चरेराङि चागुरौ** (३।१।१०० वा०) आचर्यं उपदेशः, आचार्यो गुरुः । **आश्चर्यमनित्ये** (६।१।१४७) साधु । पचादौ (गण० ३।१।१३४) चरः[2] । **पटच्चर**[3]श्चौरः पटंश्चरतीति, पाटयंश्चरतीति पाटच्चरो[3] वा । पटच्चरं जीर्णवस्त्रम्,पट इवाचरद् भूतपूर्वम् । प्रज्ञादौ (गण० ५।४।३८) चारः । **क्वुन् शिल्पिसञ्ज्ञयोः** (उ० २।३२) चरको मुनिः । **चरेष्टः**(३।२।१६)कुरुचरः, कुरुचरी । **भिक्षासेनादायेषु च**(३।२।१७)इति टः—भिक्षाचरः, सेनाचरः, आदायचरः । **अलङ्कृञ्निराकृञ्**(३।२।१३६) इतीष्णुच्—चरिष्णुः । **गोचरसञ्चर**(३।३।११९) इति द्वौ साधू । **इच्छा** (३।३।१०१) इत्यत्र परिचर्या साधुः[4] । लोकाच् चर्या[5] परिव्राजकादीनां ध्यानाद्युपाये स्थितिः । युच्—(द्र० ३।२।१४८) चरणः । ल्युट् (द्र० ३।३।११५)—चरणम् । **अर्तिलूधूसूखनसहचर इत्रः** (३।२।१८४) चरित्रम् । **चरेर्वृत्ते** (उ० ४।१७१) णित्रन्—चारित्रम् । **खनिकष्यञ्ज्यसि** (उ० ४।१३१) इतीः - चरिः प्राकाराग्रम् । इण्—चारिः । **दृसनिजनि** (उ० १।३)—इत्युण्—चारुः । **भृमृशीतृचरि** (तु० उ० १।७) इत्युः—चरुर्हव्यपाकः । **चरेश्च** (उ० ५।६९) इत्यमच्—चरमः । क्तिन्—(द्र० ३।३।९४) चूर्तिः, ब्रह्मचूर्तिः । चरितं चर्म (द्र० ३।३।२ काशिका) ॥

३७३. **ष्ठिवु निरसने** । **न सुब्धातुष्ठिवुष्वक्कीनाम** (तु० ६।१।६४ वा०) इति धात्वादेः षः सो नास्ति, **ष्ठिवुक्लम्वाचमां शिति**(तु०

१. 'तङन्तौ—गेहमुच्चरते लङ्घयतीत्यर्थः, गेहमुच्चरमाणः' इति पाठा० । अत्र 'तङन्तौ' इत्यस्य स्थाने 'तङानौ' युक्तः पाठः ।

२. 'चरट्' पाठा० ।

३. 'पटच्चरः' पलद्यादिगणे (४।२।११०) पठ्यते । तेनात्र तुगागमो द्रष्टव्य । पटच्चरशब्दसादृश्यात् पाटच्चर इत्यत्रापि तुक् ।

४. इच्छासूत्रस्थे 'परिचर्यापरिसर्यामृगयाटाट्यानामुपसंख्यानम्' इति वार्त्तिके निपातनात् साधुरित्यर्थः ।

५ केवल, चर्याशब्दो लोके ध्यानाद्युपाये स्थित्यर्थे च प्रयुज्येत । स च 'गदमदचर' (३।१।१००)इत्यादिना व्युत्पाद्यते(द्र० क्षीर० अमरटीका २।७।३५) ।

७।३।७५) इति दीर्घः - ष्ठीवति । ल्युटि वा गुणः[1]—ष्ठेवनम्, ष्ठीवनम् । ष्ठ्यूत्वा, ष्ठीवित्वा । टिष्ठेव । षकारात् परस्थकारोऽयमित्येके[2] तिष्ठेव ॥५४८॥

३७४. **जि जये** । जयोऽत्रोत्कर्षः । जयति । **विपराभ्यां जेः** (१।३।१९) इति तङानौ—विजयते, पराजयते । लक्ष्येऽनिट्कोऽयम्[3]—जेता । अत एव **कौशिको**ऽमुं नाध्यैष्ट, **जि ज्रि अभिभवे** (१।६७६) इत्यनेनैव सिद्धत्वात् । तत्र, अकर्मकसकर्मकत्वार्थमु[4]भयोरुपादानम् । **कृवापाजि** (उ० १।१) इत्युण्—जायुरौषधम् । जैत्रम् जेतुरिदम् ॥५४९॥

३७५. **जीव प्राणधारणे** । जीवति जीवः । **भ्राजभासभाषदीपजीव** (७।४।३) इति वा ह्रस्वः—अजिजीवत्, अजीजिवत् । **यावति विन्दजीवोः** (३।४।३०) इति णमुल्—यावज्जीवमग्निहोत्रं जुहुयात् । जीवकः पक्षी । जीवंजीवः पक्षिविशेषः[5] । **जीवेरातुः** (उ० १।८०) जीवातुर्जीवनौषधम् । जीवितम् । **जीवेरातृकन् वृद्धिश्च** (उ० १।८१) जैवातृकश्चन्द्रः । जीवनस्य मूतो जीमूतः[6] । जाविका संज्ञायाम् (द्र०

---

१ चन्द्रस्तु 'ष्ठिवुसिवोर्दीर्घश्च' (१।३।९८) इत्यनेन दीर्घत्वं शास्ति, चाद् यथाप्राप्तं गुणं च ।

२. द्रष्टव्या काशिका ६।१।६४॥ भाष्यकारस्त्वाह—'द्वाविमौ ष्ठिवू । एकस्य द्वितीयो वर्णष्ठकारो ऽपरस्य थकारः' (६।१।६४) तन्त्रेणोभयोपदेश इत्यर्थः । 'तिर्वाष्ठिवः' इति हेमचन्द्रः (४।१।४३) ।

३. लक्ष्ये लौकिक प्रयोग इत्यर्थः । उदात्तेषु पाठात सेट् प्रतीयते, लोके त्वनिट् रूपेण प्रयुज्यत इत्यर्थः । यथा विद ज्ञाने (२।५७) इत्यस्य उदात्तेषु पाठात् वेदिता, भारस्य वेत्ता न तु चन्दनस्य इति 'वेत्तासि वेद्यं च' (गीता ११।३८) इति च प्रयोगदर्शनाद् सेट्त्वमनिट्त्वं चोभयमपि साधु । तथैव उदात्तेषु जयतेः पाठात् सेट्त्वम्—जयिता, लोके 'जेता' प्रयोगदर्शनाद् अनिट्त्वं चोभयमपि द्रष्टव्यम् इति त्वस्मन्मतम् ।

४. यदा उत्कर्षवाची तदाकर्मकः, यदा तु परिभववाची तदा सकर्मकः । यथा' जयति जितम्'(४।४।२) इत्यत्र कर्मणि क्तः । अत एवोभयोः पृथक् पाठ आवश्यक इति भावः ।

५. 'जीवंजीवकश्चकोरः' पाठा० ।

६. जीवनस्य जलस्य मूतः पुटबन्धो जीमूतः' इत्यमरटीकायां (पृष्ठ २४) क्षीरः । मेघ इत्यर्थः ।

३।३।१०६) ॥५५०॥

३७६ **पीव मीव नीव[1] तीव स्थौल्ये**। पीवति। पीवः पुष्टः। **छित्वरच्छत्वर** (उ० ३।१) इति पीवरः। नीविः, नीवि मूलधनम्। तीवरम्। तीव्रम् ॥५५१-५५४॥

३७७. **क्षीव निरसने**। क्षीवति। क्षीवितः। अचिक्षिवत्। **क्षीबृ मदे** (१।२६८) अस्मात् क्षीबते क्षीबः[2], अचिक्षीबत्। **क्षिवु** इति **चन्द्रः**[3] (चा० धा० १।१६१) क्षेवति, क्ष्यूत्वा क्षेवित्वा। दिवादौ[4] क्षीव्यति ॥५५५॥

३७८. **उर्वी तुर्वी दुर्वी धुर्वी हिंसार्थाः**[5]। ऊर्वति। ऊः, ऊर्णः। तूः, तूर्णः। दूः, दूर्णः, दूर्वा। धूः, धूर्णः। **हसिमृग्रिण** (उ० ३।८६) इति तन्—धूर्तः। **थुर्वी** इति **चन्द्रः** (चा० धा० १।१६५) **जुर्वी** इति **दौर्गाः** जूर्वति। जूः। जूर्ण ॥५५६-५५९॥

३७९. **गुर्वी उद्यमे**। गूर्वति। गूः। उद्गूर्णं। चुरादौ **गूरी उद्यमे** (१०।१४२) आगूरयते ॥५६०॥

३८०. **मुर्वी बन्धने**। मूर्वति। मूर्वा तृणम्, यद्विकारो मौर्वी। मूः। मूर्णः ॥५६१॥

३८१. **पूर्व[6] पर्व मर्व पूरणे**। पूर्वति। पूर्वः। पर्वति, पर्वतः॥५६२-५६४॥

---

१. सर्वकोशेषु पाठः, णत्वाभावश्चिन्त्यः।

२. दन्त्योष्ठ्यान्तेषु ओष्ठ्यान्तस्य निर्देशश्चिन्त्यः।

३. काशकृत्स्नधातुपाठेऽपि 'क्षिवु' इत्येव पठ्यत (पृष्ठ ५८)।

४. दिवादौ क्षीरस्वामी न पठति। चान्द्रधातुपाठे (४।४) तूपलभ्यते। अत्र १।२६८ सूत्रस्था (पृष्ठ ६४) टिप्पणी (५) द्रष्टव्या।

५. हिंसायाम्' पाठा०।

६. 'पुर्व' इति पाठेऽपि 'उपधायां च' (८।२।७८) इत्यनेन दीर्घत्वं सिद्ध्यति। तथा सति दीर्घोच्चारणे कारणं मृग्यम्। काशकृत्स्नधातु पाठेऽपि 'पूर्व' इत्येव पाठः (१।२६५)। धातुवृत्तौ 'पूर्व' इति पठित्वाऽपि उपधायां च इत्यनेन दीर्घत्वमुक्तम् (पृष्ठ ११०)। तेन 'पुर्व' इत्येव सायणसम्मतः पाठः प्रतीयते। पुरुषकारे ऽपि 'पूर्व' इत्येव पठ्यते (पृष्ठ १०७)। चुरादौ 'गुर्द पूर्व

३८२. **चर्व अदने** । चर्वति । चर्वितः । चार्वाकः । चुरादौ[1] चर्वयति । **अर्ब बर्ब इत्योष्ठ्यान्त्यौ**[2] ॥५६५॥

३८३. **भर्व हिंसायाम्** । भर्वति । भर्व ॥५६६॥

३८४. **गर्व खर्व दर्पे** । चर्वादिनां षण्णां पुनः पाठोऽर्थभेदार्थ **इत्येके**[3] ॥५६३,५६८॥

३८५. **अर्व शर्व हिंसायाम्** । अर्वः शर्वः ॥५६९,५७०॥

३८६. **इवि व्याप्तौ** । इन्वति । वकारस्य दन्त्योष्ठ्यत्वाज्झल्त्वाभावादनुस्वाराभावः[4] ॥५७१॥

३८७. **पिवि मिवि निवि सेचने** । पिन्वति । मिन्वति । सेवन **इत्येके** ॥५७२-५७४॥

३८८. **इवि जिवि दिवि धिवि प्रीणनार्थाः** । इन्वति इन्वकाः । मृगशिरस्तारकाः[5] । जिन्वति । **धिन्विकृण्व्योर च**(३।१।८०) इत्युविकरणः – धिनोति । **हिवीति च चान्द्राः**(चा० धा० १।२०४) हिन्वति ॥ ५७५-५७८॥

---

निकतने' (१०।११३) इति पठित्वा 'पारायणे द्वौ धातू गूर्दयति पूर्वयति' इत्याह क्षीरस्वामी । काशकृत्स्नधातुपाठे तु चुरादावपि 'पूर्व निकतने' इति पठ्यते (९।१०८) ।

१ चुरादौ क्षीरतरङ्गिण्यां न पठ्यते ।

२. 'अर्ब बर्ब इत्योष्ठ्यान्त्यौ' इत्यस्थानेऽस्य पाठः । अर्ब शर्ब हिंसायाम् (३८५) इत्युत्तरसूत्रव्याख्यानान्तेऽनेन पाठेन भवितव्यम् । तत्रापि च 'अर्व शर्वे त्योष्ठ्यान्त्यौ' इत्येवं पाठो युक्तः । बर्बतेस्त्वत्रापाठाद् दन्त्योष्ठ्यान्त प्रकरणाच्च । अर्ब शर्ब ओष्ठ्यान्तौ धातू पूर्वत्र (१।२८९ सूत्रे) द्रष्टव्यौ ।

३ अस्मिन् मते 'बवयोरभेद' मन्यते ग्रन्थकार इति प्रतीयते । बान्तौ पूर्वत्र १।२८९ सूत्रे पठितौ ।

४. नश्चापदान्तस्य झलि (८।३।२४) सूत्रेणेति शेषः ।

५ स्मृतमिदं धातुवृत्तौ (पृष्ठ ११२) । धातुवृत्तेर्मैसूरसंस्करणे त्वन्यथा पाठो दृश्यते, स चाशुद्ध एव, क्षीरतरङ्गिणीपाठविरोधात् ।

६ 'इन्वका इति पञ्चतारा:.........मरुतो देवता इन्वका नक्षत्रमिति श्रुतेः' इत्यमरटीकाया (पृष्ट २८) क्षीरस्वामी ।

३८९. **रिवि रवि दवि धवि** गत्यर्थाः । रिण्वति । रण्वति । **अबि रबि** इत्योष्ठ्यान्तौ[1] । रम्बते । करम्बः, करम्बितम् । धन्वति धन्वा ॥५७९-५८२॥

३९० **कृवि हिंसाकरणयोः । धिन्विकृण्व्योर च**[2] (३।१।८०) कृणोति ॥५८३॥

३९१. **मव बन्धने । ज्वरत्वरस्त्रिव्यविमवामुपधायाश्च** (६।४।२०) इत्यूठ्—मूः, मुवौ ॥५८४॥

३९२. **अव रक्षणगति**[3] **प्रीतितृप्त्यवगमप्रवेशश्रवणस्वाम्यर्थयाचना-क्रियेच्छादीप्त्यवाप्त्यालिङ्गनहिंसादानभागवृद्धिषु** । अष्टादशार्थाः । अवति । ऊः, उवौ । **ऊतियूतिजूति** (३।३।९७) इत्यूतिः साधुः । **सित-निगमि** (उ० १।७०) इति तुन्—ओतुर्मार्जारः । **अवतेष्टिलोपश्च** (उ० १।१४१)— ओम् । **अर्तिसृधृधम्यशि** (उ०२।१०३) इत्यनिः—अवनिः । इण्- **सिदीङुष्यविभ्यो नक्** (तु० उ० ३।२) ऊनः । **अवितॄ-स्तृतन्त्रिभ्य ईः** (उ० ३।१५८)— अवीः रजस्वला । **इन्** (दश० उ० १।४६)— अविः[4] । अवटः । अविनः ॥५९५॥

३९३. **उदात्ता उदात्तेतः** ॥

---

## [अथ सेड् उभयपदी]

३९४. **धावु शुद्धौ,** ३९५. **उदात्तः स्वरितेत्** । उदात्तः सेट् । स्व-रितेत्त्वात् **स्वरितञितः कर्त्रभिप्राये क्रियाफले** (१।३।७२) इत्यात्मने-पदम् । धावते पादौ, धावति । धावित्वा धौत्वा । धौतः । धावकः ।

---

१. अबि सहचरितो रबिरोष्ठ्यान्त्य इति भावः (द्र०धा० सू० १।२६४)।

२. 'चेत्युविकरणः' पाठा० ।

३. इतोऽग्रेऽन्यत्र 'कान्ति' इत्यपि पठ्यते । तथा सति एकोनविंशत्यर्था भवन्ति ।

४. 'अविरासीत् पिलिप्पिला' इति याजुषमन्त्रे (२३।१२) अविशब्देनार्ण-वाद् बहिर्भूता प्रारम्भिकाऽल्पप्रमाणाऽऽर्द्राऽदृढा पृथिवी उच्यते । द्र० वेदवाणी, वर्ष ८, अङ्क १,२ (सम्मिलित) पृष्ठ १८,१९ ।

धावति इति वेगितायां गतावाहुः[1] ॥५८६॥

---

[अथ सेट आत्मनेपदिनः]

३९६. **धुक्ष धिक्ष सन्दीपनक्लेशनजीवनेषु**। इतो घस्यन्ताः (१।४३२) षट्चत्वारिंशत् सेट आत्मनेपदिनश्च । धुक्षते। संधुक्षितः ॥५८७,५८८॥

३९७. **वृक्ष वरणे**। वृक्षः ॥५८९॥

३९८. **शिक्ष विद्योपादाने** । **शिक्षेर्जिज्ञासायाम्** (१।३।२१।३) तङानौ—धनुषि शिक्षते । अन्यत्र शिक्षति[2]। शक्तुमिच्छतीति सन् शिक्षितः। शिक्षा ॥६९०॥

३९९. **भिक्ष याच्ञायाम् अलाभे लाभे च**। ४००. **क्लेशे च व्यक्तायां वाचि**[3]। **तत्तद्देशादिप्रसिद्धार्थानां पृथङ्निर्देशः**। भिक्षते। **जल्पभिक्ष** (३।२।६८) इति षाकन्—भिक्षाकः भिक्षाकी । **सनाशंस** (३।२।१६८) इत्युः—भिक्षुः। **क्लेशे चेति सभ्याः** पृथक् पेठुः, तथा च **क्लेश भाषण** इति **चान्द्रं सूत्रम्** (चा० धा० १।४४५) **क्लेश बाधन** इति **दौर्गम्**। क्लेशते। क्लेशितः। दिवादौ (तु० ४।५०) क्लिश्यति[4]। क्र्यादौ (९।५४) क्लिश्नाति। चुरादौ[5] क्लेशयति ॥५९१॥

४०१. **दक्ष वृद्धौ शीघ्रार्थे च**। दक्षते। दक्षः। स्त्रियाम् **आसु-**

---

१. 'वेगितगतावाहुः' पाठा०। अत्र 'सर्त्तेर्वेगितायां गतौ धावादेशमिच्छन्ति' इति काशिकावचनम् (७।३।७८) अनुसन्धेयम्।

२. मतमिदं धातुवृत्तौ सायणेन प्रत्याख्यातम्, तत्तत्रैव द्रष्टव्यम्।

३. सस्मार सायणः। अन्ये तु 'क्लेश' धातुमत्र पृथक् पठन्ति। तथैव चन्द्रदुर्गावपि। परन्त्वत्र मूर्धन्यान्तप्रकरणे तालव्यान्तस्य कथं पाठ इति तौ नैव प्रतिपादयतः। काशकृत्स्नधातुपाठे तु 'भिक्ष याचनायाम्, दक्ष वृद्धौ शीघ्रे च' (पृष्ठ ८५) इत्येवानुपूर्विकः पाठः। तेनाप्यत्र क्लेश धातोरनार्षः पाठ इत्येव प्रतीयते।

४. दिवादा आत्मनेपदी पठ्यते।

५. चुरादौ क्षीरतरङ्गिण्यां न पठ्यते।

**रिदाक्षिभ्यां ष्फः**[1] दाक्षायणी तारा । **द्रुदक्षिभ्यामिनन्** (उ० २।५०) दक्षिणः । **श्रुदक्षिस्पृहिभ्य आय्यः** (दश० उ० ८।१) दक्षाय्यो गरुडः । तस्यापत्यं दाक्षाय्यो गृध्रः ॥५९२॥

४०२. **दीक्ष मौण्ड्येज्योपनयननियमव्रतादेशेषु** । मौण्ड्यं वपनम् । इज्या यजनम् । उपनयनम् मौर्वीबन्धः । नियमः संयमः । व्रतादेशः संस्कारादेशकथनम् । दीक्षते । दीक्षित्वा । दीक्षा । **सूददीपदीक्षश्च**[2] (३।२।१५३) इति युच् –नास्ति–दीक्षिता । **अन्ये दीक्ष मौण्ड्ये ज्योपनयनादौ**[3] चेत्याहुः । ज्यवते[4] । जीनः ॥५९३॥

४०३. **ईक्ष दर्शने** । **राधीक्ष्योर्यस्य विप्रश्नः** (१।४।३९) इति सम्प्रदानम्—चैत्रायेक्षते । **ईक्षिक्षमिभ्याञ्च** (३।२।१ वा०) इति णः—ग्रामेक्षा स्त्री । प्रेक्षा ॥५९४॥

४०४. **ईष गतिहिंसादर्शनेषु**[5] । ईषते । अच् (द्र० ३।१।१३४) **ईषा** कीलिका । **हलमनसोरीषः पररूपम्**[6]—हलीषा, मनीषा । **ईषेः किच्च** (उ० १।१४) इषुर्बाणः । **ईषेः किद् ह्रस्वश्च** (उ० ४।२१) इतीकः—इषीका[7] तृणाग्रम् । ईषतीति **ईष उञ्छे** (१।४५६) इत्यस्य रूपम् ॥५९५॥

४०५. **भाष व्यक्तायां वाचि** । भाषते । **भ्राजभास** (७।४।५) इति वा ह्रस्वः—अबभाषत् अबीभषत् । भाष्यम् । भाषितम् । भाषा ॥५९६॥

४०६. **पर्ष स्नेहने** । पर्षते । **घृणिपृष्णि** (तु० उ० ४।५२) इति पार्ष्णिः । पर्षत् । परिषत् तु सीदतेः ॥५९७॥

४०७. **गेषृ अन्विच्छायाम्** । अन्विच्छा गवेषणा । गेषते । अजिगेषत् ॥५९८॥

---

१, नैतादृश क्वचिद्वचनमुपलभ्यते । अत्र क्षीरस्वामिनोऽमरटीका (पृष्ठ २७) द्रष्टव्या । २. षूद क्षरणे (१।२२) इत्यत्र 'सूददीपदीक्षां स' इत्येवं सूत्रमुद्धृतम् । ३. ज्योपनमनादौ' पाठा० ।

४. अत्र 'ज्या' धातोः ज्याते' रूप युक्तम् । मूर्धन्यान्तप्रकरणविरोधाज्ज्याछेदश्चिन्त्यः । ५. 'ईषेः पररूपत्वम्' पाठा० ।

६. '०दानेषु' पाठा० । ७. 'ईषिका' पाठा० । स चापपाठः ।

४०८. **येषृ प्रयत्ने**। येषते ॥५९९॥

४०९. **जेषृ णेषृ एषृ ह्लेषृ**[1] **गतौ**। जेषते। नेषते। **नप्तृनेष्टृ** (उ० २।९४) इत्यत्र नेष्टा। अन्वेषते। अन्वेषितः। इषेः (९।५७) अन्विष्टः। मा भवानन्वेषिषत। दिवादौ **इष गतौ** (४।१७) अन्विष्यति। तुदादौ **इषु इच्छायाम्** (६।५८) अन्विच्छति। क्र्यादौ **इष आभीक्ष्ण्ये** (९।५७) अन्विष्णाति। चुरादौ[2] अन्वेषयति। अन्वेष्टीति तु भ्रान्तिप्रयोगः[3] ॥६००-६०३॥

४१० **ह्रेषृ अव्यक्ते शब्दे**। ह्रेषतेऽश्वः। ह्रेषितम्। ह्रेषा। **रेषृ** इत्यपि **चन्द्रः** (धा० १।४५५) ॥६०४॥

४११. **कासृ शब्दकुत्सायाम्**। शब्दस्य कुत्सा रोगित्वात्। कासते। **कास्प्रत्ययादाम्** (३।१।३५) कासाञ्चक्रे। कासः। विकासः कसतेः (१।६०१) ॥६०५॥

४१२. **भासृ दीप्तौ**। भासते। **भ्राजभास** (७।४।३) इति वा ह्रस्वः—अबभासत् अबीभसत्। **भञ्जभासमिदो घुरच्** (३।२।१६१) —भासुरः। **स्थेशभास** (३।२।१७५) इति वरच्—भास्वरः। **भ्राजभास** (३।२।१७७) इति क्विप्—भाः। भातेस् (२।४४) तु भः, **चिन्तिपूजि** (३।३।१०५) इति चकारादङ्। **गुरोश्च हलः** (३।३।१०३) इत्यप्रत्ययः—भासा ॥६०६॥

४१३. **रासृ शब्दे**। रासते। **रासिवल्लिभ्यां च** (उ० ३।१२५) इति रासभः रास्ना। रासकः[4] ॥६०७॥

४१४. **णासृ शब्दे**। नासते ॥६०८॥

४१५. **णस कौटिल्ये**। अस्य[5] नसते। नासा। नासिका ॥६०९॥

४१६. **भ्यस भये**। भ्यसते। **भेषृ**[6] इति **चन्द्रः** (चा०धा० १।६०७) भेषते[6] ॥६१०॥

---

१. 'प्रेषृ' पाठा०।　　२. चुरादौ क्षीरतरङ्गिण्या न पठ्यते। दिवादौ तुदादौ क्र्यादौ च 'इष' धातु व्याख्यानेऽस्य चुरादित्वं न व्याख्यायते।

३. अदादौ इषधातोरदर्शनादिति भावः।

४. 'रासः' इत्यधिकः क्वचित्।　　५. 'अस्मात्' पाठा०।

६. 'भेसृ ⋯ भेसते' पाठा०। चान्द्रधातुपाठे भेषृ' एवोपलभ्यते।

४१७. **आङः शसि इच्छायाम्**। आशंसते, आशंस्यते। 'आशंसा। **सनाशंसभिक्षामुः** (तु० ३।२।१६८)—आशंसुः। **शन्सृ स्तुतौ** (१।४८१) इत्यस्य शंसति, शस्यते। शस्त्रम्। दुर्गः **आङः शासु** इत्याह[2]—आशासते आशास्यते। आशासित्वा आशास्त्वा। आशा, आशास्तः[3]। अदादौ **आङः शासु इच्छायाम्** (२।१५) तङ्—आशास्ते। आशीः। तथा **शासु अनुशिष्टौ** (२।७५) शास्ति ॥६११॥

४१८. **ग्रसु ग्लसु अदने**। ग्रसते। ग्रस्त्वा, ग्रसित्वा। ग्रस्तः। **ग्रसतेरा च** (दश० उ० ७।१८; श्वेत० १।१२९) इति ग्रामः। ग्रासः। ग्रीष्मः ॥६१२,६१३॥

४१९. **ईह चेष्टायाम्**। ईहते। ईहाञ्चक्रे। ईहिता। ईहितम्। ईहा ॥६१४॥

४२०. **बहि महि वृद्धौ**। बहते। **लङ्घिबंह्योर्नलोपश्च** (उ० १।३०) इति बहु[4]। मंहते। **वर्तमाने पृषद्बृहद्** (उ० २।७५) इति **महत्**। मही तु महेः पूजार्थात् (१०।२५५)॥६१५,६१६॥

४२१. **अहि गतौ**[5]। अंहते। अंहः पापम्। **आहन्तेर्डो ह्रस्व**[6] अहिः। अंह्रिः। त्रयश्चुरादौ भासार्थाः (१०।१९७) अहयति, बंहयति मंहयति ॥६१७॥

४२२. **गर्ह गल्ह कुत्सने**[7]। गर्हते। गर्हा। **गर्ह विनिन्दने** (१०।२३३) चुरादौ वा णिच्—गार्हयति, गर्हति ॥६१८,६१९॥

---

१. सायण मते 'आङः शन्सु इच्छायाम्। आशसते, आशस्यते' इति पाठः (द्र० धा० वृ० पृष्ठ ११६)।

२. पुरुषकारे क्षीरस्वामी तु दौर्गो आङः शन्सु इत्याह' इति क्षीरतरङ्गिण्याः पाठ उद्ध्रियते (पृष्ठ ११६)।

३. 'आशस्तिः' इत्यधिकम्।

४. 'बहुः' पाठा०।

५. अहि प्लिह वक्रगतौ' इति काशकृत्स्नधातुपाठे पठ्यते (पृष्ठ ८९)।

६. अपपाठोऽयम्। आङ्पूर्वाद्धन्तेर्डप्रत्यये 'अह' इत्येतत् सिद्ध्यति, न तु 'अहिः। अपि चात्र हन्तेर्न कोऽपि प्रसङ्गः।

७. 'कुत्सायाम्' पाठा०।

४२३. **बर्ह बल्ह प्राधान्ये** । बर्हते । वुनि (द्र० ३।१।१५०) बर्हकः । प्रबर्हः । बल्हः । बल्हिर्देशः, [तत्र] भवे बाल्हिकः । चुरादौ भासार्थौ (१०।१६७) बर्हयति, बल्हयति ॥६२०,६२१॥

४२४ **वर्ह परिभाषणहिंसादानेषु** । [वर्हते] ॥६२२॥

४२५. **प्लिह गतौ**[1] । प्लेहति[3] । **श्वनुक्षन्** (उ० १।१५६) इति प्लीहा ॥६२३॥

४२६. **वेहृ जेहृ बाहृ प्रयत्ने** । वेहते । **संश्चत्तृपद्वेहद्** (उ० १।८६) इति वेहद् गर्भघ्नी गौ, **विहन्ति इत्येके** । बाहते । **क्षुब्धस्वान्त** (७।२।१८) इति बाहेर्वाढम्, बाहितम् । **वह प्रापणे** (१।७३१) वहति, वहते । वोढा ॥६२४-६२६॥

४२७. **द्राहृ निक्षेपे**[4] । द्राहते । द्राह्यम् । **द्राहृ निद्राक्षये** इति दुर्गः ॥६२७॥

४२८. **काशृ दीप्तौ** । काशते । कथं **चाकशीति**[5] उपधाह्रस्वोऽत्र वक्तव्यः[6] । काशः । प्रकाशः । आकाशः । प्रतीकाशः, नीकाशः, **इकः काशे** (६।३।१२३) दीर्घः । **हनिकुषिनीरमि** (उ० २।२) इति काष्ठम् । **इन्** (दश० उ० १।४६) काशिर्देशः ॥६२८॥

४२९. **ऊह तर्के** । तर्क उत्प्रेक्षा । ऊहते । **उपसर्गादस्यत्यूह्योः** (१।३।२९ वा०) इति वा तङानौ—समूहति, समूहते । समूहः । **उपसर्गाद्ध्रस्व ऊहतेः** (७।४।२३) समुह्यते । परिसमुह्य । समूह्योऽग्निः[7] ॥६२९

---

१. स्मृत धातुवृत्तौ (पृष्ठ) । २. द्र० पृष्ठ ६४, टि० ५ ।

३. क्वचिन्न । आत्मनेपदिषु पाठात् 'प्लेहते' इति युक्तम् ।

४. स्मृतं धातुवृत्तौ (पृष्ठ ११७) । 'निद्राक्षये' इति क्वाचित्कः पाठः, सोऽपपाठः, दुर्गमते तस्यार्थस्यैव प्रतिपादनात् ।

५. अनश्नन्नन्यो अभि चाकशीति' इति ऋग्वेदे (१।१।६४।२०) श्रूयते ।

६. दिवादौ 'वाशृ शब्द (४।५२) इत्यस्य व्याख्याने कशृ वशृ प्रकृत्यन्तरम् इत्याह ।

७ समूह्यं सम्पूर्वाद् वहेरिति वृत्तिकाराः (३।१।१३१) । महाभाष्ये तु सम्पूर्वाद् ऊहतेरित्युक्तम् (३।१।१३१) । तत्रैव चोद्धृतं ब्राह्मणम्—'समूह्यं चिन्वीत पशुकामः ··· पशूनेवास्मै समूहति' (का० सं० २१।४) इति ।

४३०. **गाहू विलोडने।** विलोडनं परिमलनम्। गाहतेऽम्भः। गाढा, गाहिता। गाढः ॥६३०॥

४३१. **ग्लहू**[1] **ग्रहणे।** ग्लहते। ग्लाढा, ग्लहिता। **गृहू** इति **चन्द्र-दुर्गौ** (चा० धा० १।४७३) ॥६३१॥

४३२. **घसि**[2] **करणे**। घंसते। **चन्द्रो घषि**[3] इत्याह—घंषते। **घुषि कान्तिकरण** इति **दुर्गः**[4]—घषते ॥६३२॥

४३३. **उदात्ता अनुदात्तेतः।**

---

**[अथ सेटः परस्मैपदिनः]**

४३४. **घुषिर शब्दार्थः**[5]। इतोऽर्हपर्यन्ताः (१।४८८) अष्टाशीतिः सेटः परस्मैपदिनश्च। घोषति। अघुषत्, अघोषीत्। **घुषिरविशब्दने** (७।२।२३) निष्ठायां नेट्—घुष्टा रज्जुः। नेह—संघुषितं वाक्यम्। चुरादौ **घुषिर् विशब्दने** (१०।१७२) घोषयति[6]। इत्नुच् घोषयित्नुः ॥६३३॥

४३५. **अक्षू व्याप्तौ संघाते च। अक्षोऽन्यतरस्याम्** (३।१।७५) श्नुः—अक्षति अक्ष्णोति। अष्टा, अक्षिता। अक्षम्। अक्षरम् ॥६३४॥

४३६ **तक्षू त्वक्षू तनूकरणे। तनूकरणे तक्षः** (३।१।७६) इति

---

१. इतः पूर्वं 'ग्रहू' इति क्वचिदधिकम्।

२. सायणः स्वामिमते 'घस' इति पाठमाह (धा० वृ० पृष्ठ ११९)।

३ हेमचन्द्रोऽपि 'मूर्धन्यान्तोऽयमिति चन्द्रः घंषते' इति ब्रुवन 'घषि करणे' इति चान्द्रपाठमाह। सायणस्तु 'घिषीतीदुपधं पेठतुः चन्द्रकाश्यपौ' इति (पृष्ठ ११९) लिखन् 'घिषि करणे इति चान्द्रपाठं द्योनयति। मुद्रिते चान्द्र-धातुपाठे 'घुषिर् करणे' (१।४७३) इति पठ्यते। काशकृत्स्नीयधातुपाठेऽपि 'घुषिर् कान्तिकरणे इति पठ्यते (१।५४९, पृष्ठ ९०)। कोऽत्र चान्द्रः पाठ इति सुधियो निर्णयन्तु। 'घुषिर्' पाठ इरित्त्वमसंबद्धम्, आत्मनेपदीनां प्रकरणे पाठात्।

४, उद्धृतमिदं पुरुषकारे (पृष्ट १११)।

५. स्मृतमिदं पुरुषकारे (पृष्ठ ११०) धातुवृत्तौ (पृष्ठ ११९) च।

६. गौः' इत्यधिकं क्वचित्।

श्नुः तक्षति तक्ष्णोति। नेह--संतक्षति वाग्भिः। तष्टा, तक्षिता[1]। तष्टः। तक्षा। तक्षकः। त्वक्षति। त्वष्टा, त्वक्षिता। **त्वक्ष त्वचने** (१। ४४३) अर्थभेदार्थः ॥६३५,६३६॥

४३७. **उक्ष सेचने**। उक्षति। उक्षितः। **श्वनुक्षन्** (उ० १।१५६) इति—उक्षा ॥६३७॥

४३८. **रक्ष पालने**। चौराद् रक्षति। **असुन्** (दश० उ० ६।४६) रक्षः ॥६३८॥

४३९. **णिक्ष चुम्बने**। चुम्बनं वक्त्रसंयोगः। प्रणिक्षति। **वा निक्षनिसनिन्दाम्**[2] (तु० ८।४।३३) इति णत्वम्—प्रणिक्षिता, प्रनिक्षिता ॥ ६३९॥

४४०. **तृक्ष स्तृक्ष णक्ष गतौ**। [तृक्षति, स्तृक्षति]। तृक्षस्यापत्यं तार्क्ष्यः (द्र० ४।१।१०५)। स्तृक्षः। षोपदेशो न्याय्यः, तथा च **चान्द्राः — तृक्ष ष्टृक्ष**[3] **णक्ष** (तु० चा० धा० १।२१५) इति पेठुः। **अभिनक्षि** (उ० ३।१०५) इत्यत्रन्—नक्षत्रम्। **नभ्राट्** (६।३।६५) सूत्रेऽस्य निपातनं **नाम्नां व्युत्पत्तिरव्यवस्थितेति ज्ञापनार्थम्** ॥६४०-६४२॥

४४१. **मक्ष रोषे**[4]। मक्षति। घञ् मक्षः। मक्षिका। **यूकामक्षिकमत्कुणम्**[5] इति छान्दसम् ॥६४३॥

४४२. **वक्ष संघाते**[6]। **असुन्** (दश० उ० ६।४६) वक्षः ॥६४४॥

४४३. **त्वक्ष त्वचने**[7]। त्वचनं त्वचोग्रहणम्। संवरणमिति दुर्गः[8]। त्वष्टा ॥६४५॥

---

१. 'तष्टम्' पाठा०। २. 'वा निसनिक्षनिन्दाम्' इति काशिकादिषु पाठः।

३. चान्द्रे 'स्तृक्ष' इत्येव पाठः।

४. 'मुक्ष संघाते—मुक्षति, मुक्षः' इति काशकृत्स्नधातुपाठकन्नडटीकायां पाठः (पृष्ठ ४१)। ५. 'मङ्कुणम्' पाठा०।

६. 'वक्ष रोषे' इति काश० धातु० पृष्ठ ४१।

७. 'तक्ष वचने—तक्षति (वक्ति), तक्षः (वाचकः)' इति काश० धातु० पाठः (पृष्ठ ४१)।

८. उद्धृतमिदं पुरुषकारे (पृष्ठ ११५)।

४४४. **सूर्क्ष्य अनादरे**। [1]सूर्क्ष्यति। षान्तो[2]ऽयमिति **चन्द्रः** (चा० धा० १।२१९)सूर्क्षति। असूर्क्षणम् अपरिभवः। यान्तस्यापि **यस्य हलः** (६।४।४९) इति यलोपात्[3]।६४६॥

४४५. **काक्षि वाक्षि माक्षि द्राक्षि ध्राक्षि ध्वाक्षि काङ्क्षायाम्**। काङ्क्षति। द्राक्षा। ध्वाङ्क्षः।६४७-६५२॥

४४६. **द्राक्षि ध्राक्षि घोरनिवाशिते[4] च**। **ध्वाक्षि** चेति **दुर्गः**।

४४७. **पक्ष परिग्रह इत्येके**।६५३॥

४४८. **चूष[5] पाने**। चूषति। चूषितः। चूषित्वा।६५४॥

४४९. **तूष तुष्टौ**। तूषति। दिवादौ (४।७५) तुष्यति।६५५॥

४५०. **पूष वृद्धौ**। पूषति। **पुष पुष्टौ** (१।४६२)पोषति। दिवादौ (४।७३) पुष्यति। क्र्यादौ (९।६०) पुष्णाति। चुरादौ (१०।१९५) पोषयति। **श्वनुक्षन्** (उ० १।१५९) इति पूषा।६५६॥

४५१. **मूष स्तेये**। मूषति। मूषा तैजसावर्तनी[6]। गौरादौ (गण० ४।१।४१) मूषी। ण्वुलि मूषकः। कषादौ **मुष हिंसार्थः** (१।४५८)—मोषति। क्र्यादौ (९।६१) **मुष स्तेये**—मुष्णाति। **मुषेर्दीर्घश्च** (उ० २।४३) इतीकः—मूषिकः। **लूषो**ऽपीति **दुर्गः**।६५७॥

---

१. सूर्क्ष अनादरे इति काश० धा० पृष्ठ ४१। धातुवृत्तौ (पृष्ठ १२१) सायणेन 'अनादरे' इति पाठो दूषितः। परन्तु 'सोमेन यक्ष्यमाणो नर्तून् सूर्क्षेन्न नक्षत्रम् (आप० श्रौत ५।३।२१) न सूर्क्षेत् नाद्रियेत इत्यर्थः।

२. सूर्क्ष इत्यर्थः। उद्धृतं पुरुषकारे (पृष्ठ १११)।

३. असूर्क्षणम् इत्येव रूपं निष्पद्यत इत्यर्थः।

४. 'घोरवाशिते' शुद्धः पाठः।

५. इत आरम्य 'पूष' पर्यन्ताः काशकृत्स्नीये धातुपाठे ह्रस्वोपधाः पठ्यन्ते। तेषां च 'चुषादेदीर्घः' इति सूत्रेण सार्वधातुके दीर्घत्व विधीयते। असार्वधातुके च लघूपधगुण उदाह्रियते—चोषकः, तोषः, तोषकः, मोषः, मोषणम्, सोषकः (१।२८४-२८८; पृष्ठ ४१,४२)। दीर्घोपधत्वे तु गुणो दुर्लभः। ह्रस्वोपधत्वे 'चूषकः, तूषकः, मूषकः, पूषकः' इत्यादयः प्रयोगा उपपन्ना न भवन्ति। वस्तुतस्तु उभयथा प्रयोगदर्शनात् धातवोऽप्युभयथा द्रष्टव्याः।

६. तु० 'तैजसावर्तनी मूषा'। अमर० २।१०।३३॥

४५२. **षूष प्रसवे** । सूषति । सुषूष । तालव्यादिरिति **चरकः**[1] **शूषा शाकम्** ॥६५८॥

४५३. **यूष हिंसायाम्** । ४५४. **जूष च** । यूषः । यूषम् । जूषितः । जूषा ॥६५९,६६०॥

४५५. **भूष अलङ्कारे** । भूषति । भूषा । चुरादौ (१०।१७५) भूषयति । **तसि भूष** इति **दुर्गः** । तंसति । उत्तंसः । अवतंसः ॥६६१॥

४५६. **ऊष रुजायाम्** । ऊषति । ऊषः क्षारमृत्तिका । ऊष्मा, ऊषणम् मरिचम् । त्र्यूषणं त्रिकटुकम्[2] ॥६६२॥

४५७ **ईष उञ्छे** । ईषति । ईषा प्रणगवेषणी[3] । इषु । इषीका ॥६६३॥

४५८. **कष शिष जष झष शष वष मष मुष रुष रिष हिंसार्थाः** । कषति । निकषोऽश्मा । पत्काषी । **सर्वकूलाभ्र** (३।२।४२) इति खच्—कूलङ्कषः । **कृच्छ्रगहनयोः कषः**(७।२।२२) इति क्तेऽनिट्—कष्टोऽग्निः । **निमूलसमूलयोः कषः** (३।४।२४) इति णमुल् कषादिषु तैरेवानुप्रयोगः (द्र० ३।४।४६) समूलकाषं कषति । **वौ कषलस** (३।२।१४२) इति घिनुण्—विकाषी । कषिः, कषी खनित्रम् । **कषेश्छ च** (तु० उ० १।८४) इति कच्छूः पामा । **वृतॄवदि** (उ० ३।६२) इति सः कक्षस्तृणं बाहूरुमूलञ्च । गृहोपान्ते तु कक्षा कक्ष्या च । **कषिदूषिभ्यामीकन्**(तु० उ० ४।१६) कषीका । शेषति[3] । रुधादौ **शिष्लृ विशेषणे** (७।१६) विशिनष्टि । चुरादौ **शिष असर्वोपयोगे** (१०।२११) शेषयति, शेषः । झषति । झषः । शषति । शष्यते । शष्पः । मषी । मष्यते माषः । मोषति । क्र्यादौ (९।६१) मुष्णाति । रोषति । दिवादौ (४।१२३) रुष्यति । रुष्यन्तो । रेषति । दिवादौ[4] रिष्यति । [5]**तीषसहलुभ** (७।२।४८) वेट्—रोष्टा रोषिता । **रुष्यमत्वर** (७।२।

१. 'तालव्योष्मादिरिति पारायणिका इति स्वामी' इति धातुवृत्तौ (पृष्ठ १२१) उद्ध्रियते । अयं पाठः क्षीरतरङ्गिण्यां नोपलभ्यते ।

२. पिप्पली, शुण्ठी, कृष्णमरीचिका च 'त्रिकटुकम्' इत्युच्यते ।

३. शुद्ध पाठो मृग्यः । 'परिशिष्येत' प्रयोगः । गो० ब्रा० १।३।५, ।

४. क्षीरतरङ्गिण्यां दिवादौ रिष धातुर्न पठ्यते ।

५. अग्रे १।५९०; ४।१२३,-६।५८ धातुसूत्रव्याख्याने 'तीषुसहलुभ—इत्येवमुकारान्तः 'इसु' पठ्यते । ४।१२९ धातुसूत्रव्याख्याने 'तीषु तीष इत्युभ

७८) इति वेद्—रुष्टः रुषित.रेष्टा रेषिता । रिष्टः, अरिष्टः[1] । **खषेत्य**-पीति **कण्ठः**—खषति खषः ॥६६४—६७३॥

४५९. **भष भर्त्सने** । शब्दकर्मकः, कुत्सितशब्दकरणार्थे । श्वा भषति, बुक्कति । भषति भषिका, पैशुन्येन वक्तीत्यर्थः । भषकः । भषट् (द्र० गण० ३।१।१२४=भषी) ॥६७४॥

४६०. **उष दाहे** । ओषति । **उषविदजागुरन्यतरस्याम्**[2] (तु० ३।१।३८) इति लिट्याम् वा—ओषाञ्चकार, उवोष । उणादावुल्का, उल्मुकम्, उलपः सूक्ष्मलताभिधानम्, उल्वं जरायुः । **उषिकुषिगर्तिभ्यस्थन्** (उ० २।४)—ओष्ठः । **इण्षिञ्जिदीङुष्यविभ्यो नक्** (उ० ३।२)—उष्णः । **उषिखनिभ्यां कित्** (उ० ४।१६२)—उष्ट्रः[3] उष्ट्री । **उषः कित्** (उ० ४।२३४) उषाः । **असुन्** (दश० उ० ९।४९) उषः प्रभातम् ॥६७५॥

४६१. **जिषु[4] विषु मिषु सेचने** । परिवेषति । ह्वादौ **विष्लृ व्याप्तौ** (३।१४)–वेवेष्टि । मेषति । पचादौ (गण० ३।१।१३४) मेषः । तुदादौ **मिष स्पर्धायाम्** (६।५९) मिषति । **मिश मश शब्दे** (१।४७६) तालव्यान्तौ ॥६७६-६७८॥

४६२. **पुष पुष्टौ** । पोषति । पोषिता । अपोषीत् । **पुषः कित्** (उ० ४।४) पुष्करम् । **कलश्च**[5] (तु०उ० ४।५) पुष्कलम् । **स्तनि**-

---

यथा कोशेषु पाठः । एतेन ज्ञायते क्षीरस्वामिनः तीषुसहलुभ' इत्येव पाठः ।

१. रिष्टम्', अरिष्टम्' पाठा० ।

२. क्षीरस्वामिनः सर्वत्र 'जागुरन्य०' इत्येव पाठः । 'उषविदजागृभ्योऽन्यतरस्याम्' इति काशिकादिषु तु पाठः ।

३. 'ष्ट्रन् बाहुलकादगुणत्वम्' इति धातुवृत्तिकारः (पृष्ठ १२३) । तच्चिन्त्यम्, उणादिसूत्रेणैव सर्वेष्टसिद्धेः ।

४ काशकृत्स्नीयधातुपाठे जेषतेरनन्तरं 'णिषु' पठ्यते, नेषति (पृष्ठ ४२) एतद्विषये 'नेषतिः धात्वन्तरम्' इति पतञ्जलिवचनम् (३।२।१३५) अनुसन्धेयम् ।

५. 'कलच्च' इति श्वेतवनवासिनः पाठः (४।५) । अथर्वणि (१३।३।१०) पुष्कलशब्दस्यान्तोदात्तत्वदर्शनात् श्वेतवनवासिपाठ एव ज्यायान् ।

**हृषिपुषि** (उ० ३।२६) इति पोषयित्नुः। **स्वे पुषः** (३।४।४०) इति णमुल्– स्वपोषं पुष्टः। दिवादौ[1] (४।७३) पुष्यति। **पुषादिद्युताद्य** (३।१।५५) इति लुङ्‌च्यङ्–अपुषत्। क्र्यादौ (६।६०) पुष्णाति। चुरादौ **पुष धारणे** (१०।१९५) पोषयति ॥६७९॥

४६३. **श्रिषु श्लिषु प्रुषु प्लुषु दाहे**। श्रेषति। श्लेषति। अश्रेषीत्। अश्लेषीत्[2]। श्रिष्ट्वा, श्लिष्ट्वा, श्रेषित्वा, श्लेषित्वा। **श्लिष आलिङ्गने** दिवादौ (४।७७) श्लिष्यति। श्लेष्मा। चुरादौ **श्लिष श्लेषणे** (१०।३३)—श्लेषयति। [प्रोषति।] प्लोषति। दिवादौ (४।७) प्लुष्यति। प्लुष्ट्वा, प्लोषित्वा। प्लुष्टः। क्र्यादौ **प्रुष प्लुष स्नेहसेचनपूरणेषु** (६।५६) प्रुष्णाति प्लुष्णाति ॥६८०—६८३॥

४६४. **पृषु वृषु मृषु सेचने**। पर्षति। **वर्तमाने पृषद्बृहद्** (उ० २।८४) इति पृषत्[3]। **पृषिरञ्जिभ्यां कित्** (उ० ३।१११) पृषतो मृगो बिन्दुश्च। उणादौ—पृष्ठम् (द्र० २।१२), पार्ष्णिः (द्र० ४।५२); पर्जन्यः (द्र० ३।१०३), पृष्णिः किरणः[4]। स्पृशेस् (६।१२३) तु पृश्निरल्पतनुः। वर्षति। **विभाषा कृवृषोः** (३।१।१२०) क्यप्—वृष्यम्, वर्ष्यम्। के (द्र० ३।१।१३५) वृषः। **लष-पत-पद-स्था-भू-वृष** (३।२।१५४) इति वर्षुकः। **अज्विधौ भयादीनामुपसंख्यानम्** (३।३।५६ वा०) इति वर्षम्। अचि (द्र० ३।१।१३४) वर्षा ऋतुः। वृष्ट्वा वर्षित्वा। वृष्टम्। **कर्तरि चेष्यत**[5] इति वृष्टो देवः। **कनिन् युवृषि**

---

१. स्मृतमिदं पुरुषकारे (पृष्ठ १११)।

२. 'वर्धमानस्वामिसम्मताकारादयश्चामुं सेटमाहुः (धा वृ० पृष्ठ १२५)। अनिट्कारिकासु दैवादिकस्यैवग्रहणमिति कैयटादयः (सि० कौ० भाग ३ पृष्ठ १६६)। व्याख्यातं च स्वयमेव दीक्षितेन—'आदिशब्दात् न्यासकारहरदत्तवर्धमानस्वामिसम्मताकारादयः' (प्रौ० मनो० पृष्ठ ५८१)।

३. दयानन्दसरस्वती स्वामी तु पृषेस्तौदादिकत्वमपि मनुते। यदाह यजुः २।१६ भाष्ये—'(पृषतीः) पृषन्ति सिञ्चन्ति ....'। तौदादिकत्वे स्वीकृते पृषत् शब्दे शतृवदादेशे शविकरणे गुणाभावोऽपि न वक्तव्यो भवति।

४ द्र०—पर्षतेरपीच्छन्त्येके—'पृष्णी रश्मिः। हैमोणादि ६३५। सम्भाव्यतेऽत्र 'एके' पदेन क्षीरस्वामी स्मृतः स्यात्।

५. कुत्रत्यं वचनमिति न ज्ञायते।

(उ० १।१५६) इति वृषा इन्द्रः। **ऋषिवृषिभ्यां किच्च** (तु० उ० ३। १२३) इत्यभच्-वृषभः। **वृषादिभ्यश्चित्**(उ० १।१०८) इति वृषलः। **सुवृषिभ्यां कित्** (उ० ४।४९) वृष्णिः। **नहिवृति** (६।३।११६) इति दीर्घात्—प्रावृट् ॥६८४-६८६॥

४६५. **मृषु सहने च**। मर्षति। मृष्ट्वा, मर्षित्वा। **मृषस्तितिक्षायाम्** (१।२।२०) इत्यस्याकित्वं[1] नास्ति, तत्र न **क्त्वा सेट्** (१।२।१८) इत्यनुवृत्तेः—मृष्टम्। दिवादौ (४।५४) मृष्यति। अपमृषितं वाक्यमाह। **भाषायां शासियुधि** (३।३।१३० वा०) इति युच्—दुर्मर्षणः।

४६६. **भृषु हिंसासंघातयोः**। भर्षति ॥६८७॥

४६७. **घृषु संघर्षे**। घर्षति। घृष्ट्वा, घर्षित्वा। घृष्टः। ल्युः(द्र० ३।१।१३४)—संघर्षण. ॥६८८॥

४६८. **हृषु अलीके**[2]। हर्षति। हृष्ट्वा, हर्षित्वा। हृष्टः। **हृषेर्लोमसु** (७।२।२९) इति [हृष्टानि] हृषितानि लोमानि। **विस्मितप्रतिघातयोश्च**[3] (७।२।२२वा०) हृष्टश्चैत्रः, हर्षितः। **हृषेरुलच्** (उ०१। ९८) हर्षुलः। **स्तनिहृषि** (उ० ३।२९) इति हर्षयित्नुः। दिवादौ **हृष तुष्टौ** (४।१२२) हृष्यति ॥६८९॥

४६९. **तुस ह्रस ह्लस रस शब्दार्थाः**। तोसति। तोसलो राजाः, तोसला देशः। ह्रसति। ह्रसितः। ह्रस्वः। ह्लसति। रसति। रसितम्। चुरादौ **रस आस्वादने** (१०।३१५) अदन्तः रसयति, रसना, रस्यते —रसः। उणादौ (३।१६) रास्ना। रसालास्त्यर्थे (द्र० ५।२।१२५) ॥६९०-६९३॥

४७०. **लस श्लेषणक्रीडनयोः**। लसति। अलसः। विलासः। हृल्लासः। लास्यम्। लसिका रोगः ॥६९४॥

४७१. **घस्लृ अदने इति केचित्**[4]। घञ्—घासः। क्मरचि (द्र०

---

१. जमनसंस्करणे 'कित्वं' इत्यपपाठः।

२. अलीकमानन्द इति काशकृत्स्नधातुव्याख्यानम् (पृष्ठ ४५)।

३. दिवादौ १२२ धातुसूत्रे 'विस्मितप्रतीघातयोश्च' इति शुद्धः पाठ.

४. अयं न सार्वत्रिक इति सायणोऽपि (धा० वृ० पृष्ठ १२५)।

३।२।१६०) घस्मरः ।।६९५।।

४७२. **चर्च झर्छ झर्झ परिभाषणे**। **जंत्स** इति **चन्द्रदुर्गौ** (चा० धा० १।२४१)। **चर्चे इत्येके**। **जर्ज इत्यन्ये, झर्च इत्यपरे**। **किमत्र सत्यम् ? देवा ज्ञास्यन्ति**। तुदादौ (६।२१) अप्येवम् ।।६९६-६९८।।

४७३. **पिसृ पेसृ गतौ**। पेसति। **स्थेशभासपिस**(३।२।१७५)इति वरच्—पेस्वरः। चुरादौ **पिस गतौ** (१०।२८) पेसयति। **पिशृ पेसृ वेसृ** इति **सभ्याः**। वेसरोऽश्वतरः ।।६९९,७००।

४७४. **हसे हसने**। हसति। **व्यतिहारे हसादीनां प्रतिषेधः** (द्र० १।३।१५ वा०)—व्यतिहसन्ति। **ह्म्यन्तक्षण**(७।२।५)इत्येदित्वाद् **वृद्धि**-र्नास्ति—अहसीत्। **स्वनहसोर्वा** (३।३।६२) अप्—हसः, हासः। **स्फायि** (उ० २।१३) इति रक्—हस्रो[1] दिनम्। **हसिमृग्रिण** (उ० ३।८६) इति तन्—हस्तः ।।७०१।।

४७५. **णिश समाधौ**। प्रणेशति। निशा[2] ।।७०२।।

४७६. **मिश मश शब्दे रोषकृते च**। शब्दने रोषक्रियायाञ्चार्थे। के (द्र० ३।१।१३५) मिशो व्याजः। क्वुन्—मशकः ।।७०३,७०४।।

४७७ **शव गतौ**। **शवतिर्गतिकर्मा कम्बोजेषु भाष्यते, विकार एनमार्या आहुः**[3]। शवति। शवरः, शवः, शावम् ।।७०५।।

४७८. **शश प्लुतिगतौ**। प्लुतिभिर्गमने। शशति। शशः। शशकः ।।७०६।।

४७९. **कश शब्दे**। [4]कशेति **कौशिकः**। काशस्तृणम्। काशिः। कश्मीराः ।।७०७।।

४८०. **शसु हिंसार्थः**[5]। शसति। **न शसददवादि** (६।४।१२६)

---

१. अमरादिकोशेषु दिनवाची 'घस्र' शब्दः पठ्यते।

२. अत्र धातुवृत्तिः (पृष्ठ १२६) द्रष्टव्या।

३. द्रष्टव्यम्—निरुक्त २।२।। महाभाष्य १।१। आ० १।।

४. प्रकरणानुरोधात् 'कश' धातुर्युक्तः।

५. 'हिंसायाम्' पाठा०।

इत्येत्वाभ्यासलोपौ न स्तः शशसतुः शशसुः । **ह्म्यन्तक्षणशस**[1] (तु० ७।२।५) इत्यशसीत्[1] । शस्त्वा, शसित्वा । **घृषशसी वैयात्ये**[2] (तु० ७।२।१९) । अनिट्—विशस्तः, अन्यत्र विशसितः । **दाम्नीशसु**[3] (तु० ३।२।१८२) इति ष्ट्रन्—शस्त्रम् । विशसिता । उणादौ शस्ता ।।७०८

४८१. **शंसु स्तुतौ** । शंसति । शस्यते । शंस्त्वा, शसित्वा । **शंसिदुहिगुहिभ्यो वा** (३।१।१०९ वा०) इति वक्तव्यात् क्यप्—शस्यम् । शंस्येर्ण्यद् अपीष्यते- शंस्यम् । नृशंसः । उणादौ शंस्ता पशुविशसिता । अत एव **शसु स्तुतौ च**' इति **दुर्गः** ।।७०९।।

४८२. **चह कल्कने** । कल्कनं शाठ्यम् । चहति । चुरादौ मित् (१०।७७; ८०) चहयति ।।७१०।।

५८३. **रह त्यागे** । रहति । अरहीत् । विरहः । राहुः । **असुन्** (दश० उ० ९।४९) रहः । चुरादौ (१०।२४६) रहयति ।।७११।।

४८४. **रहि गतौ** । रंहति । रंहः ।।७१२।।

४८५. **दृह दृहि बृह बृहि वृद्धौ**[5] । दर्हति । **दृढः स्थूलबलयोः** (७।२।२०) साधुः । दृंहति । बर्हति । **वर्तमाने पृषद्बृहद्** (उ० २।८४) इति बृहत् । **प्रभौ परिवृढः**[6] (७।२।२१) साधुः । बृंहेर्नलोपश्च (उ० २।११०) इतीसिः—बर्हिः । **बृंहेर्नोऽच्च** (उ० ४।१४५) इति ब्रह्मा वृन्दम् ।।७१३-७१६।।

४८६ **बृहि शब्दे च** । बृंहति । बृंहितम । बृहिर् इति **दुर्गः**[7]—अबृहत्, अबर्हीत् । बृंहेर्नलोपाद् बृहोऽद्यतनः (?) ।।

४८७. **तुहिर् उहिर् अर्दने** । तोहति । अतुहत्, अतोहीत् । **वेपि-**

१. 'ह्म्यन्तक्षणश्वस' इति काशिकादिषु पाठः । श्वस-पाठे शसेर्लुङि अतोहलादेर्लघोः (७।१।७) इत्यनेन वृद्धि विकल्पे 'अशसीत्, अशासीत्' इत्युभयथा भविष्यति । क्षीरस्वामी तु श्वसि विकल्पेन वृद्धिमाह (द्र० २।६६) ।

२. धृषिशसीवैयात्ये' इति काशिकादिषु पाठः ।

३. 'दाम्नीशस' इति काशिकादिषु पाठः । ४. चात् हिंसायाम् ।

५ अत्राह सायणः (धा० वृ० पृष्ठ १२८)—'क्षीरस्वामी वृह वृहि भासार्थौ' इत्याह' । न चायं पाठः क्षीरतरङ्गिण्यामुपलभ्यते ।

६. परिवृढस्तु वृहेवृ होर्वा दन्त्योष्ठ्यादेः; न बृहेबृ हेर्वा ।

७. स्मृतमिदं पुरुषकारे (पृष्ठ १२४) ।

**तुह्योर्ह्स्वश्च** (उ० २।५२) इति तुहिनम् । ओहति । अपोहति । औहत्, औहीत् । **तुहिर् दुहिर्** इति **चन्द्रदुर्गौ**[1] (चा० धा० १।२५७) ।।७१७, ७१८।।

४८८. **अर्ह पूजायाम्** । अर्हति । **अर्हः** (३।२।१२) इति कर्मण्यच् अणो बाधः—पूजार्हा । **अर्हः पूजायाम्**[2] (तु० ३।२।१३१) शता अर्हन् । न्यङ्क्वादित्वात् (द्र० ७।३।५३) अर्घः । हलश्च (३।३।१२१) इति करणे घञ् । **अर्घिधर्घात्वन्तरम्—कलां नार्घन्ति षोडशीम्**[3] । अर्घो मूल्यम् । **शकधृषज्ञा** (३।४।६५) इति तुमुन्—अर्हति भोक्तुम् । **अर्ह पूजने** चुरादौ (१०।१७७) णिच्—अर्हयति, योग्यत्वादौ नास्ति (?) ।।७१९।।

४८९. **उदात्ता अनुदात्तेत** ।

---

## [सेट आत्मनेपदिनः]

४९०. **द्युत दीप्तौ** । इतस्त्वरान्ताः (१।५२१) सप्तत्रिंशत् सेट आत्मनेपदिनश्च । द्योतते । **द्युद्भ्यो लुङि** (१।३।९१) इति वा परस्मैपदम्, तत्रैव **पुषादिद्युताद्ि** (३।१।५५) इत्यङ्—अद्युतत् । तङि व्यद्योतिष्ट । **द्युतिस्वाप्योः सम्प्रसारणम्** (७।४।६७) लिटि—विदिद्युते । वचनाद् हलादिशेषाभावः[4] चङि—व्यदिद्युतत् । द्योतनः ।

---

१. उदधृतमिद पुरुषकारे (पृष्ठ १२०) ।

२. 'अर्हः प्रशंसायाम्' इति काशिकादिषु पाठः ।

३. इजर्टन-सम्पादिते महाभारतस्य पूना-सस्करणे सभापर्वणि ३८।२६ श्लोके शारदालिप्यां लिखिते काश्मीरकोशे 'कलां नार्घन्ति षोडशीम्' इत्येव पठ्यते । D४ संज्ञके कोशे वर्तमान, 'नार्घन्ति' पाठाज्ज्ञायते महाभारतस्य काश्मीरपाठः क्षीरस्वामिनः प्राचीनः । हैमधातुपारायणम् (१।५६४) अप्यत्रानुसंधेयम् ।

४. अयं भावः—'द्युत् द्युत्' इति द्विर्वचने न तावत् 'हलादि शेषः' प्रवर्तते, सप्रसारण पूर्वं प्रतीक्षते, अन्यथा हलादिलोपेन यस्य निवृत्तौ कस्य संप्रसारण स्यात ।

क्विप्—विद्युत् । **द्युतेरिसिरादेश्च ज.**[1] (तु० उ० २।१११) **ज्योतिः**[2] । घटादेः (१।५१०) प्राग् द्युतादिगणः ॥७२०॥

४९१. **श्विता वर्णे** । श्वेतते । अश्वितत् । अश्वेतिष्ट । **आदितश्च** (७।२।१६) इत्यनिट्—श्वित्तः । **विभाषा भावादिकर्मणोः** (७।२।१७)—श्वित्तमनेन, श्विततमनेन[3]; प्रश्वित्तः, प्रश्विततः[4] । क्त्रः—श्वित्रम्[5] ॥७२१॥

४९२. **ञिमिदा स्नेहने** । स्नेहनं स्नेहयोगः । मेदते । मिन्नः, मिन्नमनेन; मेदितम् । **निष्ठा शीङ्स्विदिमिदि** (१।२।१९) इति कित्त्वं नास्ति — प्रमिन्नः प्रमेदितः । **भञ्जभासमिदो घुरच्** (३।२।१६१) – मेदुरः । **अमिचिमिदिशसिभ्यः क्त्रः** (उ० ४।१६३) मित्रम् । **असुन्** (दश० उ० ९।४६) मेदो वसा । अचि—मेदाख्यो म्लेच्छः[6] । मेदिनी । दिवादौ (४।१३३) मेद्यति । चुरादौ **मिद स्नेहने** (तु० १०।८) मेदयति ॥७२२॥

४९३ **ञिक्ष्विदा**[7] **स्नेहनमोहनयोः** । क्ष्वेदते । क्ष्विण्णः । **ञिक्ष्विडा**[8] **इत्याहतः** । क्ष्वेडो विषम्, क्ष्वेडाः रवः । **ञिष्विदा** इति **नन्दी**—स्वेदते, अस्विदत्, अस्वेदिष्ट । स्विन्नः । सः **स्विदिस्वदिसहीनाञ्च** (८।३।६२) इति सः—सिस्वेदयिषति । **ष्विदा गात्रप्रक्षरणे** (४।७९) अस्मात् स्विद्यति ॥७२३॥

४९४. **रुच दीप्तावभिप्रीतौ च** । अभिप्रीतिरभिलाषः । **रुच्यर्थानां**

---

१. धातुसूत्र १।२७ व्याख्याने 'द्युतेरिसिजादेश्च जः' इति पठ्यते । उभावपि पाठावशुद्धौ । उभयोः पाठयोश्चित्त्वात् प्रत्ययस्वरेण वा ज्योतिष्पदस्यान्तोदात्तत्वं प्राप्नोति । दृश्यते तु ज्योतिष्पदमाद्युदात्तम् । तेन दशपाद्यां पञ्चपाद्या च पठ्यमानः 'द्युतेरिसिन्नादेश्च जः' इत्येव शुद्धः पाठो ज्ञेयः ।

२. अत्र २० पृष्ठस्था ६ टिप्पणी द्रष्टव्या ।

३. 'श्वेतितम्' पाठा० ।

४. प्रश्वेतितः" पाठा० । ५. इतोऽग्रे 'मर्शः' इत्यधिकम् ।

६. क्षीरतरङ्गिण्यामुत्तरत्र (४।१३३) 'मेदाख्यो देश' इति पठ्यते । किमय 'मेदपाट' शब्देनोच्यमानो मेवाड़देशः संभवति ?

७ स्मृतमिदं पुरुषकारे (पृष्ठ ८२) धातुवृत्तौ (पृष्ठ १३०) च । वस्तुतः पाठोऽय ग्रन्थकारस्यानभिमतः । यतो हि १।७०५-४।१३४ धातुसूत्रव्याख्ययोरस्यास्मरणात् । ८. तथा च प्रयुज्यते—'न क्ष्वेडेत्' । मनु० ४।६४॥

**प्रीयमाणः** (१।४।३३) सम्प्रदानम्—चैत्राय रोचते रोचनः। अरुचत, अरोचिष्ट। **न पादमि** (१।३।८९) इति तङ्—परिरोचयते। **राजसूयसूर्य** (३।१।११४) इति कर्तरि रुच्यः साधुः। भावे ण्यत्—रोच्यम्, **यजयाचरुच** (७।३।६६) इति कुत्वं नास्ति। घञ्—रोकः। ल्युट्—रोचनी दृषत्। ण्यन्ताल्ल्युः (द्र० ३।१।१३४) रोचना। **अलंकृञ्-निराकृञ्** (३।२।१३६) इतीष्णुच्—रोचिष्णुः। **युजिरुचितिजां कुश्च** (उ० १।१४६) इति रुक्मम्। इसिः—रोचिः। **इक् कृष्यादिभ्यः** (३।३।१०८ वा०)[1] रुचिः। अस्त्यर्थे रुचिरम् ॥७२४॥

४९५ **घुट परिवर्तने**। घोटते। अघुटत्, अघोटिष्ट। घोटकः घुटिका गुल्फास्थि ॥७२५॥

४९६. **रुट दीप्तौ**। रोटते ॥७२६॥

४९७. **रुठ लुठ प्रतीघाते**[2]। [रोठते,] लोठते। अलुठत्, अलोठिष्ट। **लुठतीति लक्ष्यदर्शनात् तुदादौ पाठ्यः। रुट लुट इत्येके, बाधृ रोटने** (१।६) इति लिङ्गात्[3] ॥७२७,७२८॥

४९७ **शुभ दीप्तौ**। शोभते। अशुभत्, अशोभिष्ट। शोभना। के—शुभम्। ज्ञापकात्[4] शोभा। रक्—शुभ्रम्। उणादौ शुकः, शुक्रः, शुक्लः। तुदादौ **शुभ शुम्भ शोभार्थे** (६।३३) शुभति ॥७२९॥

४९८ **क्षुभ संञ्चलने**। सञ्चलनं रूपान्यथात्वम्। क्षोभते। अक्षुभत्, अक्षोभिष्ट। **क्षुब्धस्वान्त** (७।२।१८) इति क्षुब्धो मन्थे साधुः[5]। क्षुभितोऽन्यः। दिवादौ (४।१३०) क्षुभ्यति। क्र्यादौ (९।५२) क्षुभ्नाति ॥७३०॥

---

१. जर्मनसंस्करणसम्पादकेन लीबिशेन भ्रान्त्यात्र उणादिसूत्रसंख्या (४।११९) प्रत्ता, उणादौ त्वेतादृक् सूत्र नास्ति।

२. 'प्रतिघाते' पाठा०।

३. उद्धृतमिदं पुरुषकारे (पृष्ठ ६४) धातुवृत्तौ (१३०) च। एतेनार्थनिर्देशोऽपि पाणिनीय इति ज्ञाप्यते।

४ शुभ शुम्भ शोभार्थे इति तुदादौ (सूत्र ३४) शोभेति पाठात्। अत्र 'निपातनाद्' इति युक्ततरः पाठः स्यात्। वक्ष्यति च स्वयमेव तुदादौ 'अत्र एव निपातनाद् शोभा साधुः। वामनोऽपि काव्यालङ्कारव्याख्याने ५।२।११ 'शोभेति निपातनाद्' इत्याह। ५. 'मन्थश्चेत्' पाठा०।

५००. **णभ तुभ हिंसायाम्** । नभते । तोभते । [1]क्र्यादौ (९।५३) नभ्नाति, तुभ्नाति । **असुन्** (दश० उ० ९।४९) नभः ।।७३१।।

५०१. **स्रन्सु ध्वन्सु भ्रन्शु अवस्रंसने** । स्रंसते । **नीग्वञ्चुस्रन्सु**(तु० ७।४।८४) इति सनीस्रस्यते । **वसुस्रंसुध्वंस्वनडुहां**[2] **दः** (तु०८।२।७२) उखास्रत् । स्रस्त्वा स्रंसित्वा । **क्तिन् आबादिभ्यः** (३।३।९४ वा०) स्रस्तिः । ध्वंसते । दनीध्वस्यते । पर्णध्वत् । ध्वस्तिः । ध्वस्त्वा, ध्वंसित्वा । ध्वस्तः । भ्रंशते । भ्रष्टिः । बनीभ्रश्यते[3] । भ्रष्ट्वा भ्रंशित्वा । भ्रष्टः । दिवादौ (४।११८) भ्रश्यति ।।७३२-७३४।।

५०२. **ध्वन्सु गतौ च** ।

५०३. **स्रन्भु विश्वासे** । विस्रम्भते[4] । व्यस्रभत्, व्यस्रम्भिष्ट **स्रन्हुः** इति **कौशिकः**—स्रंहते, ऊष्मान्तप्रस्तावात् ।।७३५।।

५०४. **वृतु वर्तने** । वर्तनं स्थितिः । वर्तते वर्तन.[5] । अवृतत् अवर्तिष्ट **वृद्भ्यः स्यसनोः** (१।३।९२) वा परस्मैपदम् । **न वृद्भ्यश्चतुर्भ्यः** (७।२।५९) इति तत्रैव नेट—वर्त्स्यति । वर्तिष्यते । अवर्त्स्यत्, अवर्तिष्यत । विवृत्सति, विवर्तिषते । वृत्त्वा, वर्तित्वा । वृत्त, वृत्ति, वृत्यः । वृत्तिरस्त्यस्याम्—वार्त्तः[6] । **वृतेश्च** (उ० २।१७) इत्यनिः—वर्तनिः । **मनिन्** (दश० उ० ६।७३)—वर्त्म । **णेरध्ययने वृत्तम्** (७।२।३६) **हस्ते वर्तिग्रहोः** (३।४।३९) णमुल्—हस्तवर्तं वर्तयति । रक् (द्र० उ० २।१६) वृत्रः । वार्ताकः । वर्तकः । **वर्तका शकुनौ प्राचाम्** (७।३।४५ वा०) उदीचां वर्तिका । **हृपिशि** (दश० उ० १।४७) इतीन्—वर्तिः । दिवादौ **वृतु वरणे** (४।४९) **इत्येके**—वृत्यते । चुरादौ (१०।१९७) भासार्थः—वर्तयति ।।७३६।।

---

१ इतः पूर्वम् 'दिवादौ (४।१३१) नभ्यति तुभ्यति' एतावान् पाठो नष्टः स्यात्, दिवादिगणस्थयोरत्रास्मरणात् ।

२. '०ध्वन्स्वनडुहां दः' इति काशिकादिषु पाठः ।

३. एतेन 'नीग्वञ्चुस्रंसुध्वंसुभ्रंसु०' इत्यादिसूत्रे 'भ्रंशु' इति पाठः स्वामिमते इति ज्ञाप्यते । अन्ये त्वत्र धातुसूत्रे (५०१) अष्टकसूत्रे च 'भ्रसु' इत्येव पठन्ति । अत्र धातुवृत्तिरपि द्रष्टव्या (पृष्ठ १३१ तथा ३०९) ।

४. विपूर्व एव विश्वासे इति ज्ञापनार्थो विपूर्वस्य प्रयोगः ।

५ 'वर्तनम्' पाठा० । ६ अत्र 'वृत्तेश्च' (५।२।१०१) वार्त्तिकेन णः प्रत्ययः ।

५०५. **वृधु वृद्धौ**। वर्धते। ण्यन्ताल्ल्युः (द्र० ३।१।१३४) सुखवर्धनः। वृद्ध्वा, वर्धित्वा। वृद्धः, वृद्धिः। इष्णुच्—वर्धिष्णुः। **वृधिवपिभ्यां रन्** (उ० २।२७)—वर्ध्रः। चुरादौ **वृधु भासार्थः** (१०।१९७) वर्धयति। तत्रैव **वर्ध छेदनपूरणयोः** (१०।१०२) ।।७३७।।

५०६. **शृधु शब्दकुत्सायाम्**। शब्दकुत्सा पायुशब्दत्वात्[1]। शर्धते। अशृधत् अशर्धिष्ट ।।७३८।।

५०७. **स्यन्दू स्रवणे**[2]। स्यन्दते। अस्यदत्, अस्यन्दिष्ट। स्यन्त्स्यति, स्यन्दिष्यते। स्यन्तुम्, स्यन्दितुम्। **अनुविपर्यभिनिविभ्यः स्यन्दतेरप्राणिषु** (८।३।७२) इति वा षत्वम्—अनुष्यन्दते तैलम्, अनुस्यन्दते। **स्यदो जवे** (६।४।२८) साधुः। **क्त्वि**[3] **स्कन्दस्यन्दोः** (६।४।३१) नेट्—स्यन्त्वा। युच्—स्यन्दनः। **स्यन्देः प्रसारणं धश्च** (दश० उ० १।९६) इति सिन्धुः ।।७३९।।

५०८ **कृपू सामर्थ्ये**। **कृपे रो लः**[4] (कातन्त्र ३।८।९८) कल्पते। अक्लृपत् अकल्पिष्ट। कल्प्स्यति कल्पिष्यते। चिक्लृप्सति चिकल्पिषते। **लुटि च क्लृपः** (१।३।९३) इति वा परस्मैपदम्। **तासि च क्लृपः** (७।२।६०) इति नेट्—कल्प्तासि कल्पितासे। कल्प्तुम् कल्पितुम्। क्लृप्तम्। **ऋदुपधाच्चाक्लृपिचृतेः** (३।१।११७)इति निषेधाण्ण्यत्—कल्प्यम्। **कृतकृपिभ्यः कीटन्** (उ० ४।१८९)कृपीटं वारि। चुरादौ **कृपेस्तादर्थ्ये** (१०।१८६) आगर्वीयः—कल्पयते ।।७४०।।

५०९. **वृत्**। वर्तनं वृत्। द्युतादिर्वृतादिश्चान्तर्गणौ वर्तितौ समाप्तावित्यर्थः। वृधेः क्विप्, वर्धितौ पूर्णावित्येके ।।

५१०. **घट चेष्टायाम्**। चेष्टा ईहा। घटते। घटितम्। **घटादयो**

---

१. 'पायुशब्दः' पाठा०। पुरुषकारे क्षीरस्वामिनाम्ना 'पायुशब्दत्वात्' पाठ एवोद्ध्रियते (पृष्ठ ८७)।

२. 'प्रस्रवणे' पाठा०।

३. 'क्त्वायां चेट् प्रतिषेधः' इति महाभाष्यवचनात् आल्लोपो नापि भवति।

४. पाणिनीयं तु 'कृपो रो लः' इत्येव भाष्यसम्मत सूत्रम् इति ऋलृक्सूत्रभाष्याज्ज्ञाप्यते। तत्त्वबोधिनीकारेण तु क्षीरस्वामिना कातन्त्र-सूत्रमुद्धृतमित्यविज्ञाय 'स्वामिसम्मतः पाठोऽर्वाचीनपाठः' इत्युक्तम् (द्र० सि० कौ० भाग ३ पृष्ठ १७६)।

**मितः**[1] (१।५५३) इति मित्त्वान्मितां **ह्रस्वः** (६।४।९२) घटयति। घटनः। इह येऽन्यत्र पठितास्तेषां योऽर्थ उपात्तस्तत्रैव मित्त्वम्, येऽत्रैव पठ्यन्ते तेषां सामान्येन, अनेकार्थत्वात्। अतो विघटयतीति चेष्टाभावेऽपि ह्रस्वः। कथम्—**कमलवनोद्घाटनं कुर्वते ये** (सूर्यशतक २) **प्रविघातयिता समुत्पतन् हरिदश्वः कमलाकरानिव** (किरात २।४६) चुरादौ **चट स्फुट घट च हन्त्यर्थाश्च**[2] (द्र० धा० सू० १०।१६९) इति घटिर्नान्ये **मितोऽहेतौ च** (धा० सू० १०।८०) इत्यमित्। ज्ञपाद्यो (द्र० धा० सू० १०।७५-७९) येऽधीतास्तेभ्योऽन्ये स्वार्थणिचि न मित इत्यर्थः, तेन **शम लक्ष आलोचने** (धा० सू० १०।१४३) निशामयते, **अम रोगे** (धा० सू० १०।१६६) आमयतीत्यादि सिद्धम्। चटादयस्त्रयो हन्त्यर्थवृत्तयो णिचमुत्पदयान्तीति तु **दर्शन एभ्यो** घञन्तेभ्यो[3] णिच्, इत्थञ्च **उन्नामिताखिलमहीधरकन्धरस्य**[4] तथा चौरस्योत्क्राथयति इति सिद्धम्। सक्रामयतीति तु संक्रामन्तं करोतीति (द्र० धा० सू० १०।२९७) इति णिच्। '**क्षपयित्वा घनसम्पदमम्बुशोषः कृतः सवित्रा**[4] तथा **भेषजक्षपिताङ्गानां च**[4] इत्यविगानात् क्षपिश्चुरादौ अदन्तो अभ्यूह्यः[5] **चिण्णमुलोर्दीर्घोऽन्यतरस्याम्** (६।४।९३) अघाटि अघटि, घाटं घाटम्, घटं घटम्। अभिधानलक्षणत्वात् कृतण्यन्ताण् णमुल्। घटादीनां षित्त्वात् (द्र० धा० सू० १।५२२) **षिद्भिदादिभ्योऽङ्** (३।३।१०४) घटा, **शकधृष** (३।४।६५) इति तुमुन्—घटते भोक्तुम्। घटः। इह घटादौ केऽप्यत्रैव पठिताः प्रकृत्यादिविषयाः न्याय्यविकरणाश्च[6]। अन्ये तु स्वस्थानोक्तकार्यभाजः पित्त्वमित्त्वार्थमनूद्यन्त इति यथायथमुत्प्रेक्ष्यम् ॥७४१॥

५११. **व्यथ भयचलनयोः**। **दुःखचलनयोरि**ति **दुर्गः**। व्यथते।

---

१. केचन मित्त्व विभाषा मन्यन्ते। तथा चोक्तम् 'सर्वेषां मिता वैकल्पिकत्वात्......' रामायण शिरोमणिटीका १।१७।२६, पृष्ठ १५९।

२ '**हन्त्यर्थाः**' पाठा०।

३. सन्दिग्धोऽयं पाठः।　　४. अनुपलब्धमूलमिदम्।

५. चुरादिगणे बहुलमेतन्निदर्शनम्' (सूत्र ३२५) इत्यस्य व्याख्याने क्षीरस्वामिना 'क्षप प्रेरणे' उदाहरणरूपेण पठितः। स च देवराजयज्वना निघण्टुवृत्तौ (पृष्ठ ४३,१०९) दैवव्याख्यात्रा च पुरुषकारे (पृष्ठ ९५) उद्धृत.।

६. 'न्याय्यविकरणार्थ.' पाठा०। न्याय्यविकरणा.. शब्भिकरणा इत्यर्थः।

व्यथयति । अव्याथि अव्यथि, व्याथं व्याथम्, व्यथं व्यथम् । व्यथा । **व्यथो लिटि** (७।४।६८) इत्यभ्यासस्य सम्प्रसारणम् —विव्यथे । राजसूयसूर्य (३।१।११४) इत्यव्यथ्यः कर्तरि साधुः । ग्रहादौ **व्यथवदवसां प्रतिषिद्धानाम्**[१] (तु० ३।१।१३४ गणसूत्र) अव्याथी । अनञ्पूर्वाद् युच् व्यथनः । **व्यथेः प्रसारणं किच्च** (उ० १।४० उज्ज०)—विथुरो राक्षसः ॥७४२॥

५१२. **प्रथ प्रख्याने** । प्रख्यानं प्रसिद्धिः । प्रथते । प्रथयति । प्रथा । **अत् स्मृदृत्वरप्रथ** (७।४।९५) इत्यभ्यासस्यात्वम्—अपप्रथत् । **प्रथिम्रदिभ्रस्जां प्रसारणं सलोपश्च** (उ० १।२८ श्वेत०) पृथुः । **प्रथेः षिवन् प्रसारणञ्च** (उ० १।१३६ श्वेत०) पृथिवी । अलीकादौ (द्र० उ० ४।२५) पृथ्वीका[२] । प्रत्तिः[३] । प्रथेरमच् (उ०५।६८) प्रथमः ।७४३

५१३. **पृथु विस्तारे** । पर्थते । **प्रथेः सम्प्रसारणात्** (द्र० उ० १। २८) **अनार्षममुं मन्यन्ते** ।[४] एवं मृद्नातौ (द्र० धा० सू० ६।४८) सति म्रदिम्[५] (द्र० धा० सू० १।५१५) ॥७४४ ।

५१४. **प्रस प्रसवे** । **प्रस विस्तारे**[६] इति दुर्गः ॥७४५॥

५१५. **म्रद मदने** । म्रदते । म्रदयति । अमम्रदत् **प्रथिम्रदि** (उ० १।२८) इति मृदुः । मृद्वीका । क्र्यादौ **मृद क्षोदे** (६।४८) मृद्नाति, अमीमृदत् अममर्दत्[७] ।७४६॥

---

१ गणसूत्रे तु व्यथिस्थाने 'व्रजिः' पठ्यते ।

२. 'पृथीका' पाठा० । प्रथधातोः कीकच्प्रत्यये सप्रसारणे वुगागमे च 'पृथ्वीका' सिद्ध्यति, । एव म्रद मर्दने (१।५१५) सूत्रे मृद्वीका ।

३. द्र० उ० ४।१५ श्वेत०, नारा० द्र० उ० १।७५ ।

४. स्मृतमिद पुरुषकारे (पृष्ठ ७७) धातुवृत्तौ (पृष्ठ १३४) च ।

५. पूर्वहेतुविरुद्धमेतद् वचनम् । यथाहि पूर्वत्र 'प्रथिम्रदिभ्रस्जा सप्रसारणम् (उ० १।२५) इति वचनात् पृथेरनार्षत्वं प्रतिपाद्यते, तथैव म्रदेरपि सप्रसारणविधानात् मृद्नातेरनार्षत्व वक्तव्यम्, न तु मृद्नाति स्वीकृत्य म्रदे ।

६. 'प्रस विस्तारे' इति काशकृत्स्नधातुपाठः (पृष्ठ ९७) ।

७. 'अत्स्मृदृत्वरप्रथम्रद' (७।४।९५) इति शपा निर्देशात् मृद्नोतेर्णिचि चङि अत् न भवति । तेन 'उरृत्' (७।४।७) इत्येव प्रवर्तते ।

५१६. **स्खद खदने** । खदनं विदारणम्[1] । स्खदयति ॥४७७॥

४१७. **क्षजि गतिदानयोः** । अस्य पाठोऽनुपधाया अपि चिण्णमुलोदीर्घार्थः (द्र० ६।४।९३) एतदर्थमेव तत्र ह्रस्वविकल्पे कर्तव्ये दीर्घविधिः । एवं दक्षिकन्दिक्रन्दिक्लन्दीनां (१।५१८,५२०) ज्ञेयम् । **क्षजेति** **कौशिकः** । चुरादौ **क्षजि कृच्छ्रजीवने** (१०।७३) क्षञ्जयति ॥७४८॥

५१८. **दक्ष गतिहिंसनयोः** । दक्षते । **दक्ष वृद्धौ शीघ्रार्थे च** (१।४०१) इत्यस्यैवार्थभेदाद् घटादिकार्यार्थं पुनः पाठः ॥७४९॥

५१९ **क्रप कृपायाम्** । क्रपते । क्रपयति । **क्रपेः प्रसारणञ्च** (तु० ३।३।१२४ ग० सू०) इति कृपा । उणादौ **कृपणः** ॥७५०॥

५२०. **कदि क्रदि क्लदि वैक्लव्ये** । विक्लवः कातरः । **वैकल्य**[2] इति **चन्द्रः**[3] (१।५२०) क्रन्दन्ते, क्रन्दा । **कद, क्रद, क्लद,** इति **नन्दी**[4] क्रदा । **कदि क्रदि क्लदि आह्वाने रोदने च** (१।५८) इति परस्मैपदिनः—क्रन्दति ॥७५१-७५३॥

५२१. **ञित्वरा सम्भ्रमे** । सम्भ्रमोऽत्राशुकारिता । त्वरते । त्वरयति । त्वरा । अतत्वरत् । त्वरित्वा । क्विपि—तूः । **ञीतः क्तः** (३।२।१८७) निष्ठायां **रुष्यमत्वरसंघुषास्वनाम्** (७।२।२८) इति वेट्—तूर्णः, त्वरितः । इत्थं चादित्वं प्रपञ्चार्थम्[5] । तूर्तिः । **वहिश्रियुश्रुग्लाहात्वरिभ्यो नित्** (दश० उ० १।२१) तूर्णिः ॥७५४॥

५२२. **घटादयः षित** । दर्शितं षित्त्वफलम् । अत्र पूर्वा दश पठिताः, दक्षकन्द्यादयस्तु चत्वारः स्थानान्तरपठिताः कार्यार्थमनूदिता **इत्येके** ॥

१. 'स्खदन विद्रावणमिति स्वामी' इति धातुवृत्त्यावुद्धृत पाठ. (पृष्ठ १३४) । २. चान्द्रधातुपाठे (१।५२०) 'वैक्लव्ये' इति मुद्रितः पाठः । स चापपाठः प्रतीयते ।

३. उद्धृत पुरुषकारे (पृष्ठ ८१) धातुवृत्तौ (पृष्ठ १३५ भ्रष्टः पाठः) च ।

४. उद्धृत पुरुषकारे (पृष्ठ ८१) ।

५. आदितश्च (७।२।१६) इति सूत्रं निष्ठायां नित्यमिण्णिषेधार्थम्, इह तु रुष्यमत्वर (७।२।२८) इत्यनेन प्रत्यक्षमिटो विकल्प उच्यते । तथा सति आदित्करणमनर्थकमेव, न चान्यत् किंचिदादितः फलम् इति भावः । सम्भवति धातुपाठ आदित्व पूर्वाचार्याणामनुरोधेन स्यात् ।

५२३. **उदात्ता अनुदात्तेतः** ।

५२४. **ज्वर रोगे** । इतः फणान्ताः (१।५६१) षट्त्रिंशत् सेटः परस्मैपदिनश्च । ज्वरति । ज्वरयति । अज्वारि, अज्वरि । ज्वारं ज्वारम्, ज्वरं ज्वरम् । ज्वरितः । जूः । जूर्तिः । **वीज्याज्वरिभ्यो निः** । (उ० ४।४८) जूर्णिः । अज्वरेरिति निषेधात् **रुजार्थानाम्** (२ ३।५४) इति षष्ठी नास्ति—चोरं ज्वरयति ज्वरः ॥७५५॥

५२५. **गड सेचने** । गडति । गडयति । गड्डः । गडोऽचि । **सुखं स्वपिति गौगंडी**[1] । **गडेरादेश्च कः** (उ० ३।१०६) कडत्रम् । **गडेः कड च** (दश० उ० ७।२२) इति कडारः पिङ्गः (?, पिङ्गलः) ॥७५६॥

५२६. **हेड वेष्टने** । हेडति । हिडयति । पाटसामर्थ्याद्[2] ह्रस्वः—अहिडि अहेडि, हेडं हेडम्, हिडं हिडम् । **अन्ये** ह्रस्वं कृत्वा चिण्णमुलोर्वा दीर्घमाहुः—अहीडि अहिडि, हीडं हीडम्, हिडं हिडम्॥७५७

५२७. **वट भट परिभाषणे** । वटयति, भटयति । **वट वेष्टने, भट भृतौ** (१।२०२,२०६) इत्याभ्यां वाटयति भाटयति ॥७५८,७५९॥

५२८. **नट नतौ**[3] । नटति । नटयति शाखाम् । नृतौ तु (द्र० १। २०९) नाटयति[4] । चुरादौ **नट अवस्यन्दने** (१०।१२) अस्माच् चोरस्योन्नाटयति ॥७६०॥

५२९. **चक तृप्तौ प्रतिघाते च**[5] । चकति[6] । चकयति । चकितः ।

---

१. अनुपलब्धमूलम् । इदं चरण काव्यप्रकाशे (उल्लास १०) अर्थान्तरन्यासस्य 'गुणानामेवदौरात्म्याद्' इत्युदाहरण उपलभ्यते । तत्र 'सुखं स्वपिति गौर्गलिः' इत्येवं पाठः ।

२. अय भावः—णिज्निमित्त यत्र गुणवृद्धिभ्यां दीर्घत्वं भवति तत्रैव मिता ह्रस्वः, चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' (६।४।९२,९३) इति सूत्रे प्रवर्तेते । इह तु स्वभावसिद्ध एकारः, न तु णिज्निमित्तः । अत आह—घटादिपाठसामर्थ्याद् इति भावः ।

३. 'गतौ' पाठा० ।

४ स्मृतमिदं पुरुषकारे (पृष्ठ ६७) धातुवृत्तौ (पृष्ठ १३६) च ।

५. स्मृतमिदं पुरुषकारे (पृष्ठ ४३) धातुवृत्तौ (पृष्ठ १३६) च । तृप्तौ' इत्येव काश० धातु० (पृष्ठ ६९) ।

६. द्र० पुरुषकारः (पृष्ठ ४३) ।

**कठिचकिभ्यामोरः** (दश० उ० ८।२९) चकोरः । **चक तृप्तौ** (१।७४) इत्यस्य चकते ॥७६१॥

५३०. **ष्टक स्तक प्रतिघाते** । स्तकति । तिष्टकयिषति, तिस्तकयिषति ॥७६२,७६३॥

५३१. **कखे हसने** । कखति । कखयति । एदित्वाद्—अकखीत् । उणादौ किखिर्लोमशः[2] ॥७६४॥

५३२. **रगे शङ्कायाम्** । रगति । अरगीत् । रगडस्तालः ॥७६५॥

५३३. **लगे सङ्गे** । लगति । लगयति । अलगीत् । **क्षुब्धस्वान्त। ध्वान्तलग्न** । (७।२।१८) इति सक्ते लग्नः साधुः, लगितोऽन्यः ॥७६६

५३४. **ह्लगे ह्लगे ष्ठगे स्थगे संवरणे** । संवरणमाच्छादनम् । स्थगति । स्थगयति । तिष्ठगयिषति, तिस्थगयिषति च । षगे स्थगे इति **दुर्गः** ॥७६७-७७०॥

५३५. **कगे नोच्यते** । अस्यायमर्थ इति नोच्यतेऽनेकार्थत्वात् । नोच्यत इति योऽथस्तत्रार्थे कगिरित्येके[3] ॥७७१॥

५३६. **अक अग कुटिलायां गतौ** । अकति । अगति । पृषोदरादौ न अनस ओकं[4] गतिं हन्तीत्यनोकहो[5] वृक्षः । अगति । अग्रम् ॥७७२, ७७३॥

५३७. **कण रण गतौ** । अनयोर्गत्यर्थयोर्मित्त्वम् । शब्दे तु काणयति ॥७७४, ७७५॥

---

१. येषां विकल्पेन षत्व विधीयते येषा च प्रत्ययान्तरे प्रतिषिध्यते ते द्विविधा धातवो भवितुमर्हन्ति । इह ५३४ सूत्रे ष्ठगे स्थगे धातू अपि द्रष्टव्यौ ।

२. पञ्चपाद्यां दशपाद्यां च 'किखि' पदं न व्युत्पाद्यते । भोजीयोणादौ 'किखिर्लोमशी' (स० क० २।१।१६६) हैमोणादौ 'किखिर्लोमासका' (सू० ६२६) इत्युक्तम् । हरदत्तस्तु 'अपचितपरिमाणः शृगालः किखी' इत्युक्तवान् (पदमञ्जरी ३।१।६) । ३. न्यायसग्रहे (पृष्ठ १२३) 'अयं मौन इत्येके । यथा कगति न वक्तीत्यर्थः । सर्वक्रियास्वित्यन्ये••••• इति व्याख्यायते । काशकृत्स्नीये धातुपाठे 'कगे गतौ' पठ्यते (पृष्ठ १००) ।

४. 'आकम्' पाठा० । लिविशेन 'ओकं' इति शुद्धः पाठान्तरे न्यस्तः ।

५. द्र० भोजीयम् 'अनेरोकहः' (स० क० २।३।१८६) सूत्रम्, हैमोणादिसूत्र (५६५) च ।

५३८. **चण श्रण दाने** । चणति । चणयति । चणकः । गतिहिंसार्थाच् चाणयति । श्रणति । श्रणयति । चुरादौ (१०।३७) । विश्राणयति । **भज विश्राणने** (१०।१७६) **विश्राणनादन्यपयस्विनीनाम्** (तु० रघु० २।५४) । **शण** इत्यपि **दुर्गः**—शणः शाणः ॥७७६,७७७॥

५३९. **श्रथ**[1] **क्नथ क्लथ हिंसार्थाः** । क्रंथति । क्रथयति । चुरादौ (१०।२१८) चौरस्योत्क्राथयति । घञन्ताण्णिजिति **चन्द्रदुर्गौ**,[2] **नाटक्राथपिषाम्** (२।३।५६) इति लिङ्गाच्च ॥७७८-७८०॥

५४०. **चनु च** । चकाराद् हिंसार्थः । चनति । चनयति ॥७८१॥

५४१. **वनु च नोच्यते**[3] । तथा अनुकर्षणार्थश्चकारः । यद् वा न केवलं कगे, यावद् वनु च नोच्यते क्रियासामान्यवाचित्वात्[4] । वनति । वनयति । वत्वा, वनित्वा । वतः । सवननम् । **वन षण भक्तौ** (१।३११) इत्यस्य वानयति ॥७८२॥

५४२ **ज्वल दीप्तौ** । ज्वलति । ज्वलयति । अग्रे (द्र० १।५६८) ज्वलादिकार्यार्थः पाठः ॥७८३॥

७४३. **ह्वल ह्मल चलने** । ह्वलति । ह्वलयति । विह्वलः ॥७८४, ७८५॥

**५४४. स्मृ आध्याने** । आध्यानमुत्कण्ठा । स्मरति । स्मरयति । चिन्तायां (द्र० १।६६५) स्मारयति, विस्मारयति । अन्यत्रोक्तानामर्थविशेषे मित्त्वार्थ इह पाठः ॥७८६॥

---

१. 'श्लथ' इत्यधिक क्वचित् ।

२. चन्द्रगोमी धातुपाठे चुरादौ 'क्रथ हिंसायाम्' इत्येत धातु न पठति । तदभावे च 'षष्ठी सम्बन्धे' (चान्द्रव्याक० २।१।९५) इति सूत्रव्याख्याने 'चौरस्योत्क्राथयति, चौरमुत्क्राथयति' इति प्रयोगसिद्धये 'घटादित्वात् क्रथयतीति प्राप्नोति । क्रथनं क्राथ., क्राथ करोति क्राथयति' इत्येव व्याख्यातवान् । उत्तरोत्तर धातुपाठेषु धातूना संक्षेपात् पूर्वव्याकरणानुसारं धातुनिष्पन्नानपि शब्दान् उत्तरे वैयाकरणा. कथं नामधातोर्व्युत्पादनमारभन्त इत्येतदत्र स्पष्टम् । वस्तुतस्तु भगवता पाणिनिना नामधातोर्निष्पादिताः प्रयोगा अपि धातुजा एव । एतदेव संचित्य महाभाष्यकरेण नामधातुप्रकरणेऽसकृदुक्तम्—"धातव एवैते ·· ···न चैव ह्यर्था आदिश्यन्ते, क्रियावचनता च गम्यते" (३।१।८,११,१९)।

३. 'चनु वनु स्मरणे' इति काशकृत्स्नः (पृष्ठ १०१) ।

५४५. **दॄ भये** । दरति । दरः । दरद् रोमकदेशः[1] । बालं दरयति । क्र्यादौ **दॄ विदारणे** (९।२२)—दृणाति, दारयति काष्ठम् । तस्यैव मित्त्वार्थं इह पाठ इत्येके[2] । दिवादौ दीर्यतीति **पञ्चिका** । कर्मकर्तरि दीर्यत इत्येके ॥७८७॥

५४६. **नॄ नये** । क्र्यादेर् (९।२४) मित्त्वार्थं **विरलोऽस्य पाठः** । नृणन्तं प्रयुङ्क्ते नरयति ॥७८८॥

५४७. **श्रा पाके** । अदादेः (२।४६) **श्रै पाके** (१।६५३) इत्यस्य वेह मित्त्वार्थः पाठः[3] । श्राति श्रायति वा कश्चित् तं प्रयुङ्क्ते श्रपयति चरुं चैत्रेण; अन्यत्र श्रापयति घर्मः, खेदयतीत्यर्थः ॥७८९॥

५४८. **मारणतोषणनिशानेषु ज्ञा**[4] । निशानमुत्तेजनम् । निशामन इत्येके पेठुः । **ज्ञाः अवबोधन** (९।३८) इत्ययं क्र्यादिर्मारणादौ मित् —संज्ञपयति पशुम्, विष्णु विज्ञपयाम्यहम्, प्रज्ञपयति शास्त्रम्[5] । अन्यत्र—राजानं विज्ञापयति, अवबोधने ज्ञापयति, प्राप्ति प्रज्ञापयतीति ज्ञानार्थे । तोषणे—**एवमाज्ञप्तोऽस्मि सामाजिकै**.[6] । कथम् **प्रध्वंसाभावो ज्ञीप्स्यते**,[7] **प्रच्छ ज्ञीप्सायाम्** (६।११७) इति ज्ञापकाद् ह्रस्वोऽत्र **आप्ज्ञप्यृधामीत्** (७।४।५५) इति कृतह्रस्वस्येत्त्वात्, **चुरादौ ज्ञपिर्** (१०।७५) अप्यहेतुमण्णिचर्थः ज्ञीप्सत्यर्थ इत्येके । चुरादौ **ज्ञा नियोजने** (१०।१७८) अस्मात्—**आज्ञापय ज्ञातविशेषपुंसाम्**[7] इति ।

५४९ **कम्पने चलिः** । ज्वलादौ (१।५६८) पठितस्यापि अस्येह

---

१. दरद् म्लेच्छजातिरिति अमरटीकायां (पृष्ठ ३४६) स्वामी । तस्य निवासस्थानं दर्दीस्तान' नाम्नासप्रति प्रसिद्धम् ।

२. स्मृतमिदं धातुवृत्तौ (पृष्ठ १३८)

३. स्मृतमिदम् पुरुकारे (पृष्ठ २१)

४. 'ज्ञः' पाठा० । एतद्विषये पुरुषकारोऽत्र द्रष्टव्यः (पृष्ठ १८) ।

५. 'प्रज्ञपयति शरम्' इत्युदाहरण धातुवृत्तौ (पृष्ठ १३९) प्रदर्शितम् ।

६. अनुपलब्धमूलमिदम् । कस्यचिन्नाटकस्य सूत्रधारवाक्यमेतत् स्यात् । तुलनीयम्—'आज्ञापितोऽस्मि परिषदा' इति मुद्राराक्षसे, 'अभिहितोऽस्मि विद्वत्परिषदा' इति मालविकाग्निमित्रे ।

७. अनुपलब्धमूलमिदं वाक्यम् ।

मित्त्वार्थः पाठः । इकार उच्चारणार्थः[1] । प्रचलयति लताम्[2] । अन्यत्र —चालयति शीलम्, हरतीत्यर्थः[3] ॥

५५०. **छदिर् ऊर्जने** । **छद संवरणे** (१०।२६) इत्ययं चुरादिरूर्जने[4] प्राणने मित् छदयत्यग्निः, स्वार्थे णिच्, छादयन्तं प्रयुङ्क्त इति हेतौ वा । अन्यत्र—छादयति गृहम् ।

५५१. **जिह्वोन्मन्थनयो[5] र्लडिः** । **लड विलासे** (१।२५०) इत्ययं भ्वादिर्जिह्वाविषयायां क्रियायामुन्मथने[6] च मित् । लडयति जिह्वाम्, [7]ललयति दधि । अन्यत्र-लाडयति चित्रम्[8],लालयति बालम् । लालितः लालितकः लालिका लाला । **जिह्वोन्मथन** इति **गुप्तः जिह्वाशतान्युल्ललयत्यभीक्ष्णम्**[9] । चुरादौ **लड उपसेवायाम्** (१०।७)—लाडयति ॥

५५२. **मदी हर्षग्लेपनयोः** । **मदी हर्षे** (४।१०१) इत्ययं दिवादिरत्रार्थे मित् । मदयति सुरा चैत्रम्, विमदयति शत्रुम् । अन्यत्रानेकार्थत्वादुन्मादयति पुरुषम्, प्रमादयति ॥

**दलि-वलि-स्खलि-रणि-ध्वनि-क्षपि-त्रपयश्च इति श्रीभोजसूत्रम्**[10] (सर० कण्ठा० १।१।१९२)दलयति दध्वान ध्वनयन्नाशाः[11] ॥

---

१. इक्श्तिपौ धातुनिर्देशे' (३।२।१०८ वा०) इति वचनात् धातुनिर्देशार्थ इक्प्रत्ययः, नोच्चारणार्थ इकारः ।

२. कथं 'चालयेयुः शैलेन्द्रान्' इति वाल्मीकिः (रामा० १।१७ २७) । ह्रस्वाभावश्छान्दस इति गोविन्दराजः । 'कम्पने चलिरिति मित्त्वेऽपि सर्वेषामितां वैकल्पिकत्वात् चालयेयुः' इति शिरोमणिटीकाकारः ।

३. उद्धृतमिद सिद्धान्तकौमुद्याम् (भाग ३, पृष्ठ १८७) । धातुवृत्तौ तु 'शीलं चालयति अन्यथा करोतीत्यर्थ इति स्वामी' इत्येवमुद्धृतम् (पृष्ठ १३९) ।

४. स्मृतमिदं धातुवृत्तौ (पृष्ठ १३९) ।

५. ०न्मथनयो० पाठः पुरुषकार उद्धृतः (पृष्ठ ७२)।

६. ०मुन्माथे० पाठः पुरुषकार उद्धृतः (पृठ ७२) ।

७. डलयोरेकत्वस्मरणात् ।

८. "जिह्वोन्म····· लाडयति मित्रम्" उदधृतमिदं पुरुषकारे (पृष्ठ ७२) अत्र पुरुषकारोद्धृतः 'मित्रम्' पाठ एव युक्तः ।

९. उद्धृतमिदं पुरुषकारे (पृष्ठ ७२) । मूलं मृग्यम् ।

१०. 'श्रीभाजोऽसूत्रयत्' पाठा० ।     ११. मूलं मृग्यम् ।

**५५३. घटादयो मितः** । उदाहृतमेतत् ॥

**५५४. जनी-जृष्-क्नसु-रञ्जोऽमन्ताश्च** । **जनी प्रादुर्भावे** (४।४०) **जृष् वयोहानौ** (४।२०) **क्नसु ह्वरणदीप्त्योः** (४।५) **रञ्ज रागे** (१।७२६) इत्येते ऽमन्ताश्च मितसंज्ञाः । जानयति । **जन जनने** (३।२४) इति जुहोत्यादिरपि गृह्यते, अन्यथार्थरूपयोरभेदात् विकल्पेनामित्त्वं ब्रूयात् । वैदिको वाऽसौ जनयति । **जृष् वयोहानौ** (४।२०) दिवादिः —जरयति । जृणातेः (९।२३) तु जारयति[1] पतिम्, जारयत्यभ्रकम् । **रञ्जेर्णौ मृगरमणे नलोपः** (६।४।२४ वा०)—रजयति मृगान् । रमयति, भ्रमयति, संक्रमयति, विश्रमयति ॥

**५५५. ज्वल-ह्वल-ह्मल-चल[2]-नमामनुपसर्गाद्वा** । एषां नित्यं मित्त्वं प्राप्तम्, अनुपसर्गाणां विकल्प्यते । ज्वालयति, ज्वलयति । ह्वालयति, ह्वलयति । ह्मालयति, ह्मलयति । चालयति, चलयति । नामयति, नमयति । सोपसर्गाणां तु नित्यम्—प्रज्वलयति, विह्वलयति, प्रह्मलयति, प्रचलयति, प्रणमयति[3] ॥

**५५६. ग्ला-स्ना-वनु-वमाञ्च[4]** । आद्ययोरप्राप्तौ विकल्पः, अन्त्ययोः प्राप्तौ । एषामनुपसर्गात् मित्त्वं वा । ग्लपयति, ग्लापयति । स्नपयति, स्नापयति । वनयति, वानयति । वमयति, वामयति । अनुपसर्गादित्येव—प्रग्लापयति, प्रस्नापयति, उपवनयति, उद्वमयति ॥

**५५७. न कम्यमिचमाम्** । एषाममन्तत्वात् प्राप्ता मित्संज्ञा निषिध्यते । कामयते । आमयति । आचामयति[5] ॥

**५५८. शमोऽदर्शने** । **शमु उपशमे** (४।९४) इत्यस्य दर्शनादन्य-

---

१. पुरुषकारे ४२ तमे पृष्ठे क्षीरस्वामिनाम्नोद्धृते पाठे भेद उपलभ्यते ।

२. स्मृतं प्रक्रियाकौमुद्याम् (भाग २, पृष्ठ ३२४) ।

३. 'विनमयति' पाठा० ।

४ काशकृत्स्नधातुपाठे 'ग्लास्नावनुवमश्वनकम्यमिचमः' इत्येव सूत्रपाठः । तत्र 'श्वन' इति स्वतन्त्रो धातुः (अयं धातुः काशकृत्स्नधातुपाठ इहैव पठ्यते) । कम अम चम एषामपि विकल्पेन मित्संज्ञा विधीयते । व्याख्यातं चैतत् टीकाकारेण —कमयति कामयति, अमयति आमयति, चमयति चामयति (पृ० १०४) । पाणिनीयास्तु कम्यमिचमां मित्त्वं प्रतिषेधयन्ति ।

आर्थे[1] मित्संज्ञा[2]। अमन्तत्वात् सिद्धौ[3] नियमार्थं वचः। शमयति रोगम्, निशमयति श्लोकम्। दर्शने तु—निशामयति रूपम्। **निःशर्करमिदं तीर्थं भरद्वाज निशामय**[4] पश्येत्यर्थः ॥

**५५९. यमोऽपरिवेषणे। यम उपरमे** (१।७११) इत्यस्य परिवेषणादन्यत्रैवार्थे मित्संज्ञा[5]। यमयति, नियमयति। परिवेषणे तु यामयति श्राद्धेऽन्नम्[6] आयामयति चन्द्रम्[7]। अत्रैव **स्वनोऽवतंसन** इति **दुर्गः**—स्वनयति वस्त्रम् ॥

**५६०. स्खदिर् अपपरिभ्याञ्च**[8]। आभ्यामेवोपसर्गाभ्यां स्खदिः मित्[9]। अपस्खदयति परिस्खदयति। **अवेति—श्रीभोजः** अवस्खदयति। अन्योपसर्गपूर्वान्नास्ति—प्रस्खादयति।

**५६१. फण गतौ**। फणति,फणयति। **फणाञ्च सप्तानाम्** (६।४।१२५) इत्येत्वाभ्यासलोपौ[10] वा—पफणु, फेणुः। गतेरन्यत्र—फाणयति घटं, निःस्नेहयतीत्यर्थः[11]। **क्षुब्ध-स्वान्त, ध्वान्त** (७।१।१८)

---

१. स्मृतमिदं पुरुषकारे (पृष्ठ १०१) धातुवृत्तौ (पृष्ठ १४०) च। दूषित च सि० कौ० (भाग ३, पृष्ठ १९३)।

२. धातुवृत्तौ 'न' पद 'स्खदिरवपरिभ्या च' (१।५६०) सूत्र यावदनुवर्त्यते। तत्र स्वामिमत महता प्रपञ्चेन दूषितः। ३ 'प्राप्तौ' पाठा०।

४. रामायण पश्चिमोत्तर शाखा (लाहौर सस्क०) बालकाण्ड २।५॥ तत्र 'भारद्वाज' इत्यपि पाठान्तरम्।

५. द्र०'तत्र च क्षीरस्वाम्यादिपक्षे……'इत्यादि पुरुषकारे(पृष्ठ १०१)। दूशित च स्वामिमतं धातुवृत्तौ (पृष्ठ १४१), सिद्धान्तकौमुद्यां (भाग ३ पृष्ठ १९४) च। काशकृत्स्नधातुपाठस्य कन्नडटीकायामन्यथा व्याख्यायते (पृष्ठ १०४)। ६. 'अन्न' क्वचिन्न।

७. 'यमोऽपरि… चन्द्रम्' इत्येतावदुद्धृत पुरुषकारे (पृ० १००)।

८. 'स्खदिर् अवत्यां च' इत्येवं काशकृत्स्नधातुपाठसूत्रम्। 'अवत्या रक्षायां, चात् परिवेषणे च मित्' इत्येवं तट्टीकायां व्याख्यातम्(द्र०पृष्ठ१०४)।

९ इय व्याख्या धातुवृत्तौ (पृष्ठ १४१) दूषिता।

१०. 'वक्तव्यौ' इत्यधिकः क्वचित्।

११. 'अन्यत्र फाणयति, सक्तून् स्नेहयतीत्यर्थ. इति स्वामिसम्मताकारो' इति सायणः (धा०वृ०पृष्ठ १४१)। क्षीरतरङ्गिण्यां नैतादृशः पाठ उपलभ्यते।

इत्यनायासे फाण्टं साधु। **फणेः पूर्वे[1] घटादय इत्येके[2]** ॥७६०॥

५६२. **उदात्ता उदात्तेतः** ॥

---

**[सेड् उभयपदी]**

५६३. **राजृ दीप्तौ, उदात्तः स्वरितेत्**। राजते, राजति, राजिता। रराजुः रेजुः। **आनक शीङ्भियः** (उ० ३।८२) इति पृथङ्-निर्देशाद्[3] राजानक.[4]। **कनिन्** (उ० १।१५६) राजा। **राजेरन्यः** (उ० ३। १००) – राजन्यः ॥७६१॥

---

**[सेट आत्मनेपदिन.]**

५६४. **टुभ्राजृ टुभ्राशृ टुभ्लाशृ दीप्तौ, उदात्ता अनुदात्तेतः**। भ्राजते, बभ्राजे, भ्रेजे। टुरुभयम्येत्येके[5]। **टिवतोऽथुच्** (३।३।८९) भ्राजथुः। **भ्राजिभ्राश्योर्ऋदित्त्वं नेच्छन्ति[6]** पक्षे ह्रस्वस्येष्टत्वम्— अबभ्राजत् अबिभ्रजत्। **नप्तृनेष्टृ** (उ० २।९५) इति—भ्राता(?)।

---

१. 'पूर्व' पाठा०।

२. 'काशकृत्स्नधातुपाठे 'फण गतौ' इत्यनन्तरम् 'वृत् घटाद्यो मानुबन्धा एकत्वे' इति सूत्र पठ्यते (पृष्ठ १०४)। तत्र 'एकत्वे' इत्यस्यार्थो न परिज्ञायते। कन्नडटीकायामपि सम्यङ् न व्याख्यायते। 'एकत्वे' इत्यस्य कदाचिद् 'एकस्मिण्णौ' इत्यभिप्रायः स्यात्। तथा सति द्वितीये णिचि कि 'घाटयति' इति रूपमिष्टम्?

३. प्रत्ययाः पृथगेव निर्दिश्यन्तेऽतोऽगतिकोऽय निर्देश। कदाचिदत्र 'प्राङ्निर्देशाद्' इति युक्तः पाठः स्यात्। तुलना कार्या—'प्राक्प्रत्ययनिर्देशात्……' दश० उणा० वृत्ति पृष्ठ २४०,४२४॥ क्षीरतरङ्गिण्यामुतरत्र (१। ६९४) 'प्राक्प्रत्ययात् तरण्डः' इति पाठो दृश्यते।

४. एतन्नामका बहवो विद्वांसा कश्मीरेष्वभवन्।

५. काशकृत्स्नचन्द्रधातुपाठयोराद्ये धातौ 'टु' नैव पठ्यते। न्यासकारमैत्रेयमायणादयः पठन्ति।

६. के नेच्छन्तीति न प्रतिपादितम्। ह्रस्वविकल्पविधायके सूत्रे भ्राशेः पाठादर्शनादिष्टिरेवैषा विज्ञेया।

**वा भ्राशभ्लाश** (३।१।७०) इति श्यन् भ्राशते भ्राश्यते, भ्लाशते भ्लाश्यते। भ्राशथुः, भ्लाशथुः ॥७९२-७९४॥

---

**[सेटः परस्मैपदिनः]**

**५६५. स्यमु स्वन स्तन ध्वन शब्दे।** इतः क्षलान्ता (१।५८८) अष्टाविंशतिः सेटः परस्मैपदिनश्च। स्यमति। स्येमुः सस्यमुः। उणादौ (द्र० ३।४६) स्यमीका क्रिमिः। स्वनति। स्वेनुः सस्वनुः। **वेश्च स्वनो भोजने** (८।३।६९) षत्वम्—विष्वणति, अवष्वणति। स्वनयति। **स्वनान्तः फणादिः**। स्तनति, स्तनयति। ध्वनति, ध्वनयति। **ष्टन इति चन्द्रः**[1]—तिष्टनयिषति ॥७९५-७९८॥

**५६६. षम ष्टम अवैक्लव्ये।** समति। समः। विषमः। समयति। स्तमति, स्तमयति ॥७९९,८००॥

**५६७. वृत्।** घटादय एतदन्ता इति **सभ्याः**[2] ॥

**५६८. ज्वल दीप्तौ।** ज्वलति। ज्वलिता। **ज्वलितिकसन्तेभ्यो णः** (३।१।१४०) वा—ज्वालः, ज्वाला, ज्वलः ॥८०१॥

**५६९. चल कम्पने।** चलति। चलितः। चलनः। चालः, चलः, **चरचलवद**(तु० ६।१।१२ वा०)इति चलाचलः। **यङ्लुक्यपि विकल्पः**[3]—चाचलः चञ्चलः[4]। **चलिः कम्पने**[5] (१।५४९) णौ मित्—चलयति। चुरादौ **चल भृतौ** (१०।६२) चालयति ॥८०२॥

---

१. मुद्रिते चान्द्रधातुपाठे (१।६६९) 'स्यमु स्वन ध्वन शब्दे' इत्येव पाठ उपलभ्यते। क्षीरस्वामिवचनादत्र स्वनः पर. 'ष्टन' धातुः प्रणष्ट इति प्रतीयते। लिबिशेनात्र चान्द्रधातुपाठस्य १।१५३ सख्या निर्दिष्टा, सा प्रामादिका।

२. स्मृत धातुवृत्तौ (पृष्ठ १४३)।

३. अभ्यासस्य आगागमस्य इति शेषः।

४. आगागमाभावे 'नुक्' केन भवति इति न स्पष्टीकृत क्षीरस्वामिना। स्वीयामरकोशव्याख्यानेऽपि 'चञ्चला' पद न साधु व्याकृतम्।

५. अर्थतो अनुवादः।

*

**५७०. जल घात्ये**[1] । घात्यं जडत्वम्, अतैक्ष्ण्यमित्यर्थः[2] । जलति । जालम्, जलम् । व्यवस्थितविकल्पत्वाद् भिन्नेऽर्थे प्रत्ययौ । चुरादौ **जल अपवारणे** (१।२०) जालयति । लडयोरेकत्वाज् जडः ॥८०३॥

**५७१. टल ट्वल वैप्लव्ये**[3] । विप्लव एव वैप्लव्यम् । टलति ॥ ८०४,८०५॥

**५७२. स्थल स्थाने । ष्ठल** इति **चन्द्रः**[4] (३।५६५) स्थलति । स्थालम् । स्थाली । स्थलम् । स्थली ॥८०६॥

**५७३. हल विलेखने** । विलेखनं कर्षणम् । हलति । हाला सुरा । हालम्, हलम् । **इन्** (दश० उ० १।४६) हलिः, हडिः ॥८०७॥

**५७४. णल गन्धे** । गन्धोऽर्दनम् । प्रणलति । नालम् । नाला पद्मादीनां वृन्तम् । नाली, नाडी । प्रणालः, प्रणाली, प्रणाडिका । नलः, नडः ॥८०८॥

**५७५. पल गतौ** । पालः । पलं मांसम् । पललं तिलकल्कः । गाः पालयति—गोपालः । चुरादौ **पल रक्षणे**(१०।६३)—पालयति ।८०९

**५७६. बल प्राणने** । प्राणनं जीवनम् । बलति । बालः, बाला अजादौ (३।१।१३४) । बलः, बलम् । चुरादौ (१०।७८) मित्—बलयति ।८१०॥

**५७७. धान्यावरोधने च** । धान्यमवरुध्यते यत्रेति कुसूलेऽर्थे—बलटः । **वल संवरणे**[5] (१।३२९) त्वात्मनेपदी—वलते ॥

**५७८. पुल महत्त्वे** । पोलति । पोलः । विपुलम् । पुलः । पुलो-

---

१. 'जल धान्ये' इति काशकृत्स्नीये (पृष्ठ १०६) चान्द्रे (१।५६३) च । पाठः । आर्द्रीकरणं च तदर्थः इति कन्नडटीकातोऽवगम्यते ।

२. 'घातनं तैक्ष्ण्यम्' इति क्षीरस्वामी इति धातुवृत्तौ (पृष्ठ १४४) पाठः ।

३. मैत्रेयसायणादयः 'वैक्लव्ये' इत्याहुः । तथैव काशकृत्स्नचन्द्रावपि ।

४. काशत्स्नधातु धातुपाठेऽपि 'ष्ठल' इत्येव पठ्यते (पृष्ठ १०६) ।

५. 'वल संवरण दन्त्यौष्ठ्यादिः' । तस्यात्र ओष्ठ्यादौ निर्देशो भ्रान्त्या बोध्यः ।

ऽस्यास्तीति[1] [पुली[2]। **तलिपुलिभ्यां च** (उ० १।५३)] पुलिनम्। **कुणिपुलोः किन्दच्** (तु० उ० २।८५) पुलिन्दः। पिनाकादौ(द्र० उ० ४।१५) पुलाकस्तुच्छधान्यम्। इक्[3] पुलिः। पुलकः। तुदादौ[4] पुलति। चुरादौ (१०५६) पोलयति ॥८११॥

**५७९. कुल संस्त्याने बन्धुषु च**। संस्त्यानं संघातः। कोलं बदरम्। कक्कोलः, कङ्कोलम्। कुलम्। नकुलः। **तमिविडि** (दश० उ० ८।१११) इति कालन्—कुलालः ॥८१२॥

**५८०. शल[5] हुल पत्लृ गतौ**। शलति। शाला। शलः। शललं श्वाविल्लोम। शल्यकः। शल्यम्। शल्मलिः। शलभः। शल्कः। शलाका। शालूकम् उत्पलादिकन्दः। **शल चलनसंवरणयोः** (१।३२८) इत्यस्यैव ज्वलादिकार्यार्थः पाठः। होलति। पतति। लृदित्वात् लुङि अङ्, **पतः पुम्**(७।४।१९)अपप्तत्। उत्पातः। निपातः। पातो राहुः। पतः। **नेर्गदनद** (८।४।१७) इति णत्वम्—प्रणिपतति। **सनीवन्तर्धभ्रस्ज** (७।२।४९) इति वेट् **सनि मीमाघु** (७।४।५४) इतीस्-अभ्यासलोपौ(द्र० ७।४।५८)—पित्सति, पिपतिषति। पतितः—**यस्य विभाषा** (७।८।१५) इतीण्निषेधो नास्ति **द्वितीयाश्रितातीतपतित** (२।१।२४) इति लिङ्गात्। **अलङ्कृञ्** (३।२।१३६) इतीष्णुच्—उत्पतिष्णुः। **जुचङ्क्रम्य** (३।२।१५०) इति **युच्**—पतनः।

---

१. इतोऽग्रे कश्चित् पाठस्त्रुटित. प्रतिभाति। नहि 'पुलोऽस्यास्तीत्यर्थे' 'पुलिनम्' सभवति, 'पुली' इति प्राप्नोति। अस्माभिस्त्रुटितपाठपूरणाय प्रयतितम्।

२. केचन बलादौ (५।२।१३६)पुलशब्दं पठन्ति। द्र० गणरत्न० २६३।

३. पूर्वसम्पादकेन लिबिशेन अत्रोणादे· (४।१४२) संख्या तुलनाय निर्दिष्टा। न चोणादौ 'इक्' प्रत्ययः श्रूयते। अयं तु 'इक् कृष्यादिभ्यः' इति वार्त्तिके (३।३।१०८) पठ्यते। वार्त्तिकमिदमबुद्ध्वा लिबिशोऽसत्कल्पनां कृतवान्।

४. मतमिदं पुरुषकारे (पृष्ठ १०४) उद्धृतम्। परन्तु क्षीरतरङ्गिण्यां नायं तुदादावुपलभ्यते। 'पुर अग्रगमने' इति तु सर्वैस्तुदादिषु पठ्यते।

५. शल श्वल आशुगमने इति ज्वलादौ क्षीरस्वामी' इति पुरुषकारे (पृ० १०४) उद्धृयते। अत्र न तथा पाठ उपलभ्यते।

**लषपतपद** (३।२।१५४) इत्युकञ् प्रपातुकः । **विशिपतिपदिस्कन्दाम्** (३।४।५६) इति णमुल् गेहानुप्रपातमास्ते । **दाम्नी** (३।२।१८२) इति ष्ट्रन्- पत्रम् । **पतिचण्डिभ्यामालञ्** (उ० १।११६) पातालम् । **पतेरङ्गच् पक्षिणि** (उ० १।११९) पतङ्गः । **पतेरश्च लः** (उ० ३। ७४)—पत्सलः । **अमिनक्षि** (उ० ३।१०५) इत्यत्रन्—पतत्रम् । **वीपतिभ्यां ततन्** (उ० ३।१५०) पत्तनम् । **पतस्थ च** (उ० ४।१२) इतीनिः—पन्थाः । **शलिपतिपदिभ्यो नित्** (तु० उ० श्वेत० ४।१५) पताका । **स्पृहिगृहि**(३।२।१५८)इति सूत्रात् पतयालुः॥८१३-८१५॥

**५८१. हुल हिंसासंवरणयोश्च** । होलः, हुलः, हुलिः, हुडिः उणादौ हुलु[1]र्देशः[2] ॥

**५८२. क्वथे निष्पाके**[3] । क्वथति । अक्वथीत् । क्वाथः, क्वथः । अस्त्यर्थे (द्र० ५।२।१२५) क्वाथिका यवागूः ॥८१६॥

**५८३. पथे गतौ**[4] । पथति । अपथीत् । पाथः, पथः ॥८१७॥

**५८४. मथे विलोडने**[5] । मथति । अमथीत् । माथः, मथः । **मन्दिवाशि** (उ० १।३८) इत्युरच्—मथुरा । **मन्थ मन्थे**[6] मन्थति । क्र्यादौ (९।४५) मथ्नाति ॥८१८॥

**५८५. टुवम उद्गिरणे** । उद्गिरणं भुक्तस्योर्ध्वगतिः । वमति । वामः, वमः । वमथुः[7] । वमितः । **उदित्येके**[8] - वान्त्वा वमित्वा । **अघृणः खलु वान्ताशी**[9] । **न शसदद** (६।४।१२६) इति ववमुः । **ग्ला-**

---

१. हुडू.' पाठा० ।

२. अत्र'मेष' इति पाठो युक्तः प्रतिभाति । अमरटीकायां (२।९।७६) मेषपर्यायव्याख्यानान्ते 'हुडु' नामापि पठति क्षीरस्वामी । तस्मादत्र 'हुडुर्मेषः' इति युक्तः पाठः । ३. क्वथे विपाके' इति काशकृत्स्नधातुपाठे (पृष्ठ १०७) ।

४. काशकृत्स्नः 'पल शल पतृ पथा गतौ च' इति पठति (पृष्ठ १०७) ।

५. 'गथे विलोडने - गथति .....गथकः —...' इत्यादि काशकृत्स्नीय-धातुपाठे तट्टीकायां च पाठः (पृष्ठ १०७) ।

६. नैतादृशं क्वचिद् भ्वादौ पठ्यते । मन्थ हिंसासंक्लेशनयोः पूर्वत्र (१।३७) पठ्यते । ७. 'वमथुः' क्वचिन्नास्ति ।

८. तुलनीयम् – 'डुवम उद्गिरणे' काशकृत्स्नपाठः (पृष्ठ १०८) ।

९. अनुपलब्धमूलम् ।

**स्नावनुवमाञ्च** (१।५५६) इति वा मित्त्वम्  वामयति, वमयति। **जिदृक्षि** (३।२।१५७) इतीनिः - वामि। **नोदात्तोपदेशस्य** (७।३।३४) इति निषेधे प्राप्ते **वमिकमिचमीनाम्** (७।२।३४) इति वृद्धिः, ण्वुल्- वामकः। वामयतेर्ल्युट्—योग-वामनम्। न वमतीत्यवमः। घञ्-वामः। अस्त्यर्थे (द्र० ५।२।१००) वामनः। वामी अश्वा॥ ८१६॥

**५८६. भ्रमु चलने। वा भ्राशभ्लाश** (३।१।७०) इति वा श्यन्—भ्रमति भ्राम्यति। **वा जॄभ्रमुत्रसाम्** (६।४।१२४) इत्येत्वाभ्यासलोपौ — भ्रेमुः बभ्रमुः। भ्रान्त्वा, भ्रमित्वा। भ्रान्तः। णे - भ्रामः। **भ्रम** इति **दुर्गः। भ्रमेश्च उः**[1]- अभ्रमुः। **इन्** (दश० उ० १।४६) भ्रमिः। **भ्रमेः सम्प्रसारणं किच्च** (तु० उ० ४।१२१) इति भूमिर्वायुः। **अर्ति-कमिभ्रमि** (उ० ३।१२२) इत्यरन् - भ्रमरः। दिवादौ (४।९८) शमाद्यर्थः पाठः—भ्राम्यति॥८२०॥

**५८७. क्षर सञ्चलने।** क्षरति। क्षरिष्यति। क्षारः। क्षारी **णेऽण्यण्कृतं क्वचिद्**[2] इति ङीप्। क्षरः। अक्षरम्॥८२१॥

**५८८. क्षल सञ्चये च। सञ्चलने च।** क्षलति। चुरादौ क्षल शौचे (तु० १०।५२) क्षालयति॥८२२॥

**५८९. उदात्ता उदात्तेतः॥**

**५९०. षह मर्षणे**[3]। मर्षणं क्षमा। अयम् **५९१. उदात्तोऽनुदात्तेत्।** सेडात्मनेपदी च। सहते। सिसहिषते[4]। **स्तन्भुसिवुसहां चङि** (तु० ८।३।११६) इति षत्वम्—पर्यसीषहत्, **सः स्विदिस्वदिसहीनां च** (८।३।६२) इति सत्वम्- सिसाहयिषति। **परिनिविभ्यः** (८।३।७०) इति षत्वम्— विषहते। **सिवादीनां वा ऽड्व्यवायेऽपि** (८।३।

१. नैतादृश क्वचित्सूत्रमुपलब्धम्। अत्र नञ्पूर्वात् भ्रमेर्बाहुलकाद् उ. प्रत्ययो द्रष्टव्यः।

२. तुलना कार्या—ताच्छीलिके णेऽण्यण्कृतं भवति। परिभाषावृत्ति सीरदेव, पृष्ठ १३३।

३. निरुक्तसमुच्चयकृता वररुचिना 'इन्द्राग्नी अवसा' (ऋ७।९४।७) इति चतुःषष्टितमे मन्त्रव्याख्याने 'षह मर्षणे, अभिभवे छन्दसि' इत्युक्तम् (नि० स० पृष्ठ ६१)।

४ 'सिषहिषते' इति शुद्धः पाठः।

७१) इति षत्वं वा पर्यसहत पर्यषहत **विसहनेकृत्येति** साक्षादादि[1] पाठान्नास्ति[2]। **तीषुसह** (तु० ७।२।८४) इति वेट्—सहिता, सोढा। विसोढा **सोढः** (८।२।११५) इति षत्वाभावः, **सहिवहोरोत्** (६।३।११२) सोढः। वर्णग्रहणात् साहेरपि सोढा, णिलोपे **पूर्वत्रासिद्धे न स्थानिवद्**[3] (१।१।५७ वा०) इति ढत्वादि। **दाश्वान् साह्वान् मीढ्वांश्च** (६।१।१२) इति क्वसौ साह्वान्। **शकिसहोश्च** (३।१।९९) इति यत्—सह्यम्। ल्युः (द्र० ३।१।१३४) सहनः। **सहेः पृतनर्ताभ्यां च** (८।३।१०९) इति ण्विः[4]—पृतनाषाट् तुराषाट्, **सहेः साडः सः** (८।३।५६) इति षत्वम्, षाड्रूपत्वाभावे नास्ति—**पुरासाहं पुरोधाय** (कुमारसम्भव २।१) इति, **नहिवृतिवृषि** (६।१।११६) इति दीर्घः। **अलङ्कृञ्** (३।२।१३६) इतीष्णुच्—सहिष्णुः। **अनुपसर्गाल्लिम्पविन्द** (३।१।१३८) इति ण्यन्तात् शः—साहयः। **संज्ञायां भृतृ** (३।२।४६) इति खच्—सर्वसहः। **असुन्** (द० उ० ९।४९) सहस्। **शकधृषज्ञा** (३।४।६५) इति तुमुन्—सहते भोक्तुम्। **सहेः षष् क्विप् च**[5]—षट्। चुरादौ (१०।२०४) **आधृषाद् वा** (१०।२०१) वा णिच्—सहति साहयति ॥८२३॥

५९२. **रम क्रीडायाम्**। ५९३. **अनुदात्तोऽनुदात्तेत्**। अनिडात्मनेपदी च। रमते। **व्याङ्परिभ्यो रमः, उपाच्च** (१।३।८३,८४) परस्मैपदम्—विरमति, उपरमति। अन्तर्भावितण्यर्थोऽत्र सकर्मकः।

---

१. काशिकाया साक्षादादिगणे (१।४।७४) 'विहसने' इति पठ्यते। गणरत्नमहोदधौ तु 'विसहने, विहसने' इत्युभयं पठ्यते (पृष्ठ ७७)।

२. षत्वमिति शेषः।

३. जर्मनसंस्करणे 'पूर्वत्रासिद्धे न स्थानिवद्' इत्यनन्तरमितिपदनिर्देशे सत्यपि वार्त्तिकमिमबुद्ध्वा पूर्वसम्पादकेन 'पूर्वत्रासिद्धे न (८।२।१) स्थानिवद्' इत्येवं पाठो विकृतः।

४. 'सहेः पृतनर्ताभ्यां च' (८।३।१०९) इति सूत्रं 'पृतनाषाहम्, ऋताषाहम्' इत्यत्र षत्वविधायकम्, न ण्विप्रत्ययविधायकम्। ण्विप्रत्ययस्तु 'छन्दसि सहः' (३।२।६३) इत्यनेन भवति। लिबिशमहोदयेन इयमशुद्धिर्न बुद्धा।

५. द्र० 'सहेः षष् च' (क्विबनुवर्तते) सर० कण्ठा० २।१।३०९॥

**विभाषाऽकर्मकात्** (१।३।८५) यावद् भुक्तमुपरमते, उपरमति । **यमरमनमातां सक् च** (७।२७३) व्यरंसीत् । रन्ता । रमणः । रमणी । रमः । रमा । रामः । रामा । रम्यः । **स्तम्बकर्णयो रमिजपोः** (३।२।१३) इत्यच् स्तम्बेरमः । **निकुषि** (उ० २।२) इति क्थन्—रथः । **रमस्त च** (तु० उ० ३।१४) इति रत्नम् । **रमेर्देशे हश्च**[1] रहः । रण्डा (द्र० उ० १।२१४)। **सौ रमेः क्तः पूर्वस्य च दीर्घः**(तु० उ० ५।२४) सूरतो बुधः । **चकिरम्योरुच्चोपधायाः** (उ० २।१४) रुग्रम् ॥८२४॥

**५९४. षद्लृ विशरणगत्यवसादनेषु**[2] । विशरणम् शातनम्, अवसादोऽनुत्साहः । इतो रुहान्ताः (१।५९८) पञ्चानिटः परस्मैपदिनश्च । **पाघ्राध्मा**(७।३।७८)इति सदेः सीदः—सीदति । सिषत्सति । असदत् । **सदेरप्रतेः** (तु० ८।३।६६) इति **षत्वम्**—परिषीदति, प्रतिषीदति । **सदिस्वञ्ज्योः परस्य लिटि** (८।३।११८) निषसाद । **लुपसदचर** (३।२।१२१) इति भावगर्हायां यङ्—सासद्यते । **सत्सूद्विष** (३।२।६१) इति क्विप्, **पूर्वपदाद्** (८।३।१०६) इति षत्वम्—शुचिषत्, परिषत् उपनिषत्, निषण्णः । सादी निषादी । **वसिवपि** (उ० ४।१२५) इतीञ् सादिः । णः—निषादः । घञ् —विषादः । सदोऽचि । **नौ सदेः** (उ० २।१२२)इति ष्वरच्—निषद्वरः पङ्कः । **असुन्** (द० उ० ६।४९) सदः सभाः । **गुधृवीपचिवचि** (उ० ४।१६७) इति त्रन्—सत्त्रम् । **संज्ञायां समज** (३।३।९९) इति क्यप्—निषद्या विपणिः । **सादकारयोः कृत्रिमे** (६।३।१२२ वा०) दीर्घः- प्रासादः । **दाधेट्सि** (३।२।१५९) इति रुः—सद्रुः ॥ ८२५॥

**५९५. शद्लृ शातने** । शातनं तनूकरणम् । **पाघ्राध्मा** (७।३।७८) इति शदेः शीयः । **शदेः शित** (१।३।६०) इति तङानौ—शीयते । शत्स्यति । अशदत् । **शदेरगतौ तः** (६।३।४२) शातयति, शातनः, शातनी गौरादिः (गण० ४।१।४१) । शादस्तृणपङ्कौ । शदः,

---

१. अत्र कश्चित् पाठस्त्रुटितः प्रतिभाति । "रमेश्च (उ० ४।२१४) इति रंहः । देशे हश्च (श्वे० उ० ४।२२०) रहः" इत्येव पाठेनात्र भाव्यम् ।

२. स्मृत पुरुषकारे (पृष्ठ ८३) ।

क्षत्रियापशदः, विशदः । **अदिशदि [भूशुभि]**[1]**भ्यः** (उ० ४।६५) क्रिन् —शद्रिः । **रुशातिभ्यां क्रुन्** —(उ० ४।१०३) शत्रुः । **शदेरू च्च**[2] इति रक्—शूद्रः । **दाधेट्सिशदसदो रुः** (३।२।१५९) । शद्रुः ॥८२६॥

**५९६. क्रुश आह्वाने रोदने च** । क्रोशति । क्रोष्टा । आक्रोष्टा । क्रोशः । क्रुशः । उत्क्रोशः । कुररः । **सितनिगमिमसि** (उ० १।७०) इति तुन्—क्रोष्टून्[3] ॥८२७॥

**५९७. बुध अवगमने** । अवगमनं ज्ञापनम्[4] । बोधति । अभौत्सीत्[5] **गतिबुद्धिप्रत्यवसानार्थ** (१।४।५२) इति कर्तुः कर्मसंज्ञा —**बोधयति** शिष्यं धर्मम् । बोद्धा । **इगुपध** (३।१।१३५) इति कः—बुधः । घञ्—बोधः । **मतिबुद्धि** (३।२।१८८) इति वर्तमाने क्तः राज्ञां बुद्धः। दिवादौ (४।६३) बुध्यते । हिक्कादौ (१।६१४) बोधते, बोधति, बोधिता ॥८२८॥

**५९८. रुह बीजजन्मनि** । बीजस्य जन्माङ्कुरोत्पत्तिः । रोहति । **रुहः पोऽन्यतरस्याम्** (७।३।४३) रोपयति, रोहयति । **घञर्थे क विधानाद्** (द्र० ३।३।५८ वा०) बीजरुहाकरोति[6] केशाश्छिन्नरूहाः । के (द्र० उ० १।११५) रुहो मृगः । प्ररुहः । प्ररोहः, आरोहः । रूढः । रूढिः । **रुहेर्वृद्धिश्च** (उ० १।४७) इति रौहिषं तृणम्, रौहिषो मृगश्च । **हृपिशिरुहि** (उ० ४।११९) इतीन्—रोहिर्मृगः । **हसृरुहियुषिभ्य इतिः** (उ० १।९७) रोहित् । **रुहेरश्च लो वा** (उ० ३।९४) —लोहितः, रोहितः, रोहिणी । **अन्यत्रापि च** (तु० उ० २।३९) इतीनच्—रोहिणः ॥८२९॥

---

१. कोष्ठान्तर्गतोऽयं पाठस्त्रुटित इति प्रतिभाति 'भ्य.' इति बहुवचनदर्शनात् । लिबिशमहोदयेन नैतत् परिज्ञातम् ।

२. 'शदेरूच्च' इति युक्त. पाठः स्यात् श्वेतवनवासी तु 'शदेरू च' (उ० २।१८) इत्येवं पठति । अन्यत्र 'शुचेर्दश्च' इति पाठः ।

३. सर्वनामस्थानेषु तृज्वद्भावविधानात् (अ० ७।१।९५) शसो रूपमुदाहृतम् ।

४. 'सज्ञापनम्' पाठा० ।

५. 'अभोत्सीत्' इति सार्वत्रिकोऽप्यपपाठः ।

६. साक्षात् प्रभृतिषु (गण० १।४।७४) बीजरुहा शब्दः पठ्यते, तेनात्र गतिसंज्ञा ।

**५९९. अनुदात्ता उदात्तेतः ॥**

६००. **कुच सम्पर्चन-कौटिल्य-प्रतिष्टम्भ-विलेखनेषु** । सम्पर्चनं मिश्रता, प्रतिष्टम्भो रोधनम्, विलेखनं कर्षणम् । संकोचयति । संकुचितः । के (द्र० ३।१।१३५) कुचः । घञ्—संकोच, उत्कोचः । **न क्वादेः** (७।२।५९) इति कुत्वं नास्ति ॥८३०॥

६०१. **कस गतौ** । कसति, उत्कसति । कासयति । विकसितः । कसः, कासः । **नीग् वञ्चुस्रंसुध्वंसुभ्रंशुकस** (तु० ७।४।८४) इति चनीकस्यते । **स्थेशभास**(३।२।१७५)इति वरच्--विकस्वरः । **णित्-कसिपद्यते**: (श्वे० उ० १।८३) ऊः - कासूः शक्तिः । **समि कस उकन्** (श्वे० उ० २।३२)—संकसुकोऽस्थिरः ॥८३१॥

६०२. **उदात्तावुदात्तेतौ** । एतौ सेट्कौ परस्मैपदिनौ च ॥

६०३. **वृत्** । ज्वलादयो वृत्ताः ॥

६०४. **हिक्क अव्यक्ते शब्दे**[1] । इतो गुहपर्यन्ताः (१।६३४) षट्त्रिशत्[2] सेट उभयतोभाषाश्च । हिक्कते, हिक्कति । हिक्का । हिक्कितम् ॥८३२॥

६०५. **अचि गतौ**[3] । अञ्चते, अञ्चति[4] । अञ्च्यते । अञ्चितः । **अन्चु गतौ** (द्र० १।११९) अञ्चति, अच्यते । अक्तः । **अचु इत्येके** — अचति[4] अचित्वा, अक्त्वा, अक्तः ॥८३३॥

६०६. **डुयाचृ याच्ञायाम्** । याचते, याचति । अययाचत् । याचितः । **यजयाच** (७।३।६६) इति कुत्वाभावः—याच्यम् । **ड्वितः क्त्रिः** (३।३।८८) याचित्रिमम् । ट्विदिति दुर्गः[5]—याचथुः (द्र० ३।३।८९) । **यजयाचयत** (३।३।९०) इति नङ्—याच्ञा ॥८३४॥

६०७. **रेटृ परिभाषणे** । रेटते, रेटति । अरिरेटत् ॥८३५॥

---

१. 'हिष्क गतौ' इति काशकृत्स्न. । सतोषगतौ इति तट्टीकाकारः (पृष्ठ १०९) । २. 'त्रयस्त्रिशत्' 'त्रयोविशति' इत्यपपाठौ ।

३. स्मृतमिदं पुरुषकारे (पृ० ५१) धातुवृत्तौ च(१५८) । 'अञ्चु व्यय-गतौ' इति काशकृत्स्नः, पृ०१०९ । अञ्चुञ् व्यये गतौ च इति तु शाकटायनः ।

४. 'गतौ नलोपः' इति काशकृत्स्नसूत्रेण गतौ अचति । द्र० तट्टीका पृष्ठ १०९ । ५. काशकृत्स्नचन्द्रमैत्रेयसायणादयः ट्वितं पठन्ति ।

६०८. **चते चदे च याचने**[1]। चकारो भाषार्थं[2] रेट्रर्थः[3]। **मन्दिवाशि** (उ० १।३८) इत्युरच्—चतुरः। **चतेरुरन्** (उ० ५।५८) चत्वारः। चतेर्वरच्[4]—चत्वरम् ॥८३६,८३७॥

६०९. **प्रोथृ**[5] **पर्याप्तौ**। पर्याप्तिः पूर्णता। प्रोथते, प्रोथति। अपुप्रोथत्। प्रोथोऽश्वघोणा। **प्रियं प्रोथमनुव्रजेत्**[7] ॥८३८॥

---

१. अयमेव पाठश्चन्द्रस्य। काशकृत्स्नशाकटायनसायणानां 'याचने च' पाठः। २. 'भाषार्थं' क्वचिन्न।

३. धातोरुत्तरं पठ्यमानश्चकारो रेट्टधातुमनुकर्षति। तेन 'रेट्' धातोः परिभाषणं याचनं चार्थः। इदमेव मत्वाह हेमचन्द्रः—रेट्ट(ग्) परिभाषणयाचनयोः (धातुपारा० १।८९७)। क्षीरस्वामिनस्त्वत्र पाठो व्यस्त इति प्रतिभाति। वयं तु मन्यामहे 'चते चदे च याचने' इति कस्यचित्प्राचीनस्य श्लोकबद्धस्य धातुपाठस्यायमशः। छन्दोऽनुरोधेन च चकारो भिन्नक्रमः, पूर्वधात्वर्थसमुच्चयार्थः। एवं चाष्टाध्यायामपि दृश्यते—'पक्षिमत्स्यमृगान् हन्ति, परिपन्थं च तिष्ठति' इत्यत्रोत्तरसूत्रे हन्त्यर्थसमुच्चायकश्चकारो मध्ये पठ्यते। पाणिनीयधातुपाठे सन्ति बहुत्र प्राचीनश्लोकबद्धधातुपाठस्यांशाः। एतस्मिन् विषये ऽस्मदीयस्य 'सस्कृत व्याकरण शास्त्र का इतिहास' नाम्नोग्रन्थस्य द्वितीय भागे ७५-७७ (च० सस्क०) पृष्ठान्यवलोकनीयानि।

४. उणादौ (२।१२१) चतेः ष्वरच्प्रत्ययो विधीयते।

५. काशकृत्स्नधातुपाठे 'प्रुथृ पृथृ पृतृ व्याप्तौ' (पृष्ठ १११) इति त्रयो धातवः पठ्यन्ते। तथा सति पृथुपृथिव्यादिषु 'प्रथ विस्तारे' इत्यस्मात् सम्प्रसारणविधानमनर्थकमेव। वस्तुतस्तु 'यज इज, वप उप, प्रथ पृथ' इत्यादयो मूलतो द्विरूपाः धातवः। यास्कोऽपि 'तद्यत्र स्वरादनन्तरान्तस्थान्तर्धातुर्भवति तद्द्विप्रकृतीनां स्थानमिति प्रदिशन्ति। तत्र सिद्धायामनुपपद्यमानायामितरयोपपिपादयिषेत। तत्राप्येकेऽल्पनिष्पत्तयो भवन्ति' (निरुक्त २।२) इति वदन् द्विरूपान् धातून् स्वीचकार। अत एव भर्तृहरिरप्याह-भिन्नाविजियजी धातू विषयान्तरे'(वाक्य०२।१७८)। यजसमानार्थकस्य इजधातोः प्रयोगोऽप्युपलभ्यते। यथा—'यानि यज्ञेष्विहेज्यन्ति' (महा० शान्ति०२६३।२९ इति। काशकृत्स्नस्य धातुपाठे 'इज ईजी' धातू पठ्येते व्याख्यायते च 'इजते ऋत्विक्। इजकः, इक्, इजमानः त्रयो निपुणे' (१।४२५; पृष्ठ ७७)।

६. अनुपलब्धमूलम्। लिबिशेनात्र महाभाष्यस्य (१।४।५६) संख्या निर्दिष्टा, न तत्रैतादृशः पाठः।

६१०. **मिथृ मेथृ[1] मेधाहिंसनयोः ।** मेथते, मेथति । किति गुण-विकल्पार्थं द्वौ – मिथ्यते, मेथ्यते । अभिमेथत् । मेथोऽचि । गौरादौ (गण० ४।१।४१) मेथी । **मेथीवद्धोऽह्नि हि भ्राम्यन् घासग्रासं करोति गौः** (द्र० सुभाषितावली २६५८) । अमरसिंहस्तु—**पुंसि मेथिः खले दारू न्यस्तं यत् पशुबन्धने** (२।९।२५) । **मिदृ मेदृ** इति **दुर्गः** ॥ ८३९,८४०॥

६११. **मेधृ संगमे च ।** चकारान्मेधाहिंसनयोः । मेधते, मेधति, अमिमेधत् । मेधा । मेध्यम् । गृहमेधी । अश्वमेधः । मेधिः ॥८४१॥

६१२. **णिदृ णेदृ कुत्सासंनिकर्षयोः ।** प्रणेदति । निद्यते, नेद्यते । अनिनेदत् । **णिवृ णेवृ** इति **प्राच्चो हेवाकिनः**[2] ॥४८२,४८३॥

६१३. **शृधु मृधु उन्दे ।** उन्दः क्लेदनम् । शर्धते, शर्धति । शृद्ध्वा, शर्धित्वा, शृद्धः । **शृधु शब्दकुत्सायाम्** (१।५०६) शर्धते । मर्धते मर्धति । मृधं समरः ॥८४४,८४५॥

६१४. **बुध बोधने ।** बोधते, बोधति । **बुधिर्** इति **नन्दी**[3]—अबुधत्, अबोधीत् । बोधिता । पूर्वस्य (१।५९७) बोद्धा ॥८४६॥

६१५. **उबुन्दिर् निशामने ।** निशामनमालोचनम्[4] । बुन्दते, बुन्दति । अबुदत्, अबुन्दीत् । बुत्त्वा, बुन्दित्वा । बुन्नः । धान्तोऽयमिति **नन्दी**[5] । उबेदिर् इत्यन्ये ॥८४७॥

६१६. **वेणृ गतिज्ञानचिन्तानिशामनवादित्रग्रहणेषु ।** वादित्रं वाद्यभाण्डम्, तस्य वादनार्थं ग्रहणम् । वेणते, वेणति, अविवेणत् । **रास्ना-**

---

१. स्मृतोऽयं पाठः (धातुवृत्ति पृष्ठ १५६, पुरुषकार पृष्ठ ८०) । सि० कौ० अत्र दृष्टव्या ।

२. हेवाकिनः आग्रहिण इत्यर्थः । द्र० सर्वदर्शनसंग्रहे 'कुहेवाक' पदस्यार्थः (पृष्ठ ६१, अभ्यङ्करसंस्क० पूना) ।

३. काशकृत्स्नो ऽपि इरिदितमाह (पृष्ठ ११२) अनिरितं चन्द्रः (१।५९९) ।

४. 'चाक्षुषज्ञानम्' इत्यधिकं क्वचित् ।

५. 'उचुन्दिर्' इति चन्द्रः (१।६००) काशकृत्स्नधातुपाठे 'चुदिर् निशामने इति पठ्यते (पृष्ठ ११२), परन्तु तट्टीकायां 'चुन्दति चुन्दते' इत्युदाहरणदर्शनात् 'चुन्दिर्' इति शुद्धः पाठो द्रष्टव्यः ।

**सास्ना** (उ० ३।१५) इति वीणा। **इन्** (दश० उ० १।४६) वेणिः, वेणिका, वेणी। वेनिस्तु **वीज्याज्वरिभ्यो निः** (उ० ३।४८)। णः—वेण्णाख्या नदी ॥८४८॥

६१७. **खनु अवदारणे**। खनते, खनति। खात्वा, खनित्वा। **जनसनखनां सञ्झलोः** (६।४।४२) आत्त्वम्—खातः। **ये विभाषा** (६।४।४३) खायते, खन्यते। **गमहनजनखन** (६।४।९८) इत्युपधालोपः—चख्नुः। **ई च खनः** (३।१।१११)—खेयः। **शिल्पिनि ष्वुन्, नृतिखनिरञ्जिभ्यश्च** (३।१।१४५, सूत्रं वार्त्तिकं च) खनकः। **जनसनखनक्रम** (३।२।६७) इति विट्—विसखाः। **अन्येष्वपि दृश्यते** (३।२।१०१) डः—परिखा। खन्यते—खम्। **डित् खनेर्मुट् चोदात्तः** (उ० ५।२०)—मुखम्। **अर्तिलुधूसूखन** (३।२।१८४) इतीत्रन्—खनित्रम्। **उषिखनिभ्यां कित्** (उ० ४।१६२) खात्रम्। **आङ्परयोः खनिशृभ्यां डिच्च** (उ० १।३३)—आखुः। **खनिकष्यज्यसि** (तु० उ० ४।१४०) इतीन्—खनिराकरः। **आङि पणिपनिपतिखनिभ्यः** (उ० २।४५) इकन्—आखनिकः। **खनो घ च** (३।२।१२५)—आखनः ॥८४९॥

६१८. **चीव आदानसंवरणयोः**। [चीवते, चीवति।] **चीवृ** इति दुर्गः—अचिचीवत्। छित्वरादौ (द्र० उ० ३।१) चीवरं मुनिवासः ॥८५०॥

६१९. **चायृ पूजानिशामनयोः**। चायते, चायति, अचचायत्। **चायः की** (६।१।३५) लिटि—चिक्युः। **स्वपिस्यमिव्येञां यङि**[1], (६।१।१९) **चायः की** (६।१।२१)—चेकीयते। **अपचितश्च** (७।२।३०) पक्षे—अपचायितः। वक्तव्याद्[2] (७।२।३० वा०) अपचितिः। **चायः की च** (तु० उ० १।७४) इति तुः—केतुः ॥८५१॥

६२०. **व्यय गतौ**। व्ययते, व्ययति। **ह्म्यन्तक्षण** (७।२।५) इति—अव्ययीत्। चुरादावन्तः (१०।३१७) व्यययति ॥८५२॥

६२१. **दाशृ दाने**। दाशते, दाशति। अददाशत्। क्वसौ—दाश्वान् (६।१।१२) साधुः। **दाशगोघ्नौ सम्प्रदाने** (३।४।७३)। पुरो

---

१. 'चायः की' सूत्रं षष्ठाध्याये प्रथमे पादे द्विः पठ्यते, कतमस्यात्रग्रहणमिति परिज्ञापनार्यंतत् सूत्रं निर्दिष्यते।

२. 'क्तिनि नित्यमिति वक्तव्यम्' इत्यनेनेति शेषः।

दाश्यते—पुरोडाश:; पृषोदरादित्वात् (६।३।१०६) डत्वम्, एवं दु:खेन दाश्यते दूडाश:। **दाय् दान** इति **कौशिक:** ।।८५३।।

६२२. **अय गतौ**। अयते। **उदयति दिननाथ:** (द्र० पूर्वत्र पृष्ठ ५६) ।।८५४।।

६२३. **भेषृ भ्रेषृ भये**। ६२४. **भ्रेषृ चेलने च**। भेषते, भेषति। अबिभेषत्। भेषयति। बिभेते: (३।२) मुण्डो भीषयते (द्र० ७।३।४०)। भ्रेषते, भ्रेषति। भ्रेष: ।।८५५,८५६।।

६२५. **अस गतिदीप्त्यादानेषु**। असते, असति। **लावण्य उत्पाद्य इवास यत्न:** (कुमारसंभव १।३५) इत्यत्र **आसेत्यसतेरिति वामन:** (काव्यालं० ५।२।२७) अस्तेरित्येके। अदादौ **अस भुवि** (२।६०) अस्ति। [**अष इत्येके**] ।।८५७।।

६२६. **स्पश बाधनस्पाशनयो:**। स्पाशनं ग्रन्थनम्[2]। स्पशते, स्पशति। **सेयमुभयत: स्पाशा रज्जु:**[3]। स्पशश्चर:। पस्पश उपोद्घात:। चुरादौ **स्पश बाधने**[4] (तु० १०।१३०) **पश बन्धने** (१०।१६५)—स्पाशयते, पाशयति। **पष इत्येके**[5]—पाष:, पाषाण: ।।८५८।।

६२७. **लष कान्तौ**। कान्तिरिच्छा वा। **भ्राशभ्लाश**(३।१।७०) इति वा श्यन्—अभिलष्यते, अभिलषते, अभिलष्यति अभिलषति। **लषपत** (३।२।१५४)इत्युकञ्-अभिलाषुक:। **लषे: श च**(दश० उ० ५।५४) इत्युनन् लशुनम् ।।८५९।।

६२८. **चष भक्षणे**। चषते, चषति। चाष:। चषक:। **सानसिवर्णसि** (उ० ४।१०७) इति चषालो यूपकटक: ।।८६०।।

---

१. उद्धृतमिदं धातुवृत्तौ (पृष्ठ १५८)। अत्र पाठस्त्रुटित: प्रतिभाति।

२. 'स्पश बाधनस्पर्शनयो:। स्पर्शनं ग्रथनम्' इति स्वामी (द्र० धातुवृत्ति: पृष्ठ १५८)। धातुवृत्ते: पाठोऽशुद्ध: प्रतिभाति।

३. द्र०—सैषोभयत: स्पाशारज्जुर्भवति (महा० ६।१।६८)।

४. 'स्पश ग्रहणसंश्लेषणयो:' इति चुरादौ (१०।१३०) पाठ:। तत्र च 'भ्वादौ स्पश बाधने' इत्युक्तम्।

५. उद्धृतं धातुवृत्तौ (पृष्ठ १५८)। अत्र 'एके' पदेन दुर्गोऽभिप्रेत:। यदाह चुरादौ (१०।१६५) 'उभयत्रापि मूर्धन्यान्त इति दुर्ग:'। यथा तु पुरुषकारे (पृष्ठ १०८) पाठस्तदनुसारं दुर्गशाकटायनयोरेष पक्ष:।

६२९. **छष हिंसायाम्** । [छषते, छषति] ।।८६१।।

६३०. **झष आदानसंवरणयोः** । झषते, झषति । झषः । **झष हिंसार्थः** (१।४५८) झषति ।।८६२।।

६३१. **भ्लक्ष भक्षणे**[1] । **प्लक्ष** इति **दुर्गः** ।।८६३।।

६३२. **दासृ दाने** । दासते, दासति । दासः । आद्यो (१।६२१) **दासृ**, अयं **दाशृ** **इत्येके** ।।६२४।।

६३३. **माहृ माने** मानं वर्तनम् । माहा गौः ।।८६५।।

६३४. **गुहू संवरणे** । **ऊदुपधाया गोहः** (६।४।८९) गूहते, गूहति, अघुक्षत् । तङि तु **लुग् वा दुहदिहलिहगुह** (७ ३।७३) इत्यगूढ अघुक्षत । **सनि ग्रहगुहोश्च** (७।२।१८) इति नेट् जुघुक्षति । चङि ह्रस्वो नेष्यते—अजुगूहत्[2] । गूढा, गूहिता । गूढः । भिदादौ (गण० ३।३। १०४) **गुहा गिर्योषध्योः** । के (द्र० ३।१।१३५) गुहः । **शंसिदुहिगुहिभ्यः क्यब्वा** (३।१।१०९ वा०) गुह्यम्, गूह्यम् । उणादौ—गह्वरः (द्र० उ० ३।१) **गुहेर्गहिः**[3] —गहनम् ।।८६६।।

६३५. **उदात्ताः स्वरितेतः** ।।

६३६. **श्रिञ् सेवायाम्, उदात्तः** । श्रयते, श्रयति । श्रयिता । **णिश्रिद्रुस्रुभ्यः कर्तरि चङ्** (३।१।४८) अशिश्रियत् । **सनीवन्तर्ध** (७।२।४८) इति नेट् शिश्रीषति । शिश्रयिषति । **यस्य विभाषा** (७।२।१५) इति वेट्—श्रितः । **श्र्युकः किति** (७ । २ । ११) श्रित्वा । **श्रिणीभुवोऽनुपसर्गे** (३।३।२४) वा घञ्—श्रायः, श्रयः[4] । **उदि श्रयतियौति** (३।३।४९) इति घञ् उच्छ्रायः । बाहुलकात्[5] **पतनान्ताः**

---

१. उद्धृतमिदं धातुवृत्तौ (पृष्ठ १५९) । धातुप्रदीपे (पृष्ठ ६५) 'भ्लाक्ष इत्येके' इति पठ्यते । पुरुषकारे तु 'भ्लक्ष इत्येके' इति मैत्रेय रक्षितः । 'भ्रक्ष' इति 'क्षीरस्वामी' इत्येवमुदध्रियते (पृष्ठ ११३) ।

२. क्रियारत्नसमुच्चये तु 'अजूगूहत्' इत्युक्त्वा 'ह्रस्वाभावमते' तु 'अजुगूहत्' इत्युच्यते (पृष्ठ १२०) । ३. द्र० स० कण्ठा० २।२।१९२ ।।

४. सर्वहस्तलेखेषु वा पठ्यते । 'श्रायः श्रयः' इति चोदाह्रियेते, कुतो 'वा' ग्रहणं संबध्नाति ग्रन्थकार इति न ज्ञायते ।

५. कृत्यल्युटो बहुलम् (३।३।११३) इत्यत्र निर्दिष्टाद् बहुलग्रहणादिति

**समुच्छ्रयाः**(रामा० ६।१०५।१६, महा०शान्ति० ३३०।२०)[1]। **वहिश्रिश्रु** (दश० उ० १।२१) इति णिः—श्रेणिः। **क्विब् वचिप्रछि**(उ० २।५७) इति क्विब्दीर्घौ—श्रीः। **श्मनि श्रयतेर्डुन्** (उ० ५।२८) श्मश्रु। **श्रयतेः स्वाङ्गे शिर् किच्च** (दश० उ० ६।५४ कपाठः) इत्यसुन् शिरः। **आङि श्रिहनिभ्यां ह्रस्वश्च** (उ० ४।१३८)इतीन् डित्—अश्रिः ॥८६७॥

६३७. **हृञ् हरणे**। इतस्त्रैङ्पर्यन्ता (१।६८९) अष्टषष्टिरनिटः, परस्मैपदिनश्च ञिन्ङिद्वर्जम्। हरते, हरति। **हरतेर्गतिताच्छील्ये**(१।३।११ वा०)तङ्—पैतृकमश्वा अनुहरन्ते। **व्यवहृपणोः समर्थयोः** (२।३।५७) षष्ठी—शतस्य व्यवहरति हर्ता। **ऋद्धनोः स्ये** (७।२।६०) इतीट्-हरिष्यति। **हृक्रोरन्यतरस्याम्** (१।४।५३) णौ कर्मसंज्ञा—हारयति भारं चैत्रेण, चैत्रं वा। **श्याद्व्यधा** (३।१।१४ ) इति णः—अवहारो ग्राहः। **हरतेरनुद्यमनेऽच्**(३।२।९) रिक्तहर[2]। **वयसि च** (३।२।१०) कवचहरः। **आङि ताच्छील्ये** (३।२।११) पुष्पाहरः। **हरतेर्दृतिनाथयोः पशौ** (३।२।२५) इतीन्—दृतिहरिः, नाथहरिः। **अध्यायन्यायोद्यावसंहार** (३।३ १२२) इति करणे घञ् अध्याहारः। **हृसृरुहियुषिभ्य इतिः** (उ० १।९७) हरिद् वर्णो दिक् च। **श्यास्त्याहृञ्** (उ० २।४६) इतीनच्—हरिणः। **हृश्याभ्यामितन्** (उ० ३।९३) हरितः। **वृह्लोः सुग्दुकौ च** (तु० उ० ४.१००) इति कयन्—हृदयम्। **पद्दनादौ**(द्र० ६।१।६३) हृत् प्रकृत्यन्तरमप्यस्ति[3]।

---

भावः। लिबिशमहोदयेन त्वेतदपरिज्ञाय चौरादिकस्य 'बहुलमेतन्निदर्शनम्'(१०। ३२५) इति सूत्रस्य निर्देश. कृतः। काशिकाकारस्तु सिहावलोकितन्यायेनोत्तरसूत्रस्थ विभाषाग्रहणं संबध्नाति।

१. अत्र लिबिशमहोदयेन काशिकाया (३।३।४९) एव निर्देश. कृतः, न त्वाकरग्रन्थस्य। २. 'रिक्थहर' इति तु शुद्धः पाठः।

४. 'हृदयशब्देन समानार्थो हृच्छब्द. प्रकृत्यन्तरमस्ति, तेनैव सिद्धे विकल्पविधानं प्रपञ्चार्थम्' इति काशिकाकारः (काशिका ६।३।५२) वस्तुतस्तु व्याकरणशास्त्रे विहिताः सर्व एव आदेशाः प्रकृत्यन्तररूपा एव। ये चापि वर्णादेशाः, प्रकृतेरागमाश्च तेऽपि सूत्रोपात्ताभ्यः प्रकृतिभ्यः प्रकृत्यन्तरत्वद्योतनार्था। अत्र विषये विशेषोऽस्मदीये 'स० व्या० शा० इतिहास' इति नाम्नो ग्रन्थस्य तृतीयेभागे द्वितीयपरिशिष्टे (पृष्ठ २१–३४) द्रष्टव्यम्।

**हृपिषि** (तु० उ० ४।११६) इतीन् हरिः। **जनिहृभ्यामिमनिन्** (दश० उ० ६।७८) **हरिमाणं च नाशय** (ऋ० १।५०।११) **हृधृभृसृ** (तु० दश०उ० ६।१७६) इति ईमनिन्—हरीमा। **वेञो डित्, प्रे हरतेः कूपे** (दश० उ० १।६२,६३) प्रहिः। **कृहृभ्यामेनुः** (तु० उ० २।१) हरेणु-र्गन्धद्रव्यम्, सस्यभेदश्च ॥८६८॥

६३८. **भृञ् भरणे**। भरते, भरति। ह्वादौ **डुभृञ्** (३।५) बिभर्ति। भारः। भृतः। क्र्यादौ **भॄ भरणे** (९।२०) भृणाति। भरः **ऋदोरप्** (३।३।५७)। भरितः। **संज्ञायां भृतॄ** (३।२।५६) इति खच्—विश्वम्भरा। **अवे भृञः** (उ०२।३) क्थन्—अवभृथो यज्ञान्तः[1]। **अण्डन् कृसृभृवृञः** (उ०१।१२९) भरण्ड आपवनम्[2]। भृशम्। भृङ्गः। भुरिक् छन्दः। **कुभ्रश्च** (तु० उ० १।२२) इति बभ्रुः। भरतः। भरुदेशः[3] ॥८६९॥

६३९. **कृञ् करणे**[4]। करते, करति। स्वादौ **कृञ् हिंसायाम्** (५।७) कृणुते, कृणोति। तनादौ **डुकृञ् करणे** (८।११) कुरुते, करोति। उणादौ कारुः, कारिः, करणिः सदृशः करेणुः, क्रतुः, करकः=

---

१. सोमयज्ञाना समाप्तौ क्रियमाण स्नानमवभृथशब्देनोच्यते ।

२. 'आवपनम्' क्वचिन्नास्ति। ३. भरुकच्छ (भड़ौच) नाम्ना प्रसिद्धः।

४. स्मृतोऽयं पाठः पुरुषकारे (पृष्ठ ३८)। अत्रेदमवधेयम्—प्रायेण सर्व एव प्राचीना देव-पाल्यकीर्ति-हेमचन्द्र-दशपाद्युणादिवृत्तिकारादयः कृञं भ्वादौ पठन्ति। अस्य भ्वादिस्थस्यैव प्रयोगाः पालिप्राकृतभाषयोरुपलभ्यन्ते। हिन्दी-भाषायामपि 'करता है' इति अस्यैवापभ्रंशः, न तु करोतेः। एतेन कृञो भ्वादिष्वविगीत एव पाठः। सायणेन 'उपो षु शृणुहि' (ऋ० १।८२।१) मन्त्रव्याख्याने धातुवृत्तौ (पृष्ठ १६३) चास्य महता प्रपञ्चेन भ्वादित्वं निराकृतम्। ये च तत्र हेतवो निर्दिष्टास्ते सर्वे हेत्वाभासा एव। भट्टोजिदीक्षितादयः सायणमेवानुययुः। इदमाश्चर्यं यत्सायणाचार्यः कृञः भ्वादित्वस्य महता प्रपञ्चेन निराकुर्वन्नपि ऋ० १।२३।६ मन्त्रव्याख्याने 'करताम् कृञ् करणे भौवादिकः' इत्याह। वस्तुतः कृञो भ्वादावेव पाठः, न तु तनादौ। अत एव पाणिनिना 'तनादिकृञ्भ्य उः' (३।१।७९) सूत्रे तनादिभ्यः पृथक् कृञः पाठः कृतः। सति तनादौ, कृञः पृथक् पाठोऽनुचित एव। कदाचिदुत्तरकालीनैरयं तनादिषु प्रक्षिप्तः स्यात्। 'तनादिकृञ्भ्य उः' इति सूत्रस्थमहाभाष्याच्चैतत

कलशादिः, कृकः, कर्कः=सितः, चक्रम्, करण्डः, कर्म, करम्भः, कृसरः ॥८७०॥

६४०. **णीञ् प्रापणे** । प्रापणमासादनम् । नयते, नयति । प्रणेता । **संमानन** (१।३।३६) इत्यात्मनेपदम् –नयते चार्वी[1] लोकायते । **कर्तृस्थे चाशरीरे कर्मणि** (१।३।३७) क्रोधं विनयति । **अदिखादिनीवहीनां प्रतिषेधाद्**[2] (द्र० १।४।५२ वा०) नाययति भारं ग्रामं चैत्रेण । **विपूयविनीय** (३।१।११७) इति विनीयः कल्के साधुः । **आनाय्योऽनित्ये** (३।१।१२७) आनाय्यो दक्षिणाग्निः, आनाय्यो गोधुक्[3] । **प्रणाय्योऽसम्मतौ**[4] (३।१।१२८) –**प्रणाय्यायान्तेवासिने ब्रह्म ब्रूयात्** (तु० छा० उ० ३।११।५) असम्मतसंसारायेत्यर्थः । **पाय्यसान्नाय्य** (३।१।१२९) इति सान्नाय्यं हविः । **दुन्योरनुपसर्गे** (३।१।१४२) इति कर्तरि णः–नायः । **श्रिणीभुवोऽनुपसर्गे**(३।३।२४)घञ् –नायः । बाहुलकाद्[5] नयः । **अवोदोर्नियः** (३।३।२६) - अवनायः, उन्नायः । **परिन्योर्नीणोर्द्यूताभ्रेषयोः** (३।३।३७)—परिणायः । **जालमानायः**

---

प्रतीयते यत् पतञ्जलेः प्रागेवास्य धातोः तनादिषु प्रक्षेपो बभूव । एतत् सर्वमवबुध्य दीर्घदर्शिना स्वामिदयानन्देन 'अवरुद्रमदीमहि' (यजु० ३।५८) इति मन्त्रव्याख्यान उक्तम्–"डुकृञ् करणे इत्यस्य भ्वादिगणान्तर्गतपाठात् शब्विकरणोऽत्र गृह्यते, तनादिभिः सह पाठादुविकरणोऽपि ।" अत्र तनादिभिः सहपाठादित्यस्य 'तनादिकृञ्भ्य उ' इति सूत्रे तनादिना कृञः सहपाठाद् इत्यर्थो ज्ञेय । अत्र आगामिनी 'डुकृञ्करणे' (८।१०) इत्यत्र लिखिता टिप्पण्यपि द्रष्टव्या ।

१. 'चार्वाक.' पाठा० । काशिकाया (१।३।३६) 'चार्वी' इत्येव पाठ. ।

२. 'प्रतिषेधे' पाठा० ।

३. यथा तु महाभाष्य तथा दक्षिणाग्नावेवेद निपातनम्, तत्रापि यस्य दक्षिणाग्नेर्गार्हपत्याग्निरेव योनिस्तत्रैव । वैश्यकुलादाहृते दक्षिणाग्नावपि 'आनेय' इत्येव भवति । गोधुक्शब्दार्थे 'आनाय्य' पदमन्यत्र न दृष्टम् ।

४. 'संमते' पाठा० ।

५. कृत्यल्युटो बहुलम् (अ० ३।१।११३) इति बहुलवचनादिति भावः । एतदपरिज्ञाय लिबिशमहोदयेन अत्र 'बहुलमेतन्निदर्शनम्' (१०।३२५) इति धातुसूत्रस्य संख्या निर्दिष्टा ।

(३।३।१२४) । **सत्सूद्विष** (३।२।६१) इति क्विप्—ग्रामणीः । **दाम्नीशस** (३।२।१८२) इति ष्ट्रन्—नेत्रम् । रक् (द्र० उ० २।१३) —नीरम् । **नप्तृनेष्टृ** (उ० २।९६) इति नेष्टा ऋत्विक् । **हनिकुषि** (उ० २।२) इति क्थन्—सुनीथः । **नयतेर्डिच्च** (उ० २।१०१) इति ऋः—ना नरौ नरः । **पानीविषिभ्यः पः** (उ० ३।२३) नीपः । **नियो मिः** (उ० ४।४३)—नेमिः ॥८७१॥

६४१. **धेट् पाने**[1] । टकार स्तनन्धयीत्यादौ ङीबर्थः[2] (द्र० काशिका २।३।२९) । धयति । **विभाषा धेट्श्व्योः** (३।१।४९) चङ्—अदधत्, अधासीत् । **विभाषा घ्राधेट्शा** (२।४।७८) इति सिज्लुक्—अधात् । **पाघ्रा** (३।१।१३७) इति शः—उद्धयः । **नासिकास्तनयोर्ध्माधेटोः** (३।२।२९) खश्—स्तनन्धयः । **नाडीमुष्ट्योश्च** (३।२।३०) मुष्टिन्धयः । **दाधेट्सिशदशदो रुः** (३।२।१५९) धारुर्गाः[3] । **धः कर्मणि ष्ट्रन्** (३।२।१८१)—धात्री । **धेट् इच्च** (उ० ३।३४)—धेनुः । ध्यायतेस्तु (१।६४७) धीः, क्ते (६।४।६६) धीतः[4] ॥८७२॥

६४२. **ग्लै हर्षक्षये** । हर्षक्षयोऽत्र धात्वपचयः ।[5] ग्लायति । **वाऽन्यस्य संयोगादेः** (६।४।६८) इति लिङि एत्वम्—ग्लेयात्, ग्लायात् । **ग्लास्नावनुवमां च** (१।५५६) इति वा मित्त्वम्—ग्लपयति, ग्लापयति । **संयोगादेरातो धातोर्यण्वतः** (८।२।४३) निष्ठानत्वम्—ग्लानः । **ग्लाजिस्थश्च क्स्नुः** (३।२।१३९)—ग्लास्नुः । **ग्लानुदिभ्यां डौ** (उ० २।६४)—ग्लौश्चन्द्रः । **ग्लाज्याहाभ्यो निः** (३।३।९५ वा०) ग्लानिः । **शकधृषज्ञाग्ला** (३।४।६५) इति तुमुन्—ग्लायति भोक्तुम् ॥८७३॥

६४३. **म्लै गात्रविनामे** । विनामः कान्तिक्षयः । म्लायति । म्लेयात्, म्लायात् । म्लानः; बाहुलकान्[6] म्लानिः ॥८७४॥

६४४. **द्यै न्यङ्गविधाने**[7] । न्यङ्गं कुत्सिताङ्गम् । द्यायति ॥८७५॥

---

१. 'धयत्यादयोऽनुदात्ता उदात्तेतः' इति धातुवृत्तिः (पृष्ठ १८४) । तत्रोदात्तेत्त्वं सति सम्भवे ज्ञेयम् । २. स्मृत धातुवृत्तौ (पृष्ठ १६६) ।

३. अपपाठोऽयम् । 'धारुर्गौ वत्सः' इत्येव पाठेन भाव्यम् ।

४. 'धीतम्' पाठा० । ५. 'वैराग्यपचये' पाठा० ।

६. कृत्यल्युटो बहुलम् (३।३।११३) इति बहुलवचनात् ।

७. 'न्यङ्गे' पाठान्तरम् । 'न्यङ्गविमान' इति क्षीरस्वामी (धा० वृ० पृष्ठ १६७) । द्यै न्यङ्करणे । कुत्सितमङ्गं न्यङ्गम् इति हेमचन्द्र. (धातु० १।२६) ।

६४५. **द्रै स्वप्ने**। द्रायति। **स्पृहिगृहि** (३।२।१५८) इत्यालुच्—निद्रालुः। क्ते (द्र० ८।२।५३) निद्राणः। तारकादित्वात् (द्र० गण० ५।२।३६) निद्रितः। **आतश्चोपसर्गे** (३।३।१०६) अङ्—निद्रा। **द्रा कुत्सितायां गतौ** (२।४७) द्राति, विद्राणः ॥८७६॥

६४६. **ध्रै तृप्तौ**। ध्रायति। ध्राणः। भाष्ये नत्वं नेष्यते[1]—ध्रातः ॥८७७॥

६४७. **ध्यै चिन्तायाम्**। **अधीगर्थदयेशां कर्मणि** (२।३।५२) षष्ठी मातुर्ध्यायति। ध्यापयति स्वयमेवेति **णेरणौ** (१।३।६७) इति तङ् नास्ति, आध्याने निषेधात्। दुष्टं ध्यायति दूढ्यः। **आतोऽनुपसर्गे कः** (३।२।३) **दुरो दाशनाशदभध्येषु** (६।३ १०९वा०) इति ढत्वमुत्वञ्च। **आतश्चोपसर्गे कः** (३।१।१३६)—आध्यायन्त्येनम् आढ्य। **न ध्याख्यापॄमूर्छिमदाम्** (८।२।५७) इति न निष्ठानत्वम्—ध्यातः। उणादौ धीः[2]। **ध्याप्योः सम्प्रसारणं च** (उ० ४।११५) इति क्वनिप्—धीवा। **छित्वरछत्वर** (उ० ३।१) इति धीवरः। मां ध्यायति—मध्यः[3] **आतोऽनुपसर्गे कः** (३।२।३)। सन्ध्यायन्त्यस्याम् इति सन्ध्या[4] ॥८७८॥

६४८. **रै शब्दे**। रायति। **कृदाधारा** (उ० ३।४०) इति कः—राका। **राशदिभ्यां त्रिप्** (उ० ४।६७) रात्रिः। **रातेर्डैः** (उ० २।६६)—रा धनम्। अदादौ **रा दाने** (२।५०) राति[5] ॥८७९॥

६४९. **ष्ट्यै स्त्यै शब्दसंघातयोः**[6]। ष्ट्यायति[7] स्त्यायति उभयोरुपदेशे उपादानाद् **धात्वादेः षः सः** (६।१।६४) नास्ति[7]। **स्त्यः प्रपूर्वस्य**

---

१. महाभाष्ये नैतादृश वचन क्वचिदुपलभ्यते।

२. नैतदुणादौ सिद्ध्यति। 'ध्यायतेः सम्प्रसारण च' (३।२।१७८ वा०) इति वार्त्तिकेनास्य सिद्धिर्भवति।

३. तुलनीयम् 'मा ध्यायतीति मध्यमिति धातुपारायणीयम्' इत्युज्ज्वलदत्तः (उ० वृ० ४।१११)। ४. आतश्चोपसर्गे (३।३।१०६) इत्यङ् भवति।

५. इतोऽग्रे 'धनम्' इत्यधिकं क्वचिद्।

६. अत्र 'स्त्यै सघाते ष्ट्यै शब्दे इत्यनुक्तेर्यथासंख्यं नेष्यते' इत्याह कृष्णलीलाशुकमुनिः। द्र० पुरुषकार, पृष्ठ १५।

७. काशकृत्स्नधातुपाठीयकन्नडटीकायामपि 'ष्ट्यै' इत्यस्य 'ष्ट्यायति'

(६।१।२३) इति सम्प्रसारणम्, **प्रस्त्योऽन्यतरस्याम्** (८।२।५४) इति वा निष्ठानत्वम्—प्रस्तीतः प्रस्तीमः। **श्यास्त्या**(उ० २।४६) इतीनच्—स्त्येनः। स्तेनयतेः(१०।२७९)स्तेनः। **स्त्यातेड्रंट्** (उ०४।१६५)—स्त्री ॥८८०,८८१॥

६५०. **खै खदने**[1]। खायति। ल्युटि खानम् आहुः[2] ॥८८२॥

६५१. **क्षै जै सै क्षये**। क्षायति। निष्ठायां **क्षायो मः** (८।२।५३) क्षामः। जायति। जाता। सायति। साता। सायात्—स्यतेर्ग्रहणाद् एत्वं[3] न। असासीत्—स्यतेर्ग्रहणाद् **विभाषा घ्राधेट्** (२।४।७८)इति सिज्लुक् नास्ति ॥८८३-८८५॥

६५२. **कै गै शब्दे**। कायति, गायति। एतौ शब्दविशेष रूढौ[4]। **इण्भीकापा** (उ० ३।४३) इति कन्—काकः[5]। अगासीत्, इणादेशस्य तु **गातिस्था** (२।४।७७) इति सिज्लुक्[6]—अगात्। **भव्यगेय** (३।४।६८) इति गेयः कर्तरि साधुः। **गस्थकन्** (३।१।१४६)—गाथकः। **ण्युट् च** (३।१।१४७) गायनः। **गापोष्टक्** (३।२।८) सामग उद्गाता। **कमिमनिजनि** (उ० १।७३) इति तुन्-गातुः। **उषिकुषिगा** (उ० २।४) इति थन्—गाथा। **गश्चोदि** (उ० २।१०) इति थक्—

---

इति सत्वाभावमेवोदाहृतम् (पृष्ठ ५१)। शाकटायनोऽप्येवमेव। पुरुषकारस्तु मतमिद स्मृत्वा निराचकार (पृष्ठ १६)। सायणोऽपि तथैव प्रतिपेदे (धा० वृ० पृष्ठ १६८)।

१. खदनं स्थैर्य हिंसा च इति सायणः (धा० वृ० पृष्ठ १६८)। काशकृत्स्नीयधातुपाठे 'खै खादने' इति पठ्यते, 'भक्षणार्थत्व च' तट्टीकाया व्याख्यायते (पृष्ठ ७०)।

२. काशकृत्स्नधातुपाठीयकन्नडटीकाया 'खानम्' इत्युदाह्रियते(पृष्ठ ५२)। वाक्यमिदं क्वचिन्न।

३. घुमास्था (६।४।६६) इति सूत्रे स्यतेर्ग्रहणाद् 'एर्लिङि' (६।४।६७) इत्येवं नेति भावः।

४. स्मृतमिद धातुवृत्तौ (पृष्ठ १६९)।

५. कायते. शब्दविशेषत्वद्योतनायैव तिडन्तमध्ये काकपदनिर्वचनमुक्तम्।

६. गापोर्ग्रहण इण्पिबत्योर्ग्रहणम् (२।४।७७ वा०)इति वचनात्।

उद्गीथ ओंकारः । **घुमास्थागापा** (६।४।६६) इतीत्वम् गीतं गानम् । **स्थागापापचो भावे** (३।३।६५) गीतिः । **गाङ् गतौ** (१।६८०) गाते ॥८८६,८८७॥

**६५३. स्त्रै श्रै पाके ।** स्रायति, श्रायति । **श्रा पाके** (१।५४७) मित्– श्रपयति । श्रातेः (२।४६) श्रपेश्च [ण्यन्तान्मित्त्वे]च **शृतं पाके** (६।१।२०) साधु ॥८८८,८८९॥

**६५४. पै ओवै[1] शोषणे ।** पायति । पिबादेशो (द्र० ७।३।७८) नेष्यते[2] । इह[3] **पा पाने** (१।६५७) –पिबति । अदादौ–**पा रक्षणे** (२।४९) पाति । वायति । **ओदितश्च** (८।२।५४) इति निष्ठानत्वम्—वानं शुष्कम् । **कृवापा** (उ० १।१) इति वायुः । अदादौ **वा गतिगन्धनयोः** (२।४३) वाति । चुरादौ **वा गतिसुखसेवनयोः** (१०।२६८) वापयति ॥८९०,८९१॥

**६५५. ष्णै वेष्टने ।** स्नायति । स्नायुः । अदादौ **ष्णा शौचे** (२।४५)—स्नाति ॥८९२॥

**६५६. दैप् शोधने ।** पकारो **दाधाघ्वदाप्** (१।१।२०) इति विशेषणार्थः । दायति । अवदातं मुखम् । इह[3] **दाण् दाने** (१।६६२) —यच्छति, देङ् रक्षणे (१।६८६)दयते, अदादौ **दाप् लवने**(२।५२) दाति । ह्वादौ **डुदाञ् दाने** (३।९) दत्ते, ददाति । दिवादौ **दो अवखण्डने** (४।३८)—द्यति ॥८९३॥

**६५७. पा पाने । पाघ्राध्मा** (७।३।७८) इति पिबः–पिबति । अदन्तत्वाद् गुणाभावः । **घुमास्थागापा** (६।४।६६) इतीत्वम्—पीयते । **एर्लिङि** (६।४।६७)—पेयात् । **गतिस्थाघुपा** (२।४।७७) सिज्लुक्—अपात् । **शाछासाह्वा** (७।३।३७) इति युक्–पाययते, **न पादम्याङ्यमाङ्यस** (१।३।८९) इति परस्मैपदं नास्ति[4] । **लोपः पिबतेरी चाभ्यासस्य** (तु० ७।४।४) इत्यपीप्यत्— **क्रतौ कुण्डपाय्यः**

---

१. काशकृत्स्नधातुपाठे तु 'पै उ वै शोषणे' इत्येव त्रयो धातवः पठ्यन्ते । 'उ' इत्ययम् 'अवति शुष्यति' इत्येवं व्याख्यायते । द्र० का० धातुव्याख्यानम्, १।३३६; पृष्ठ ५२ । तदनुसारमिहापि 'ओ' पृथग्धातुः सम्भवति ।

२. गापोर्ग्रहण इण्पिबत्योर्ग्रहम् (२।४।७७ वा०) इति वचनात् ।

३. भ्वादावित्यर्थः ।

४. कर्त्रभिप्राय इति शेषः ।

(द्र० ३।१।१३०) साधुः। **पाय्यसांनाय्य** (३।१।१२९) इति पाय्यो माने साधुः। **पाघ्राध्मा** (३।१।१३७) इति शः—उत्पिबः। अनुपसर्गाण्णः (द्र० ३।१।१४१) एवेति पायः। **गापोष्टक्—सुराशीध्वोः पिबतेः**(३।२।८ सू० वा०) —सुरापः। पानीयम्। **घञर्थे कविधानम्** (३।३।५८ वा०) —प्रपा। **स्थागापापचो भावे** (३।३।९५) पीतिः। **कृवापाजि** (उ० १।१) इत्युण् पायुः। **पातॄतुदि** (उ० २।७) इति थक् —पीथः। **ष्ट्रन्** (दश० ८।७९) पात्रम्। **मनिन्** (दश० उ० ६।७३) पामा। **पिबतेरी च**(श्वेत० उ० ४।१९५)इत्यसुन्—पयः। **पिबतेस्थसुन्** (तु० उ० ४।२०३)—पाथः अम्बु। **पानिविषिभ्य पः** (३।२३) —पापम्। **सानसिवर्णसि** (उ० ४।१०७) इति पल्वलम्। पाको[1] बालः। कलापकः[2]। पम्पा[3] सरः ॥८९४॥

६५८. **घ्रा गन्धोपादाने। पाघ्रा** (७।३।७८) इति जिघ्रः[4]—जिघ्रति। **वान्यस्य संयोगादेः** (६।४।६८) इति वा एत्वम्—घ्रेयात् घ्रायात्। **विभाषा घ्रा** (२।४।६८)इति वा सिज्लुक्—अघ्रात् अघ्रासीत्। **ई घ्राध्मोः** (७।४।३१)—जेघ्रीयते। **जिघ्रतेर्वा** (७।४।६) इत्—अजिघ्रिपत् अजिघ्रपत् ॥८९५॥

६५९. **ध्मा शब्दाग्निसंयोगयोः**। शब्दे, मुखादिना चाग्निसंयोगे। **पाघ्राध्मा** (७।३।७८) इति धमः—धमति। शः (द्र० ३।१।१३७) विधमः। आध्मातः शङ्खः। **नासिकास्तनयोर्ध्माधेटोः**(३।२।२०)खश्—

---

१. अर्भकपृथुकपाका वयसि (उ० ५।५३)।

२. द्र० दशपादी-उणादिवृत्तिः ३।५ ॥

३. द्र० दशपादी-उणादिवृत्तिः ७।७ ॥

४. पिबजिघ्रधमादयो वस्तुतः स्वतन्त्रा धातवः। अत एवार्धधातुकेष्वपि जिघ्रधातुरुपलभ्यते। यथा—गोभिलगृह्ये (२।७।२२,२४)अभिजिघ्रय, अभिजिघ्रणं चेति। हिरण्यकेशीये (२।४।१७) च 'अभिजिघ्रय' इत्युपलभ्यते। एवमेव 'घ्रा' धातोरपि 'आघ्राति' (महा० शान्ति० १८७।१७) 'नाघ्राति' (महा० आश्व० २२।१४) 'व्याङि घ्रातेश्च' इत्युणादिसूत्रे (५।६३) च सार्वधातुके जिघ्रादेशो न भवति। एवं धमेरपि। उत्तरधातुसूत्रव्याख्यानं तट्टिप्पणी च द्रष्टव्या। एतद्विषये विशेषतः 'संस्कृत व्यकरण शास्त्र का इतिहास' ग्रन्थस्य प्रथमाध्यायो (पृष्ठ ५२,५३; च० संस्क०) द्रष्टव्यः।

—नासिकन्धमः। **नाडीमुष्ट्योश्च** (३।२।३०) नाडिन्धमः। **उग्रम्पश्येरम्मदपाणिन्धमाश्च** (३।२।३७)। **ध्मो धमश्च** (तु० उ० २।३५) इति क्वुन्—धमकः। **अर्तिसृधृधमि** (उ० २।१०३) इत्यनिः—धमनिर्नाडी। बाहुलकाद्[1] धमादेशः। **धमिः प्रकृत्यन्तरमित्येके**[2]। यथा—**धान्तो**[3] **धातुः**[4] **पावकस्येव राशिः**[5] ॥८६६॥

६६०. **ष्ठा गतिनिवृत्तौ**। स्थस्तिष्ठादेशः (द्र० ७।३।७८) तिष्ठति। **समवप्रविभ्यः स्थः** (१।३ २२) इत्यात्मनेपदम् सन्तिष्ठते, अवतिष्ठते, प्रतिष्ठते, वितिष्ठते। **स्थाघ्वोरिच्च** (१।२।१७) समस्थित, समस्थिषाताम्। **आङः स्थः प्रतिज्ञाने** (१।३।२२वा०) उपसंख्यानम्—**अस्ति सकारमातिष्ठते**[6], शब्दं नित्यमातिष्ठते, नित्यत्वेन प्रतिजानीत इत्यर्थः।

---

१. अत्र लिबिशमहोदयेन 'बहुलमन्यत्रापि' (उ० २।३०) इत्युणादिसूत्रमपरिज्ञाय 'उणादयो बहुलम्' (३।३।१) इत्यस्य संख्या निर्दिष्टा। तुलनीया दशपाद्युणादिवृत्ति—तथा (बहुल) ध्मश्चान्यत्रापि धमादेशो भवति' (द० उ० ३।६ पृष्ठ १३२)। क्षीरस्वामी दशपाद्युणादिवृत्ति शब्दतोऽर्थतो वा बहुत्रोद्धरति (द्र० क्षीर० भूमिका)।

२. कस्येद मतमिति न ज्ञायते। वस्तुत. पिबजिघ्रधमादीनि प्रकृत्यन्तराण्येवेत्युक्तम्। तथा च धमेरार्धधातुके स्वयमेव ग्रन्थकृता प्रयोग उदाहृतः। एव 'विधमिष्यामि जीमूतान्' इति (रामा० सुन्दर ६७।१२), 'धम्यमान' (महा० कर्ण० ८।८) 'विधम्य' (तत्रैव १४।३६) इत्यादौ प्रयुज्यते। 'अर्तिसृधम्यमि' (उ० २।१०३) इत्युणादिसूत्रे 'धमिः' प्रकृत्यन्तरत्वेनोपादीयते। अस्य वृत्तौ 'धमति प्रापयति' इत्युक्त दयानन्दसरस्वतीस्वामिना। अत्र पूर्वधातुस्था टिप्पण्यपि द्रष्टव्या।

३. दशपाद्युणादिवृत्तौ (३।६ पृष्ठ १३२) क्वचित् 'धमः' पाट' क्वचिद 'धाता'। तत्रापि 'धान्त.' इत्येव युक्त. पाठ.। हैमोणादिवृत्तावपि धान्त' इत्येव (३३, पृष्ठ ६) पठ्यते।

४. दशपाद्युणदिवृत्तौ क्वचित् 'धातुः' नास्ति। (३।६, पृष्ठ १३२)।

५. 'काञ्चनस्यैव राशि.' इति दशपाद्युणादिवृत्तौ पाठ.(३।६ पृष्ठ १३२)

६. महाभाष्ये १।३।२२ आपिशलेरेतन्मतम्। यदाह न्यासकारः—'सकारमात्रमस्ति धातुमापिशलिराचार्य. प्रतिजानीते।...... स भुवि' इति स पठति।" (भाग १ पृष्ठ २२६)।

**प्रकाशनस्थेयाख्ययोश्च** (१।३।२३)—तिष्ठते कन्या छात्रेभ्यः, **श्लाघह्नुङ्स्था** (१।४।३४) इति सम्प्रदानसंज्ञा; **संशय्य कर्णादिषु तिष्ठते यः** (किरात ३।१४)। **उदोऽनूर्ध्वकर्मणि, उद ईहायाम्** (१।३।२४ सू० वा०) गेह उत्तिष्ठते, मुक्तावुत्तिष्ठते; नेह—**पीठादुत्तिष्ठति,** ग्रामाच्छतमुत्तिष्ठति। **उपान्मन्त्रकरणे** (१।३।२५) **ऐन्द्रया गार्हपत्यमुपतिष्ठते**[1], **आग्नेय्याऽऽग्नीध्रमुपतिष्ठते**[2]; नेह—भर्तारमुपतिष्ठति यौवनेन, उपतस्थुः प्रकृतयः। **अकर्मकाच्च** (१।३।२६) भोजन उपतिष्ठते। **उपाद् देवपूजासंगतकरणमित्रकरणपथिषु इति वाच्यम्** (तु० १।३।२५ वा०)—आदित्यमुपतिष्ठते, गङ्गा यमुनामुपतिष्ठते, उपश्लिष्यतीत्यर्थः[3]। रथिकानुपतिष्ठते[4], मित्रीकरोतीत्यर्थः। अयं पन्थाः स्रुघ्न[5]मुपतिष्ठते, प्राप्नोत्यर्थः। **वा लिप्सायाम्** ((१।३।२५ वा०) भिक्षुर्दातॄनुपतिष्ठते, उपतिष्ठति वा। **अधिशीङ्स्थासां कर्म** (१।४।४६) गृहमधितिष्ठति। **घुमास्था** (६।४।६६) इतीत्वम्—स्थीयते। **उपसर्गात् सुनोति** (८।३।६५) इति षत्वम्—अधिष्ठास्यति, अधिष्ठानम्। **स्थादिष्वभ्यासेन चाभ्यासस्य** (८।३।६४) अधितष्ठौ। **उदः स्थास्तम्भोः पूर्वस्य** (८।४।६१) इति सस्य थः, **झरो झरि सवर्णे**(८।४।६५) इति तस्य[6] लोपः—उत्थितः[7]। **गातिस्था** (२।४।७७) इति सिज्लुक्—अभ्यष्ठात्। **प्राक् सितादड्व्यवायेऽपि** (८।३।६३) इति षत्वम्। **अनुवादे चरणानाम्**[8], **स्थेणोरद्यतन्यां च** (२।४।३ सू० वा०) इति द्वन्द्वैकत्वम्—प्रत्यष्ठात् कठकौथुमम्। **स्थाघ्वोरिच्च** (१।२।१७) उपास्थित। **तिष्ठतेरित्** (७।४।५) अतिष्ठिपत्। **भव्यगेयप्रवचनीय** (३।४।६८) इति कर्तरि उपस्थानीयश्चैत्रो गुरोः। ग्रहादौ (द्र० ३।१।१३४) स्थायी। **आतश्चोपसर्गे** (३।३।१०६) ऽङ्—

---

१. मै० स० ३।२।४॥ २. मीमांसा शाबरभाष्ये ३।२।२१ उद्धृतः।

३. 'गंगा····· त्यर्थः' क्वचिन्न।

४. इतोऽग्रे 'महामात्रानुपतिष्ठते' इत्यधिकम्।

५. 'श्रुघ्नम्' मूले पाठः। 'द्वारकाम्' इति क्वचित् पाठा०।

६. थस्येत्यर्थः। ७. इतोऽग्रे 'उत्तम्भितः' इत्यधिकम्।

८. शाखानां मूलं चरणमुच्यते। तथा च भोजवर्मणः (१२ शताब्द्याः) ताम्रपत्रम्—"जमदग्निप्रवराय वाजसनेयचरणाय यजुर्वेदकण्वशाखाध्यायिने··· ·····।" द्र० 'वैदिक वाङ्मय का इतिहास' संस्क० २, पृष्ठ १७३,१७४।

आस्था, व्यवस्था । **प्रष्ठोऽग्रगामिनि** (८।३।९२) साधुः । **सुपि स्थः** (३।२।४) इति कः—समस्थः । योगविभागाद् भावेऽपीष्यते—आखूत्थो वर्तते, अग्न्युत्थो वर्तते । **अम्बाम्बगोभूमि**(८।३।९७)इति षत्वम्—अम्बष्ठः, आम्बष्ठः, गोष्ठः, भूमिष्ठः । **द्यतिस्यति** (७।४।४०) इतीत्वम्—स्थितः । **गत्यर्थाकर्मक** (३।४।७२) इति क्तः—उपस्थितो गुरुं चैत्रः । **ग्लाजिस्थश्च क्स्नुः**[1] (३।२।१३९) स्थास्नुः । **लषपतपद** (३।२।१५४) इत्युकञ्—स्थायुकः । **स्थेशभास** (३।२।१७५) इति वरच्—स्थावरः । **घञर्थे कविधानं स्थास्नापाव्यधिहनियुध्यर्थम्**(३।३।५८ वा०) । प्रस्थः । **स्थागापापचो भावे**(३।३।९५)क्तिन्—स्थितिः। **अजिरशिशिर** (उ० १।५४) इति स्थिरस्थविरौ । **स्थाचतिमृजेर्** (उ० १।११६) इति स्थाली । **सव्ये स्थश्छन्दसि** (उ० २ १०२)इति ऋन्—सव्येष्ठा सारथिः, **स्थास्थिन्स्थूणाम्** (८।३।९७ तु० वा०)इति षत्वम् । **परमे स्थः किच्च**[2] इतीन्—परमेष्ठी ब्रह्मा । **स्थो णुः** (उ० ३।३७) स्थाणुः । **स्थः स्तोऽम्बजबकौ च** (तु० उ० ४।९६) स्तम्बः, स्तबकः । स्थायी **भविष्यति गम्यादयः** (३।३।३) प्रस्थायी । स्थूणा, स्थूरा जङ्घालोहपुत्तलिका ॥८९७॥

९९१. **म्ना अभ्यासे** । अभ्यासः पारम्पर्येण वृत्तिः । **म्नो मनः**(द्र० ७।३।७८)—आमनति । आम्नायः । **नामन्सीमन्** (उ०४।१५१)इति नाम ॥८९८॥

९९२. **दाण् दाने** । णकारो **दाणश्च सा चेद्** (१।३।५५) इत्यर्थः । **दाणो यच्छ** (द्र० ७।३।७८)—विप्राय यच्छति । **दाणश्च सा चेच्चतुर्थ्यर्थे** (१।३।५५) इति तङ्—दास्या सम्प्रयच्छते । घुकार्यम्—दीयते (द्र० ६।४।६६), सिज्लुक् (२।४।७७) अदात् । दायादो **मूलविभुजादित्वात्** (द्र० ३।२।५वा०), **आतोऽनुपसर्गे कः** (३।२।३) नास्ति[3] सोपसर्गत्वात् । **प्रे दाज्ञः** (३।२।६) अन्नप्रदः । गोदः (द्र० ३।२।३) । **दो दद्घोः** (७ । ४ । ४६) दत्तः । **अच**

---

१. 'ग्स्नु.' पाठा० ।

२. 'परमे स्थः कित्' इति (दश० उ० ६।६१)कपाठः । अमरटीकासर्वस्वकारोऽप्येवमेव पठति, भाग १ पृष्ठ १५,७५ । सरस्वतीकण्ठाभरणेऽपि (२।१।२९२) ।

३. दायाद इत्यत्र आङ्पूर्वत्वात् कस्य प्राप्तिर्नास्तीत्यर्थः ।

**उपसर्गात् तः** (७।४।४७) प्रत्तम्[1] । **दस्ति** (६।३।१२४) इति दीर्घः —वीत्तम् । **दाधेट्सिशदसदो रुः** (३।२।१५९)—दानशीलो दारुः॥८९९॥

६६३. **ह्वृ कौटिल्ये** । ह्वरति । छित्वरादौ (द्र० उ० ३।१) उपह्वरः ॥९००॥

६६४. **स्वृ शब्दोपतापयोः** । स्वरति । **समो गम्यृछि** (१।३।२९) तङ्-संस्वरते । **स्वरतिसूति** (७।२।४४) इति वेट्—स्वरिता स्वर्ता । **सनीवन्तर्ध** (७।२।४९) इति सिस्वरिषति सुस्वूर्षति । स्वरः । **शृस्वृस्निहि** (उ० १।११) इत्युः -स्वरुर्वज्रम् । स्वारयति । चुरादौ **स्वर आक्षेपे** (१०।२५१) अदन्तः [स्वरयति] ॥९०१॥

६६५. **स्मृ चिन्तायाम्** । स्मरति । **ज्ञाश्रुस्मृदृशां सनः** (१।३।५७) इत्यात्मनेपदम् सुस्मूर्षते । **स्मृ आध्याने** (१।५४४) मित्—स्मरयति । **अत् स्मृदृत्वर** (७।४।९५) इति असस्मरत् । स्मरः । स्मृतिः ॥९०२॥

६६६. **द्वृ वरणे**[2] । वरण स्थगनम् । द्वरति । घञ् (द्र० ३।३।

---

१. सूत्र उपसर्गग्रहणे सत्यपि अनुपसर्गादपि तकारादेशो भवति । यथा—'देवत्तम्' (ऋ० १।३७।४॥ ८।३२।२७) । देवेन देवैर्वा दत्त देवत्तम् । तत्पुरुषे तुल्यार्थतृतीया (अष्टा० ६।२।२) इति पूर्वपदप्रकृतिस्वरेण मध्योदात्त पदम् ।

२. काशकृत्स्नचन्द्रजैनशाकटायनीयेषु धातुपाठेषु क्षीरमैत्रेयदीक्षितादिकृतेषु धातुव्याख्यानेषु, च अविगीतत्वेन 'द्वृ' पठ्यते (अनादरे-मैत्रेयः, संवरणे दीक्षित.) । सत्यप्येवं सायणो धातुवृत्तौ(पृष्ठ ११७)'क्वचित् पठ्यते' इत्याह । हस्तलेखेषु प्रायेण 'वृ सवरणे' पाठ उपलभ्यते । वस्तुतस्तूभावपि स्वतन्त्रौ धातू । 'द्वृ' धातोः 'द्वाः, द्वारः' इत्यादयः सिध्यन्ति, 'वृ' धातोश्च 'वाः, वारः' इत्यादयो द्वारपर्यायाः । आसीच्च वार-शब्दस्य द्वारार्थे पुरा प्रयोगो लाटदेशे (सौराष्ट्रतो नीचैः) (द्र० तन्त्रवार्त्तिक १।३।२२) । अस्यैव वारशब्दस्य स्त्रीलिङ्ग 'वारी' पदं (बारी वा) गुर्जरबाहीकराजस्थानीयभाषासु सम्प्रति गवाक्षार्थे प्रयुज्यते (अत्र ह्रस्वार्थे स्त्रीप्रत्ययः । यथा—घट-घटी) । नीचीनबारं (ऋ० ५।८५।३) जिह्मबारं (ऋ० १।११६।९॥ ८।४०।५) इत्यादिषु प्रयुज्यमान ओष्ठ्यादिबारशब्दोऽप्येतदर्थक एव । तदर्थ 'वृ' धातुरूह्य. । प्रामादिक ो

१९) द्वारम्[1] । द्वारयतेरुणादिक्विन्[2] द्वाः [द्वारौ] द्वारः ॥९०३॥

**९९७. सृ गतौ ।** सरति, प्रसरति । **पाघ्राध्मा** (७।३।७८) इति वेगितयां गतौ धावादेशः[3]– धावति । **कृसृभृवृ** (७।२।१३) इति नेट्— ससृव । **सर्तिशास्त्यर्तिभ्यश्च** (३।१।५६) लुङि अङ् –असरत् । **उपसर्या काल्या प्रजने** (३।१।१०४) । **राजसूयसूर्य** (३।१।११४) इति सूर्यः । **प्रुसृल्वः समभिहारे वुन्** (३।१।१४९) सरकः । सर्तेर्वः[4] सरति सर्सति वा – सर्वः[4] । ण्वुल् अभिसारिका । **पुरोऽग्रतोऽग्रेषु सर्तेः** (३।२।१८) **टः**– पुरःसरः, अग्रतःसरः, अग्रेसरः । **पूर्वे[5] कर्तरि** (३।२।१९) पूर्वसरः । **सम्पृचा** (३।२।१४२) इति परिसारी । बाहुलकाद्[6] विसारी । **प्रे लपसृ** (३।२।१४५) प्रसारी । **उत्प्रतिभ्यामाङि सर्तेः** (३।२।७८ काशिका)– उदासारी. प्रत्यासारी । **जुचङ्क्रम्य** (३।२।१५०) इति युच् सरणः । **सृघस्यदः क्मरच्** (३।२।१६०) सृमरः । **सृ स्थिरे, व्याधिमत्स्यबलेषु च** (३।३।१७ सू० वा०) घञ्- चन्दन-

---

वा तत्र बत्वपाठः स्याद् इति तु न शक्यते वक्तुम्, वैदिकैरक्षरवर्णस्वरादीनां परम्परया सुरक्षिततत्वात् । न चर्ग्वेदीयास्तद्देशजा यत्र दन्त्योष्ठयस्थाने ओष्ठ्यो बकार उच्चार्यंते । निरुक्तकारस्तु द्वार-पदम्—'द्वारो जवतेर्वा द्रवतेर्वा वारयतेर्वा' (८।९) इति बहुधा निरवोचत् । तत्तु 'द्वृ' धात्वस्वीकारे द्रष्टव्यम् । प्रायेण हि नैरुक्ता वैयाकरणाश्च स्वकाले स्वसम्प्रदाये वा प्रसिद्धान् धातूनुपादायैव पदनिर्वचनानि ब्रुवते, न मूलधातुनिदर्शनाय प्रयतन्ते ।

१. पूर्वपृष्ठस्था (१४६) टि० २ द्रष्टव्या ।

२. उणादौ क्विन् 'जृशृस्तृजागृभ्यः क्विन्' (उ० ४।५४) इत्येकत्रैव पठ्यते । तत्र च इकारो नानुबन्धः । तस्मादत्र 'क्विप्' इति युक्तः पाठो द्रष्टव्यः । 'द्वाः इति ण्यन्तात् क्विपि' इति सायणवचनमप्यत्रानुकूलम् (द्र० धा० वृ० पृष्ठ ११७) । ३. अत्र ७।३।७८ सूत्रस्था काशिकावृत्तिरनुसन्धेया ।

४. उणादौ (१।१५२) वन्प्रत्ययान्तो निपात्यते ।

५. 'संज्ञायां पूर्वे' पाठा० ।

६. सपृचादि सूत्रे (३।२।१४२) परिपूर्वात् सरतेर्घिनुण्विधानाद् विपूर्वात् 'कृत्यल्युटो बहुलम्' (३।३।१३३) इति वचनात् घिनुण् द्रष्टव्य इति भावः । लिबिशमहोदयेनैतदपरिज्ञायात्र 'बहुलमेतन्निदर्शनम्' इति धातुसूत्रस्य (१०।३२५) संख्या निर्दिष्टा ।

सारः, अतीसारः, विसारः, सारम् । **प्रजने सर्तेः** (३।३।७१) अप्—उपसरो गवाम् । घञ्(द्र०३।३।१८,१९)आसारः,संसारः । बाहुलकाद्[1] विसरप्रसरौ । वुन् (द्र० ३।१।१४९) सरकः । **सर्तेर्णिद्** (**दश० उ०** ६।३०) इति थन्—सार्थः । **सरतेरसुन्** (द्र० दश०उ०९।१०१) अप्सु सृता अप्सरसः । **हसृरुहियुषिभ्य इतिः** (उ० १।९७)—सरित् । **असुन्** । (दश० उ० ९।४९)—सरः । **अर्तिसृधृधमि** (उ० २।१०२) सरणिः । **सर्तेरटिः**[2] (उ० १।१३४) सरट् । **शकादिभ्योऽटन्** (उ० ४।८१) सरटः कृकलासः । **सर्तेरयुः** (उ० ३।२२) सरयुः, सरयूर्नदी । **सर्तेरपः षुक् च** (उ० ३।१४१) सर्षपः । **अण्डन्कृसृ** (उ० १।१२९)इति सरण्ड. । **सर्तेर्नुर्क् च** (द० उ० ३।४२) इतीकक्—सृणीका लाला । **जनिदाच्युसृ** (दश० उ० १०।१५) इति निक्[3]—सृणिरङ्कुशः । **सर्तेर्णित्**(दश० उ० १।४३) सारथिः । ह्वादौ **ऋ सृ गतौ** (३।१७) सर्सर्ति । चुरादौ (१०।२५५ दुर्गमते) सारयति । युच् (द्र० ३।३।१०७) सारणा तन्त्रीयोजना । ल्युट् (द्र० ३।३।११७) सारणी सेककुल्या ॥९०४॥

६६८. **ऋ गतिप्रापणयोः** । ऋच्छादेशः (द्र० ७।३।७८) ऋच्छति । **समो गम्यृच्छिप्रच्छिस्वरत्यर्ति** (१।३।२९ काशिका) इत्यात्मनेपदम्—समृच्छते । **गुणोऽर्तिसंयोगाद्योः** (७।४।२९)अर्यते । **सूचिसूत्रिमूत्र्यटचर्त्यशूर्णोतीनाम्** (३।१।२२ वा०) यङ्—अरार्यते । **उपसर्गादृति धातौ** (६।१।९१) वृद्धिः उपार्छति । थलि - **इडत्त्यर्तिव्ययतीनाम्** (७।२।६६) आरिथ । **सर्तिशास्त्यर्तिभ्यश्च** (३।१।५६) इत्यङ्—आरत् । **स्मिपूङ्रञ्ज्वशां सनि** (७।२।७४) इतीट्—अरिरिषति । **अर्तिह्रीव्लीरी** (७।३।३६) इति पुक् अर्पयति, अर्पितः । **अर्यः स्वामिवैश्ययोः** (३।१।१०३), आर्योऽन्यः । अचि (द्र० ३।१।१३४) अरा । भिदादौ (गण० ३।३।१०४) **आरा शस्त्र्याम्** । **ऋणमाधमर्ण्ये**(८।२।६०), अन्यत्र ऋतम् । **अर्तिलूधूसूखन** (३।२।१८४) इतीत्रः **अरित्रं केनिपातकः** (अमरकोष १।१०।१३) **अर्तेश्चतुः**

---

१. अत्र लिबिशेनापरिज्ञाय न कापि सूत्रसंख्या निर्दिष्टा । अत्र पूर्वपृष्ठस्था टि० ६ द्रष्टव्या ।

२. '०रडि.' पाठा० ।

३. पञ्चपाद्या (४।१०४) क्निन्प्रत्ययः, दशपाद्यां तु निक् ।

(उ० १।७२) किच्च—ऋतुः। **अर्तेः किदिच्च** (उ० २।५१) इतीनच्—इरिणं निस्तृणं स्थलम्। **अर्तिसृधृ** (उ० २।१०२) इत्यरणिः। **अर्तिपृवपि** (उ० २।११७) इत्युस्—अरुर्मर्म। **अर्तेश्च** (उ० ३।६०) इत्युनन्—अरुणः। **अर्तेर्नित्** (दश० उ० ८।६) इत्यन्यच्-अरण्यम्। **अर्तिकमिभ्रमि** (उ० ३।१३२) इत्यरन्—अररं कपाटम्। उणादौ—**अच इः** (४।१३९) अरिः[1]। **अर्तिगृभ्यां भच्** (तु० उ० ३।१५२)—अर्भः, अर्भकः। **अर्तेश्च** (उ० ५।७) इत्यरतिः। अरत्निः (द्र० उ० ४।२)। **अर्तेर्भुक्षिणक्** (तु० दश० उ० ६।८२)—ऋभुक्षा इन्द्रः। **अर्तेः क्युज् उक्च** (तु० उ० ५।१७) उरणो मेषः। **अर्तेरू च** (उ० ४।४६ श्वेत०) इति मिः—ऊर्मिः। **स्नामदिपद्यर्तिपृशकिभ्यो वनिप्** (उ० ४।११३) अर्वा—अश्वः। **उषिकुषिगर्तिभ्यस्थन्** (उ० २।४)—अर्थः। **अर्तेरुच्च** (उ० ४।१९५) इत्यसुन्—उरो वक्षः। **अर्तेर्व्याधौ शुट् च** (तु० उ० ४।१९६) इत्यसुन्—अर्शः। **उदके नुट् च** (उ० ४।१९७) अर्णः। **अर्तिस्तुसुधुहु** (तु० उ० १।१४०) इति मन्—अर्मोऽक्षिरोगः। आरूः पिङ्गलः (द्र० उ० १।८५)। अर्यमन् (द्र० उ० १।१५९)। निरृतिः। अररुर्मर्कटः। ह्वादौ **ऋ सृ गतौ** (३।१७) इयर्ति ॥९०५॥

६६९. **गृ घृ सेचने**। गरति। घरति। **असु**[2] **नियतविषयमाहुः**[3]। **अञ्चिघृसिभ्यः क्तः** (उ० ३।८९) घृतम्। घृणा। चुरादौ **घृ स्रावणे** (१०।९८) तङानी—अभिघारयते[4]। ह्वादौ **घृ क्षरणदीप्त्योः** (३।१५) जिघर्ति। घर्मः। घृणिः ॥९०६,९०७॥

६७०. **ध्वृ हूर्छने**। हूर्छनं कौटिल्यम्। **छन्दसि निष्टर्क्यदेवहूय** (३।१।१२३) इति ध्वर्यः। न ध्वरोऽध्वरो यज्ञः ॥९०८॥

---

१. 'अररिः' 'आररिः' पाठा०। २. 'असु' इति कोशे पाठः।

३. तुलना कार्या—घरतिरस्मायविशेषेणोपदिष्टः। स घृतं घृणा घर्म इत्येवंविषयः (महा० ७।१।९५,९६) इति पतञ्जलिवचनं तु लोकविषयकम्, वेदे तिङन्तान्यपि दृश्यन्ते। अत्र 'अथापि नैगमेभ्यो भाषिकाः—उष्णम्, घृतम्' (२।१।२) इति निरुक्तवचनमप्यनुसन्धेयम्।

४. चुरादौ तु 'घृ स्रावणे, (१०।९८) इत्यत्र परस्मैपदमेवोदाह्रियते। कर्तृगामिनि फलेऽपि क्षीरस्वामी परस्मैपद मनुते (द्र० १०।१ व्याख्या)।

**६७१. शु श्रु गतौ**[1] । शवति । शुङ्गा प्ररोहः[2] । **श्रुवः शृ च** (३।१।७४) इति श्नुः—आशृणोति[3] चैत्राय, **प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता** (१।४।४०) सम्प्रदानम् । **समो गम्यृच्छि** (१।३।२९ का०) इति तङ्—संशृणुते । **कृसृभृ** (७।२।१३) इति नेट्—शुश्रोथ । **भाषायां सदवसश्रुवः** (३।२।१०८) क्वसुः—शुश्रुवान् । **ज्ञाश्रुस्मृदृशां सनः** (१।३।५७) आत्मनेपदम्—शुश्रूषते । **प्रत्याङ्भ्यां श्रुवः** (१।३।५९) नास्ति—प्रतिशुश्रूषति । **वौ क्षुश्रुवः** (३।३।२५) घञ् विश्रावः । **स्रवतिशृणोतिद्रवति** (७।४।८१) इत्योरित्त्वं वा—शिश्रावयिषति, शुश्रावयिषति; अशिश्रवत्, अशुश्रवत् । **ग्रहादौ** (द्र० ३।१।१३४) श्रावी, **श्रवीत्येके** । **हुयामाश्रुभसिभ्यस्त्रन्** (उ० ४।१६८)—श्रोत्रम् । उणादौ श्रवणोऽश्वत्थः[4] । ल्युट् (द्र० ३।३।११७) श्रवणं कर्णः । **असुन्** (द० उ० ९।४९) श्रवः । **वहिश्रियुद्रुश्रुग्लाहात्वरिभ्यो नित्** (तु० उ० ४।५१) इति निः—श्रोणिः ॥९०९,९१०॥

**६७२. षु प्रसवैश्वर्ययोः** । सवति । सोता । [कर्मणि—] सुषुवे । सुतः । सवनः । सवः[5] । अदादौ (२।३४) सौति । स्वादौ **षुञ् अभि-**

---

१. स्मृतोऽय पाठः पुरुषकारे (पृष्ठ ३१) । सायणादयो नेमौ पठन्ति । अत्र बहवः पाठभेदा दृश्यन्ते तत्तद्ग्रन्थेषु ।

२. पुरुषकारे तु कृष्णलीलाशुकमुनिराह—'क्षीरस्वामी तु शु श्रु गतौ इति पठित्वा शवति शृङ्ग प्ररोह, आशृणोति चैत्रायेति चोदाहृत्य' ···· ··· ··· (पृष्ठ ३१)। अत्र शुधातोः पाठात् पुरुषकारस्थः 'शृङ्ग' पाठस्त्वपपाठ एव ।

३. यदि 'श्रु' धातोः भ्वादिपाठे सत्यपि 'श्रुवः शृ च' इत्यनेन नित्य श्नुविकरणः स्यात् तर्ह्यस्य भ्वादिपाठोऽनर्थकः स्यात्, तथा सति स्वादावेवेमं पठेत्, सत्यप्येवं यदयमाचार्यः भ्वादौ पठति, श्नुप्रत्ययं च विदधाति, तेन न नित्य. श्नुविकरण इति ज्ञापयति । तथा सति 'श्रवति' इत्यादयोऽपि भौवादिकाः प्रयोगा. द्रष्टव्या. । (ऋग्वेदे शब्विकरणो बहुत्र श्रूयते) । काशकृत्स्नीयकन्नडटीकाया 'श्रवति—शृणोति' उदाह्रियते । तत्र 'शृणोति' निर्देशोऽर्थनिदर्शकः । लटि रूप तु 'श्रवति' इत्येव (पृष्ठ ५६) । तेन श्रवति शृणोति च स्वतन्त्रौ धातू । अत्र कृञ् करणे (१।६३९) धातोष्टिप्पणी ४ द्रष्टव्या (पृष्ठ १३६) ।

४. उज्ज्वलदत्तस्तु 'बहुलमन्यत्रापि' (उ० २।७८) इत्यत्र 'श्रवणा नक्षत्रम्' इत्याह ।

५. 'स्नानकालायतश्च सवः' पाठा० ।

**षवे** (५।१)—सुनोति ॥६११॥

६७३. **स्रु गतौ**[1]। स्रवति। **स्रवतिशृणोतिद्रवति** (७।४।८१) रित्योरित्त्वं वा–सिस्रावयिषति; सुस्रावयिषति; असिस्रवत् असुस्रवत्। **णिश्रिद्रुस्रुभ्यः कर्तरि चङ्** (३।१।४८) असुस्रुवत्। **क्विब्वचिप्रछि** (उ० २।५७) इति स्रूः कामरूपी[2]। स्रवः **स्रुवः कः**[3] (उ० २।६१) अपादाने। **चिक् च** (उ० २।६२) स्रुक्। **स्रुरीभ्यां तुट् च** (उ० ४।२०२) इत्यसुन् स्रोतः। अस्यतेः (४।१०४) अस्रुः (द्र० उ० ४।१०२)। **स्रुयजीषिस्तुभ्यः करणे क्तिन्** (३।३।६५ वा०) स्रुतिः। **प्रे द्रुस्तुस्रुवः** (३।३।२७) घञ् प्रस्रावः ॥६१२॥

६७४. **ध्रु स्थैर्ये**। ध्रवति। बाहुलकात् (द्र० ३।३।१) कः (द्र० उ० २।६१) ध्रुवः। तुदादौ (६।१००) ध्रुवति ॥६१३॥

६७५. **दु द्रु गतौ**। दवति। **दुन्योरनुपसर्गे** (३।१।१४२) णः—दावो वनाग्निः। **ऋदोरप्** (३।३।५७) दवः। **समि युद्रुदुवः** (३।३।२३) घञ्—संदावः। **दुतनिभ्यां दीर्घश्च** (उ० ३।९०) दूतः। द्रवति। द्रवः। द्रुतः। **बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः** (१।३।८६) इति णेः परस्मैपदम्–द्रावयति। **कृसृभृवृ** (७।२।१३) इति नेट्–दुद्रोथ। **णिश्रिद्रुस्रुभ्यः कर्तरि चङ्** (३।१।४८) अदुद्रुवत्। **स्रवतिशृणोति** (७।४।८१) इत्यभ्यासस्य ओरित्त्वम् दिद्रावयिषति, दुद्रावयिषति; अदिद्रवत्, अदुद्रवत्। **प्रे द्रुस्तु** (३।३।२७) इति प्रद्रावः। **समि युद्रु** (३।३।२३) इति सन्द्रावः। **उदि श्रयति** (३।३।४९) इत्युद्द्रावः। **प्रे लपसृद्रुमथ** (३।२।१४५) इति प्रद्रावी। **डुप्रकरणे** (३।२।१८० वा०) मितद्रुः। द्रुस्तरुः। द्रुमः। **हरिमितयोर्द्रुवः** (उ० १।३५) हरिद्रुः। **द्रुदक्षिभ्यामिनन्** (उ० २।५०)—द्रविणम्। **कृवृजृसि** (दश० उ० ५।४२) इति नः—द्रोणः। **वहिश्रि** (उ० ४।५१) इति निः—

---

१. 'स्वामी तालव्यादिममुं पपाठ श्रु श्रवणे' इति धातुवृत्तिः (पृ० १८१)। क्षीरतरङ्गिण्यां तु नैतादृशः पाठ उपलभ्यते।

२. 'कामरूपः' पाठा०।

३. 'स्रुवक' इति मूलपाठः, स चाशुद्धः। लिबिशेन नाय शोधितः। क्वचित् 'स्रुवकः' इति नास्ति।

द्रोणिः । **कृदिकारात्** (गण ४।१।४५ सूत्रम्) इति ङीषि द्रोणी ॥६१४,६१५॥

६७६. **जि.जृ अभिभवे**[1] । जयति । **विपराभ्यां जेः** (१।३।१६) आत्मनेपदम्—विजयते शत्रुम् । **पराजेरसोढः** (१।४।२६) इत्यपादानम् —अध्ययनात् पराजयते, अध्येतुं ग्लायतीत्यर्थः । **सन्लिटोर्जेः** (७।३।५७) कुत्वम् —जिगीषति, जिगाय । **क्रीङ्जीनां णौ** (६।१।४८) आत्वं —जापयति । **क्षय्यजय्यौ शक्यार्थे** (६।१।८१) । **विपूयविनीय** (३।१।११७) इति जित्यो हलिः । **संज्ञायां** (३।२।४६) धनञ्जयः । **अभिजित्** (द्र० ३।२।६१) । **ग्लाजिस्थश्च क्स्नुः**[2] (३।२।१३९) जिष्णुः । **इण्नशजि** (३।२।१६३) इति क्वरप् जित्वरः । **कृवापाजि** (उ० १।१) इत्युण्—जायुरौषधम् । **तॄभूवहिवसि** (उ० ३।१२८) इति झच्—जयन्तः । ल्युट् (द्र० ३।३।११७) उज्जयनी । **जेर्मुट् चोदात्तः** (उ० ३।९१)—जीमूतः । जरति । **ज्रि** इति **दुर्गः**—ज्रयति ॥६१६,६१७॥

६७७. **क्षि ऐश्वर्य इत्येके**[3] । क्षयति । ऋभुं क्षयति ईष्टे—ऋभुक्षा[4] ॥६१८॥

---

## [अथात्मनेपदिनः]

६७८. **स्मिङ् ईषद्धसने** । स्मयते, विस्मयते । **स्मिपूङ्रञ्ज्व** (७।२।७४) इतीट्—विसिस्मयिषते, **स्तौतिण्योरेव षणि** (८।३।६१) इति नियमात् षत्वाभावः । **भीस्म्योर्हेतुभये** (१।३।६८) तङ्, **नित्यं स्मयतेः** (६।१।५७) णावात्त्वम्—मुण्डो विस्मापयते[5] । **नमिकम्पि** (३।२।१६७) इति रः—स्मेरं हास्यम् ॥६१९॥

---

१. पुरुषकारे (पृष्ठ २५) 'जि ज्रि अभिभवे' इति मुद्रितपाठो दृश्यते, स चिन्त्य ।
२. 'ग्स्नु.' पाठा० ।

३. उतद्धृतमिदं पुरुषकारे (पृष्ठ २३) ।

४. उद्धृतमिद किञ्चित्पाठान्तरेण पुरुषकारे (पृष्ठ २३)। तत्र 'ऋभून् क्षयति ईष्टे ऋभुक्षेन्द्रः' इत्येवं पाठः ।

५. इतोऽग्रे 'करणात् स्मये नास्ति—कुञ्चिकयैनं विस्माययति' इत्यधिक क्वचित् ।

६७९. **गुङ् अव्यक्ते शब्दे**। गवते। गोता। गोत्रम्। **गू पुरीषोत्सर्गे इत्येके**—गवति, गविता। तुदादौ[1] गुवति, गुविता ॥६२०॥

६८०. **गाङ् गतौ**। एकद्विबहुत्वे—गाते, गाते, गाते। **इणो गा लुङि** (२।४।४५) अगात्। इह **गै शब्दे** (१।६५२) गायति ॥६२१॥

६८१. **घुङ् कुङ् उङ् शब्दे**। घवते। कवते। **न कवतेर्यङि** (७।४।६३) कुत्वम्—कोकूयते। यङ्लुकि नास्ति—**न लुमताङ्गस्य** (१।१।६३) इति[2]—चोकोति। **कुसुयुभ्यो दीर्घश्च** (तु० दश उ० ७।५) इति पः—कूपः। **कुवः क्ररन्** (उ० ३।१३३) कुररः। **कुवश्चट् दीर्घश्च** (उ० ४।६१)—कूचः, कूची[3]। **अच इः** (उ० ४।१३९)—कविः। अदादौ **कु शब्दे** (२।३५) कौति। तुदादौ (६।१०२) कुवते। अवते। लुङि—ओष्ट। **इः** (द्र० उ० ४।१३८)—अविः। ङुङ् इति च **दुर्गः**—ङवते। जुङुवे। **खुङ् चेत्येके** ॥६२२-६२४॥

६८२. **च्युङ् छ्युङ् ज्युङ् प्रुङ् प्लुङ्[4] गतौ**। च्यवते। **स्रवतिशृणोति** (७।४।८१) इति वाभ्यासस्योत इः—चिच्यावयिषति, चुच्यावयिषति; अचिच्यवत्। अचुच्यवत्। च्युवः। च्यवनः। छ्यवते। ज्यवते। **जुङ्** इति **नन्दी** जवते। **जुचङ्क्रम्य** (३।२।१५०) इति युच्—जवनः। **वृत्तिकृत्** तु **जुं सौत्रमाह**—जवः, प्रजवी। **जोरी च** (उ० २।२३) जीरम्। **ऊतियूतिजूति** (३।३।९७) इति जूतिः—**क्विब्वचि** (उ० २।५७) इति जूः पिशाचः[5]। प्रवते। कटप्रूर्नदीतारः[6]। पिप्रावयियषति, पुप्रावयिषति; अपिप्रवत्, अपुप्रवत्। **बुधयुधनश** (१।३।८३) इति ण्यन्तात् परस्मैपदम्—प्रावयति। प्रवणः। **प्रसृल्वः समभिहारे वुन्** (३।१।१४९) प्रवकः। प्रोथोऽश्वघोणाग्रम्[7]। प्लुङोऽप्येवम्। **भव्यगेय** (३।४।६८) इत्याप्ला-

---

१. तुदादौ क्षीरतरङ्गिण्यां नोपलभ्यते।

२. श्तिपा निर्देशात् कुत्वं न भवतीति भावः।

३. इतोऽग्रे 'कूच, कूचिका किलासभेदः' इत्यधिकं क्वचित्।

४. यत्र रेफस्य लत्वमुच्यते तत्र धात्वन्तरं द्रष्टव्यम्। यथाऽत्र 'प्रुङ् प्लुङ्' धातू।

५. द्र० दशपादी- उणादिवृत्ति १०।२ (पृ० ४२४)।

६ 'नदीभारः' पाठा०।

७. 'अश्वमुखाग्राम्' पाठा०। उणादौ २।१२ प्रोथो निपात्यते।

व्यश्चैत्रो नद्याः । पचादौ (द्र० ३।१।१३४) प्लवट्[1] । **विभाषाङि रुप्लुवोः** (३।३।५०) घञ्—आप्लावः, आप्लवः ।।६२५-६२६।।

६८३. **रुङ् गतिरेषणयोः** । रेषणं हिंसाशब्दः । रवते[2] । आरावः आरवः (द्र० ३।३।५०) । **सुयुरुवृञो युच्** (उ० २।७४) रवणः । **रुशतिभ्यां क्रुन्** (उ० ४।११२ श्वेत०) रुरुः । **अच इः** (उ० ४। १३६) रविः । अदादौ **रु शब्दे** (२।२६) रौति ।।६३०।।

६८४. **धृङ् अवध्वंसने**[3] । धरते । तुदादौ **धृङ् आधारे**[4] (६। ११५)—ध्रियते । चुरादौ **धृ धारणे**[5] धारयति । **अनुपसर्गाल्लिम्प-विन्द** (३।१।१३८) इति शः—धारयः । **संज्ञायां** (३।२।४६) वसुन्धरा । **इङ्धार्योः शत्रकृच्छ्रिणि** (३।२।१३०)—धारयन् । **अर्तिस्तुसु** (उ०१।१३६)इति मन्—धर्मः । **अर्तिसृधृधमि**(उ०२।१०२) इत्यनिः—धरणि, धरणी । **अचि** (द्र० उ० ३।१२४) धरोऽद्रिः, धरा भूः । भिदादौ (द्र० गण० ३।३।१०४) धारा । **अध्यायन्याय** (तु० ३।३। १२२काशिका) इत्याधारः ।।६३१।।

६८५. **मेङ प्रणिदाने**[6] । प्रणिदानं[7] प्रत्यर्पणम् । अपमयते, प्रणि-मयते । **सनि मीमाघु** (७।४।२४) इति मित्सते । **ह्वावामश्च** (३। २।२) इत्यण्—धान्यमायः । **उदीचां माङो व्यतिहारे** ( तु० ३।४। १६) क्त्वा—अपमित्य याचते, याचित्वा अपमयते, **मयतेरिदन्यतर-स्याम्** (६।४।७०), पक्षे अपमाय । **मापोरुरी च** (दश० उ० १। १५७) मेरुः, सुमेरुः । **माछाससिसूभ्यो यः** (तु० उ० ४।१०६)

१. 'प्लवः' पाठा० । टित्त्वान्ङीप्—प्लवी ।

२. उद्धृत पुरुषकारे(पृष्ठ ३२) ।

३. 'अविध्वसंने इति क्षीरस्वामी' इति पुरुषकारे (पृष्ठ ३७) पाठः ।

४. तुदादौ 'स्थाने' इति पठिष्यति क्षीरस्वामी ।

५. चुरादौ नायमुपलभ्यते । न च तुदादौ चौरादिक निर्द्रेक्ष्यति क्षीरस्वामी । स्मृतोऽय पाठः पुरुषकारे (पृष्ठ ३७) । सायणस्तु स्मृत्वा प्रत्याख्यातवान् (धातु० वृ० पृष्ठ १६३) ।

६. 'प्रणिधाने' पाठा० । 'प्रतिदाने' इति काशकृत्स्नः (पृष्ठ ६३) । तथैव कातन्त्रे (हस्तलेख पृ० ८) चान्द्रे १।४८०च ।

७. प्रणिधानम्' पाठा० ।

माया । **चन्द्रे मो डित्**[1] (तु०उ०४।२२८) इत्यमुन्—चन्द्रमाः । अदादौ **मा माने** (२।५५) माति । ह्वादौ **माङ् माने** (३।६) मिमीते ।६३२।।

६८६. **देङ्**[2] **रक्षणे** । दयते । **दयतेर्दिगि लिटि** (७।४।६)—अवदिग्ये । **मनिन्** (दश० उ० ६ ७३) दामा । **दाण् दाने** (१।६६२) यच्छति । **दैप् शोधने** (१।६५६) दायति मुखम् । अदादौ **दाप् लवने** (२।५२) दाति व्रीहीन् । ह्वादौ **डुदाञ् दाने** (३ ६) दत्ते, ददाति । दिवादौ **दो अवखण्डने** (४।३८) द्यति ।।६३३।।

६८७. **श्यैङ् गतौ** । श्यायते । **श्याद्व्यध** (३।१।१४१) इति णः, श्याग्रहणं सोपसर्गार्थम्—प्रतिश्यायः, अवश्यायः । **द्रवमूर्तिस्पर्शयोः श्यः** (६।१।२४) सम्प्रसारणम् शीनं घृतम्, **श्योऽस्पर्शे** (८।४।४७) नत्वम्, नेह—शीतो वायुः । **प्रतेश्च** (६।१।२५) स्फैयकूलस्य पिता प्रतिशीनः† । **विभाषाऽभ्यवपूर्वस्य** (६।१।२६) अभिशीनः, अभिश्यानः; अवशीनः, अवश्यानः । **इषियुधि** (उ० १।१४५ ) इति मक्—श्यामः, श्यामा, श्यामाकः । **श्यास्त्याहृञ्** (उ० २।४६) इतीनच्—श्येनः । **हृश्याभ्यामितन्** (उ० ३।९३) श्येतः ।।६३४।।

६८८. **प्यैङ् वृद्धौ** । आप्यायते । छित्वरादौ (द्र० उ० ३।१) पीवरः । **ध्याप्योः सम्प्रसारणं च** (उ० ४।११५) इति क्वनिप्—पीवा ।।६३५।।

६८९. **त्रैङ् पालने** । चौरात् त्रायते (द्र० १।४।२५) । **नुदविदोन्दत्रा** (८।२।५६) इति नत्वं वा—त्राणः, त्रातः । नित्यम्—

**देवत्रातो गलो ग्राह इतियोगे च सद्विधिः ।**
**मिथस्ते न विभाष्यन्ते गवाक्षः संशितव्रतः** । [महाभाष्य७।४।४१]
।।६३६।।

६९०. **अनुदात्ताः** ।।

६९१. **पूङ् पवने** । पवनं नीरजीकरणम् । इतश्चत्वारः सेटः ।

---

१. 'डित्' इति प्रायेणोणादौ पाठः । श्वेतवनवासिवृत्तौ क्वचिद् हस्तलेख 'चन्द्रे मो डित्' इत्येव उपलभ्यते । अपरस्मिन् 'चन्द्रे मो डिन्निच्च' इत्येव पाठान्तर दृश्यते (द्र०उ०वृ० पृष्ठ २०६) । † महाभाष्य १।१।१।।

२. 'दैङ् त्रैङ् पालने । दायते, त्रायते' इति काशकृत्स्नधातुपाठस्य कन्नडटीकायाम् (पृष्ठ९३) । तथैव कातन्त्रीयधातुपाठेऽपि (अस्मद्धस्तलेख पृष्ठ ८) ।

पवते। पविता। **स्मिपूङ्रञ्ज्वशां सनि** (७।२।७४) इतीट्, **ओः पुयण्ज्यपरे** (७।४।८०) इत्योरभ्यासस्येत्-पिपविषते। **विपूयविनीय** (३।१।११७) इति विपूयो मुञ्जे साधुः। **न भाभूपूकमि** (८।४।३४) इति कृति णत्वं नास्ति-प्रपवनीयम्। **पूङः क्त्वा च** (१।२।२२) इति क्त्वा-निष्ठयोर्वेट्- पूतः, पवितः; पूत्वा, पवित्वा। **पूङ्यजोः शानन्** (३।२।१२८) पवमानः। ल्युः (द्र० ३।१।१३४) पवनः। **निरभ्योः पूल्वोः** (३।३।२८) निष्पावः। **हलसूकरयोः पुवः**। (३।२।१८३) त्रन्—पोत्रम्। **कर्तरि चर्षिदेवतयोः** (३।२।१८६)इत्रन् पवित्रम्। **नप्तृनेष्टृत्वष्टृ** (उ० २।९५) इति पोता ऋत्विक्। **हसिमृग्रिण्वामि** (उ० ३।८६) इति तन्—पोतः शावको, नौभेदश्च। **छापूङ्खडिभ्यो गक्** (तु० उ० १।१२४)पूगः क्रमुकः, संघः। **पुवो ह्रस्वश्च** (उ० ४।१६५) इति क्त्रः—पुत्रः। **पूङो यण् णुड्ह्रस्वश्च** (दश० उ० ८।१६ कपाठः) —पुण्यम्। इः(तु०उ०४।१३८)पविः। क्र्यादौ पूञ् (९।११) पुनीते, पुनाति ॥९३७॥

९९२. **मूङ् बन्धने**। मवते। **ओः पुयण्ज्यपरे** (७।४।८०) मिमावयिषति। **मूङ्योर्लोपश्च** (तु० दश० उ० ९।१७)[1] इत्युषन्- तैजसावर्तनी मूषा (अमर० २।१०।३३)। **तनिमूङ्भ्यां किच्च**[2] (दश० उ० ६।८)- मूतः पुटबन्धः। जीवनस्य मूतः—जीमूतः, पृषोदरादिः (द्र० ६।३।१०९) ॥९३८॥

९९३. **डीङ् विहायसां[3] गतौ**। डयते। इण् निष्ठायाम्—डयितः, कित्त्वं नेष्टम्। दिवादौ **डीङ् गतौ**[4] (४।२५)डीयते, डीनः ॥९३९॥

---

१. सूत्रमिदं दशपाद्यामेवोपलभ्यते। तत्र 'मूङ्य्वोर्लोपश्च' इति पाठः। स एव च शुद्धः पाठः। क्षीरस्वामी दशपादीपाठ प्रायेणानुसरति। तत्रापि च कसञ्ज्ञकहस्तलेखस्थं पाठम्। अत्र क्षी० त० २।२५ धातुसूत्रव्याख्यायां यूष-पदसिद्धिर्द्रष्टव्या।

२. लिबिशेन 'मूङ्योर्लोपश्च' 'तनिमूङ्भ्यां किच्च' इत्यनयोराकरस्थाननिर्देशो नाकारि।

३. 'विहायसि' पाठा०। 'विहायसानां विहगानां गतौ' इति पुरुषकारः (पृष्ठ ३०)। ४. उद्धृतमिदं पुरुषकारे (पृष्ठ ३०)।

[अथ सेट् परस्मैपदी]

६६४. तॄ प्लवनतरणयोः । प्लवनं मज्जनम्, तरणं लङ्घनम् । तरति । तारकः । वृतो वा (७।२।३८) इतीटोऽलिटि वा दीर्घः – तरिता, तरीता; तेरिथ । न लिङि (७।२ ३९) तरिषीष्ट त्वया । सिचि परस्मैपदेषु (द्र० ७।२।४०)न दीर्घः अतारिष्टाम् । इट् सनि वा (७।२।४१) तितीर्षति, िततरिषति, िततरीषति, तॄफलभज (६।४।१२२) इत्येत्वाभ्यासलोपौ तेरुः । संज्ञायांभृतॄ (३।२।४६) इति खच् रथन्तरं साम । अवे तॄस्त्रोर्घञ् (३।३।१२०)अवतार । भिदादौ (गण० ३।३।१०४)तारा । ण्यन्तादचि (द्र० ३ । १ । १३४) तारो गुणः[1] । रदाभ्यां निष्ठातो नः (८।४।४२) तीर्णं । ॠकारल्वादिभ्यः क्तिन्निष्ठावत् (३।३।९४ काशिका)तीर्णि । पातॄतुदिवचि (उ०२।७) इति थक् तीर्थम् । अर्तिसृधृ (उ०२।१०२)इति तरणिः । वृकॄतॄ(तु० उ० ३।५३) इत्युनन्—तरुणः । ओरश्चलः(उ०१।५) तालु । वृतॄवदि (तु० उ० ३।६२) इति सः—तर्षं । कॄतॄकृपिभ्यः कीटन् (उ० ४।१८५)तिरीटं शिरोऽलङ्कारः । अवितॄस्तृ (तु० उ० ३।१५८)इतीः—तरीः । असुन् (दश० उ० ९।४९) तरस् । भृमृशीतॄ(तु० उ० १।७) इत्युः—तरु । अण्डन् (उ०१।१२९)इति प्राक्प्रत्ययात्[2] तरण्डः प्लवविशेषः । आदिभ्यश्च(दश० उ० ३।६०) इत्यङ्गच्—तरङ्गो वीचिः । पार तीर (१०।२९३) इत्यस्मात् तीरम् ।।९४०।।

६६५. उदात्ताः ।।

———

[अथानिट आत्मनेपदिनः]

६६६. गुप गोपने । इतो हृदान्ताः(१।७०३)अष्टावनिट आत्मनेपदिनश्च । गुप्तिज्किद्भ्यः सन् (३।१।५)—जुगुप्सते पापात् । निन्दायामुत्पत्तिचिकीर्षितम्, अन्यत्र गोपते[3] । गुपू रक्षणे (१।२८०) —गोपायति, आयप्रत्ययः (द्र० ३।१।२८) । चुरादौ भासार्थः (१०।१९७) गोपायति ।।९४१।।

---

१. 'घुण.' इति पाठः स्यात् ।

२. तुलनीयम्—प्राक्प्रत्ययनिर्देशः शरण्डादीनां प्रसिद्धयर्थः(दश० उ० वृ० ५।९) ।

३. 'गोपते' इति प्रत्युक्तः सायणेन (धातु० पृष्ठ १८८) ।

६९७. **तिज निशाने क्षमायाञ्च** । निशानं तीक्ष्णीकरणम् । तितक्षते कोपम् । क्षमायामुत्पत्तौ सन्विधेर् (द्र० ३।१।५) निशाने प्रत्ययान्तरं ज्ञाप्यते -तेजते[1] । तेजः । तेजनम् । तेजनी । **युजिरुचितिजां कुश्च** (उ० १।१४६) इति मक्- तिग्मम् । **तिजेर्दीर्घश्च** (उ० ३।१८) इति स्न.[2] – तीक्ष्णः । **चुरादौ** (१०।१००) उत्तेजयति।।६४२।।

· ६९८. **मान पूजायाम्** । **मान्बधदान्शान्भ्यः** (३।१।६) इत्युत्पत्तौ विचारे सन् – मीमांसते । मीमांसा विचारणा । चुरादौ (१०।२३१) **आधृषाद् वा** (१०।२०१) इति मानयति, मानति । मानः । माननम् । **नप्तृनेष्टृ** (उ० २। ९६) इति माता ।।६४३।।

६९९. **बध बन्धने** । **मान्बध** (३।१।६) इति जुगुप्सायां सन् – बीभत्सते । अन्यत्र – बाधते । बधकः । चुरादौ **बध संयमने** (१०।२४) बाधयति ।।६४४।।

७००. **रभ राभस्ये** । राभस्यं कार्योपक्रमः । संरभते, आरभते । **सनि मीमाघु** (७।४।५४) इतीण् – आरिप्सते । **पोरदुपधात्** (३।१।९८) यत् – आरभ्यम् । **रभेरशब्लिटोः** (७।१।६३) नुम् – आरम्भः, आरम्भणम् । अच् ( द्र० ३ । १ । १३४ वा० ) – रम्भः, रम्भा । **शकधृषज्ञा** (३।४।६५) इति तुमुन् – आरभते भोक्तुम् । **अत्यविचमि** (उ० ३।११७) इत्यसच् – रभसो निर्विचारा प्रवृत्तिः ।।६४५।।

७०१. **डुलभष्**[3] **प्राप्तौ** । लभते । लब्धिमम् (द्र० ३।३।८८; ४।४।२०) उपलभा (द्र० ३।३।१०४) । बाहुलकाल्[4] लब्धि.[5] । **लभेश्च**

---

१. 'तेजते' प्रत्युक्तः सायणेन (धा० पृ० १८८) ।

२. 'क्स्न.' इति युक्त पाठ ।

३. हरदत्तः 'डुलभँष्' इति सानुनासिकपाठं मनुते । यदाह – 'यत्राचार्याः स्मरन्ति तत्रैव सूत्रकारेण तावद्विवक्षिता सर्वे सानुनासिकाः पठिताः डुलभँष् प्राप्तावितिवत् । पदमञ्जरी १।३।२।। (भाग १, पृष्ठ २१४) ।

४. अत्र लिबिशेन भ्रान्त्या 'बहुलमेतन्निदर्शनम्' (१०।३२५) इत्यस्य सख्या निर्दिष्टा । अत्र पूर्वत्र (पृष्ठ १३७) निर्दिष्टा टिप्पणी (५) द्रष्टव्या ।

५. अत्रापि लिबिशेन भ्रान्त्या काशिकायाः ३।३।९३ सख्या निर्दिष्टा । काशिकाकारस्तु लब्धिपद 'क्तिन्नाबादिभ्य.' इति वार्तिकेन साधयति, क्षीरस्वामी तु बहुलग्रहणात् क्तिनमाह ।

(७।१।६४) इति नुम्—आलम्भः, विलम्भनम्[1] **विभाषा चिण्णमुलोः** (७।१।६९) अलाभि, अलम्भि, सोपसर्गान् नित्यमाहुः (द्र० ७।१। ६९ काशिका०) व्यलम्भि। लाभंलाभम्। लम्भंलम्भम्। **उपसर्गात् खल्घञोः** (७।२।६७) ईषल्लम्भः, सुप्रलम्भः। **न सुदुर्भ्यां केवलाभ्याम्** (७।१।६८) सुलभम्, दुर्लभम्। **आङो यि** (७।१।६५)—आलम्भ्यम्। **उपात् प्रशंसायाम्** (७।१।६६) उपलम्भ्यम्। **सनि मीमाघु** (७।४। ५४) इति लिप्सते। लभते भोक्तुम् (द्र० ३।४।६५) ॥९४६॥

७०२. **ष्वन्ज परिष्वङ्गे। दंशसन्जस्वन्जां शपि** (तु० ६।४।२५) इति न लोपः, **उपसर्गात् सुनोति** (८।३।६५) इति षत्वम्-परिष्वजते।

---

१. वस्तुतः सानुषङ्गा 'आरम्भः, आरम्भणम्; आलम्भः, विलम्भनम्' इत्येवमादय प्रयोगा न रभलभधात्वो, किन्तर्हि सानुषङ्गयोर्धात्वन्तरयोः रम्भलम्भयोः। अनयोः धात्वन्तरे किं मानमिति चेद् ब्रूमः, यत्रानयोर्नुम् विधीयते तत्र नुमाभावस्यापि प्रयोगदर्शनात्। तद्यथा—

(क०) चरकसंहितायाम् (चिकित्सा १९।४) 'आदिकाले यज्ञेषु पशवः समालभनीया बभूवु, नालम्भाय प्रक्रियन्ते स्म' इति वाक्ये लभलम्भयोः पृथक् पृथक् प्रयोगदर्शनात्, अर्थान्तरश्रवणाच्च।

(ख) काशिकायाम् (७।१।६५) उद्धृते 'अग्निष्टोम आलम्भ्यः' इति श्रौतवाक्ये प्राप्तोऽपि नुम् न श्रूयते।

(ग) काशकृत्स्नधातुपाठीयकन्नडटीकाया 'रभलभधात्वो. 'रभकः, रभः, रभमाण., रभणीयम्, लभिः, लभनम्, लभक., लभमान' इत्यादिप्रयोगेषु नुमोऽदर्शनात् (द्र० १।५६३, ५६४; पृष्ठ ६४)।

(घ) यवासस्य (धमासा) इत्याख्यस्य दुरालभा दुरालम्भेति द्वे नाम्नी शालिग्रामनिघण्टौ। अमरकोशस्य (२।४।९४) क्षीरस्वामिनो व्याख्याऽपि द्रष्टव्या।

तदेव लभलम्भयोः पार्थक्येऽर्थान्तरे च सति 'ब्रह्मणे ब्राह्मणमालभते' (तै० ब्रा० ३।४।१—१८) इत्यादिषु आलभते इत्यस्य नालम्भनार्थः, अपि तु 'हृदयालभते' (पार० गृह्य १।८) इत्यादिवत् स्पर्शार्थ एव। वस्तुतस्तु लाघवमिच्छद्भिः पाणिन्यादिभिराचार्यैरेकमेव धातुं पठित्वा द्विप्रकृतीनां शब्दाना साधुत्वमन्वाख्यातम् (अत्र निरुक्तस्य २।२ तद्यत्र स्वारादनन्तरान्तस्थान्तर्धातुर्भवतीत्यादिप्रकरणमनुसन्धेयम्)।

**सदिस्वञ्जोः परस्य लिटि** (तु० ८।३।११८) इति षत्वं नास्ति, **श्रन्थिग्रन्थिदम्भिस्वञ्जीनां च** (द्र० १।२।६ का०) इति कित्त्वम्—परिषस्वजे। **प्राक् सितादड्व्यवायेऽपि** (८।३।६६) इति षत्वम्—पर्यष्वजत। **सिवादीनां वाड्व्यवायेऽपि** (८।३।७१) इति षत्वं वा—पर्यस्वजत। अस्वङ्क्थाः, इडपीष्टः[1]—अस्वञ्जिष्ठाः। **जान्तनशां विभाषा** (६।४।३२) क्त्वि न लोपः—स्वङ्क्त्वा, स्वक्त्वा ॥६४७॥

७०३. **हद पुरीषोत्सर्गे**। हदते। हन्नम्। **हन्ये पाने न गोमयम्**[2] इति प्रमादात् ॥६४८॥

७०४. **अनुदात्ता अनुदात्तेतः**।

७०५. **ञिक्ष्विदा अव्यक्ते शब्दे**, ७०६. **उदात्त उदात्तेत्**। क्ष्वेदति। क्ष्वेदिता। **आदितश्च** (७।२।१६) इति नेट् क्ष्विण्णः। **विभाषा भावादिकर्मणोः** (७।२।१७) क्ष्विण्णम्, क्ष्वेदितम्; प्रक्ष्विण्णः, प्रक्ष्वेदितः। **निष्ठा शीङ्स्विदिमिदिक्ष्विदिधृषः** (१।२।१९) इति सेटो निष्ठायां न कित्त्वम्। **ञिक्ष्विदा** (४।१३४) क्ष्विद्यति, अक्ष्विदत् ॥ ६४९॥

७०७. **स्कन्दिर् शोषणे**। इतः कितपर्यन्ताः (१।७२०) पञ्चदशानिटः परस्मैपदिनश्च। स्कन्दति,। स्कद्यते। **परिस्कन्दः प्राच्यभरतेषु** (७।३।७५) वा षत्वम्—परिष्कण्णः, परिस्कन्नः। **वेः स्कन्देरनिष्ठायाम्** (८।३।७३) वा षत्वम्—विष्कन्दति, विस्कन्दति; नेह—विस्कन्नः। **परेश्च** (८।३।७४) परिष्कन्दति, परिस्कन्दति। प्रास्कन्दत्, प्रास्कन्दीत्। **नीग्वञ्चु** (७।४।८४) इति चनीस्कद्यते। **स्कन्देः सलोपश्च** (उ०१।१५) इत्युः—कन्दुः स्वेदनी। अचि (द्र० ३।१।१३४) स्कन्दः। **स्कन्देश्च स्वाङ्गे** (उ०४।२०६) धः—स्कन्धः। **क्त्वि स्कन्दिस्यन्दोः** (६।४।३१) इति नलोपो नास्ति—स्कन्त्वा। **विशिपतिपदिस्कन्दां** (३।४।५६) णमुल्—गेहावस्कन्दमास्ते ॥६५०॥

७०८. **यभ विपरीतमैथुने**। यभति। यब्धा। यभ्यम्। **जभि च**

---

१. अनिट्त्वान्न प्राप्नोति।

२. कोऽभिप्रायः, कुत्रत्यश्चायं पाठ इति न ज्ञायते। 'हन्ये' इत्यस्य स्थाने 'हन्ने' इति शुद्धः पाठो द्रष्टव्यः। 'हन्यमानः गायति प्रमादात्' पाठा०।

इति **दौर्गाः**[1]—जम्भति ॥६५१॥

७०९. **णम प्रह्वत्वे ।** प्रह्वत्वं नम्रत्वम् । प्रणमति । कर्मकर्तरि **न दुहस्नुनमां यक्चिणौ** (३।१।८९) नमते दण्डः स्वयमेव, अनंस्त । **यमरमनमातां सुक्**[2] (तु० ७।२।७३) अनंसीत् । **ज्वलह्वलह्मलचलनमाम् ।** (१।५५५) इति वा मित्—नामयति, नमयति । उपसर्गान् नित्यम्—प्रणमयति । **नमिकम्पि** (३।२।१६७) इति रः- नम्रः । **फलिपाटि** (उ० १।२८) इति नाकुर्बल्मीकम् ॥६५२॥

७१०. **गम्लृ सृप्लृ गतौ ।** **इषुगमियमां छः** (७।३।७७) गच्छति । **समो गम्यृछि** (१।३।२९) इति तङ्—संगच्छते । आगमत् (द्र० ३।१।५५) **गमहनजन** (६।४।९८) इत्युपधालोपः जग्मुः । **विभाषा गमहन** (७।२।६८) इति क्वसौ वेट्—जग्मिवान्, जगन्वान् । **गमेरिट् परस्मैपदेषु** (७।८।५८) गमिष्यति, जिगमिषति । **वा गमः** (१।२।१३) इति वा लिङ्सिचोः कित्त्वम्—संगसोष्ट, संगंसीष्ट; समगत, समगंस्त । **अज्झनगमां सनि** (६।४।१६) इतीणादेशस्य गमेर्दीर्घविधेः (द्र० काशिका ६।४।१६), अस्य नास्ति—संजिगंसते । **गमश्च** (३।२।४७) इति खच्—प्लवंगमः[3] । **खच्च डित्** (३।२।३८ वा०) प्लवंगः[3] । डः (द्र० ३।२।३८, ४८ भाष्य) प्लवगः[3] । **विहायसो विह च** (३।३।३८ वा०) विहंगमः । **डे च** (३।२।२८ वा०) विहगः । विहंगः (द्र० ३।२।३८ वा०) **उरसो लोपश्च** (३।२।४८ वा०) उरगः । उरंगमोऽपीति **केचित्** । त्वरस्य तुरादेशः—तुरंगमः । **लषपत** (३।२।१५४) इत्युकञ्—आगामुकः । **गत्वरश्च** (३।२।१६४) । **सितनिगमि** (उ० १।७०) इति तुन्—आगन्तुः । **गन् गम्यदेः**(दश० उ० ३।६२)गङ्गा । **गमेर्डोः** (उ० २।६७) गौः । **वर्तमाने पृषत्** (उ० २।८४) इति जगत् । नीलंगुः (द्र० उ० १।३७) क्रिमिः । **गमेर्गश्च** (उ० २।७७) इति क्युन्[4]—गगनम् । **भविष्यति गम्यादयः** (३।३।३) **गमेरिनिः** (उ० ४।६) गमी ग्रामम् । **आङि णित्** (उ० ४।७)आगामी । **गमेरा च**(उ०४।१६९)इति त्रन्—गात्रम् । **ग्रहवृदृनिश्चिगमश्च**(३।३ ५८)

---

१. काशकृत्स्नस्तु 'यभ जभ मैथुने' इत्याह (१।३५८ पृष्ठ ५७) जभिधातुस्तु गर्वे पठ्यते (१।३६१; पृष्ठ ५७) । २. 'सक्' इति काशिका ।

३. 'प्रवङ्गमः, प्रवङ्गः, प्रवग' पाठ० ।

४. अनेन सूत्रेण ट्युच् विधीयते, न क्युन् ।

इत्यप् नमः। **गोचरसंचर** (३।३।११९) इति निगमो वेदादिः। सर्पति, असृपत्। सर्पोऽचि। के (द्र० ३।१।१३५) सृपः। **स्फायि** (उ० २।१३) इति रक्-सृप्रश्चन्द्रमाः, सृपा नाडी। **अर्चिशुचि** (उ० २।१०८) इतीस्-सर्पिः ॥६५३-६५४॥

७११. **यम उपरमे**। उपरमो निवृत्तिः। **इषुगमियमां छः** (७।३।७७) यच्छति। **उपाद् यमः स्वकरणे** (१।३।५६) तङ्-स्वकरणं परिणयः[1]- उपयच्छते कन्याम्। **आङो यमहनः** (१।३।२८) आयच्छते। **समुदाङ्भ्यो यमोऽग्रन्थे** (१।३।७५) संयच्छते। **यमो गन्धने** (१।२।२५) कित्त्वम्-उदायत। **विभाषोपयमने** (१।२।१६) उपायत, उपायंस्त। **यमरमनमातां सुक्[2] च** (तु० ७।२।७३) अयंसीत्। यंयम्यते (द्र० ७।४।८५)। **यमोऽपरिवेषणे** (१।५५९) मित् नियमयति। **वाचि यमो व्रते** (३।२।४०) खच्, **वाचंयमपुरन्दरौ** (६।३।६९)। अच् (द्र० ४।१।१३४) यमः। नियतः। यतिः। नियतिः। **न पादमि** (१।३।८९) इति तङ्-आयामयते। **यमः समुपनिविषु च** (३।३।६३) इति वा घञ्-संयमः, संयामः, उपयमः, उपयामः; नियमः, नियामः; वियमः, वियामः। **ष्ट्रन्** (द० उ० ८।७९) यन्त्रम्। उदिदिति **श्रीभोजः**[3]-यत्वा, यमित्वा ॥६५२॥

७१२. **तप संतापे**। तपति। **निसस्तपतावनासेवने** (८।३।१०२) षत्वम्-निष्टपति। **उद्विभ्यां तपः** (१।३।२७) तङ्-उत्तपते, वितपते। **स्वाङ्गकर्मकाच्च** (१।३।२७ वा०) उत्तपते पृष्ठम्। **तपस्तपःकर्मकस्यैव** (३।१।८८) कर्तुः कर्मत्वम् तप्यते तपस्तापसः, तपोऽर्जयतीत्यर्थः। **तपोऽनुतापे च** (३।१।६५) इति न यक्चिणौ-अतप्त तपस्तापसः, अन्ववातप्त पापेन कर्मणा। नन्द्यादौ (गण० ३।१।१३४) तपनः सूर्यः। **असूर्यललाटयोर्दृशितपोः** (३।२।३६) खश्-ललाटन्तपः। **द्विषत्परयोस्तापे** (३।२।३९) द्विषन्तपः, **संज्ञायाम्** (३।२।४६) परन्तपः[4]। **असुन्** (द० उ० ९।४९) तपः ॥६५६॥

---

१. भाष्यकारस्तु स्वकरणमात्र आह। २. 'स्न्क' पाठा०। 'सक्' इति काशिका। ३. द्र० पुरुषकारः, पृष्ठ १००।

४. परन्तपस्तु 'द्विषत्परयोस्तापे' (३।२।३९) इत्यनेनैव सिद्धयति। अत्र कश्चित् पाठभ्रंशो जातः। "द्विषन्तपः, परन्तपः। संज्ञायाम् (३।२।४६) शत्रुंतपः" इति युक्तः पाठः स्यात्।

७१३. **त्यज हानौ**। हानिस्त्यागः। त्यजति। त्याज्यम्—**त्यजियज्योः कुत्वं नेष्टम्**[1] ॥६५७॥

७१४. **षन्ज सङ्गे**। **दन्शसन्जस्वन्जां शपि** (तु० ६।४।२५) नलोपः, **उपसर्गात् सुनोति** (८।३।६५) इति षत्वम् व्यतिषजति। **स्थादिष्वभ्यासे चाभ्यासस्य** (८।३।६४) अभिषषञ्ज। **जान्तनशां विभाषा** (६।४।३२) क्त्वि नलोपः सक्त्वा, सङ्क्त्वा। उत्सङ्गोऽङ्कः। प्रासङ्गः। निषङ्गस्तूणी[2]। **असिसञ्जिभ्यां क्थिन्** (उ० ३।१५४) सक्थि ॥६५८॥

७१५. **दृशिर् प्रेक्षणे**। **पाघ्राध्मा** (७।३।७८) इति पश्यादेशः—पश्यति। **समो गम्यृच्छि** (१।३।२९) इत्यत्र[3] **दृशेश्च** (१।३।२९ काशिका) इति तङ्—संपश्यते। **विभाषा सृजिदृशोः** (७।२।६५) थलीट्—ददर्शिथ, दद्रष्ठ। **सृजिदृशोर्झल्यमकिति** (६।१।५८) इत्यमागमः—द्रष्टा। **स्यसिच्सीयुट्तासिषु** (६।४।६२) इति चिण्वदिट् च—दर्शिष्यते त्वया। **इरितो वा** (३।१।५७) इत्यङ्, **ऋदृशोऽङि गुणः** (७।४।१६)—अदर्शत, अद्राक्षीत्, **न दृशः** (३।१।४७) इति क्सो नास्ति। **ज्ञाश्रुस्मृदृशां सनः** (१।३।५७) तङ्—दिदृक्षते। चङि **उर्ऋत्** (७।४।४७) वा—अददर्शत्, अदीदृशत्,। **अभिवादिदृशोरात्मनेपदे** (१।४।५३ वा०) वा कर्तुः कर्मसंज्ञा—राजा दर्शयते भृत्यान्, भृत्यैर्वा। **पाघ्राध्माधेड्दृशः शः** (तु० ३।१।१३७) उत्पश्यः। **असूर्यललाटयोर्दृशितपोः** (३।२।३६) खश्—असूर्यम्पश्या राजदाराः। **उग्रम्पश्येरम्मदपाणिन्धमाश्च** (३।२।३७)। **त्यदादिषु दृशोऽनालोचने कञ्च** (३।२।६०) तादृक्, तादृशः। तादृक्षः (द्र० ३।२।६० काशिका)। **समानान्ययोश्च** (३।२।६० वा०) सदृशः, अन्यादृशः। **दृशे क्वनिप्** (३।२।९४) पारदृश्वा। दर्शः, आदर्शः। **अर्जिदृशिकम्यमि** (उ० १।२७) इति पशुः। **भाषायां शासियुधिदृशिधृषिमृषिभ्यो युच्** (३।३।१३०

---

१. यजेर्ण्यति कुत्वाभावः 'यजयाच' ७।३।६६ इत्यनेनैव सिद्धः, त्यजेश्च 'ण्यति प्रतिषेधे त्यजेरुपसंख्यानम्' इति तत्रस्थेनैव वार्त्तिकेन।

२. तूणी इषुधिः। द्र० अमर २।८।८९।

३. 'इति वर्तमाने' पाठा०।

वा०) सुदर्शनः । **कर्मणि दृशिविदोः साकल्ये** (३।४।२९) णमुल् – कन्यादर्शं वरयति ॥६५९॥

७१६. **दन्श दशने** । दशनं दन्तकर्म । **दन्शसन्जस्वन्जां शपि** (तु० ६।४।२५) इति नलोपः – दशति । **लुपसद** (३।१।२४) इति भावगर्हायां यङ् – **जपजभदहदश** (७।४।८६) इति अनुस्वारागमः - दन्दश्यते । **यजजपदशां यङः**-(३।२।१६६)इत्यूकः दन्दशूकः । **कर्मण्यण्** (३।२।१) वृषदंशो मार्जारः । **दशने** (धातुसूत्र १।७१६) इति निर्देशात्[1] नलोपः । **उपदंशस्तृतीयायाम्** (३।४।४७) इति णमुल् – मूलकोपदशं भुङ्क्ते । **दाम्नी** (३।१।१८२) इति ष्ट्रन् दंष्ट्रा । **नुदंशो गुणश्च** (तु० उ० १।१४९ नारा०) दश । [2]**षिद्भिदादिभ्योऽङ्** (३।३।१०४) दशा वर्त्तिरवस्था च, दशा वस्त्रान्तावयवाः ॥६६०॥

७१७. **कृष विलेखने** । विलेखनं हलोत्किरणम् । कर्षति । तुदादौ (६।६) कृषति । **स्पृशमृषकृषतृपदृपां सिज्वा** (३।१।४४ वा०) अक्राक्षीत्, अकार्क्षीत्; पक्षे क्सः अकृक्षत् । **उरृद्** (७।४।७) वा – अचकर्षत् अचीकृषत् । नन्द्यादौ (गण० ३।१।१३४) संकर्षणः । अचि (द्र० ३।१।१३४)कर्ष, आकर्षो द्यूतफलकम् । **सप्तम्यां चोपपीडरुधकर्षः** (३।४।४९) भ्राष्ट्रोपकर्षं धानाः खादति । **कृषिचमितनि** (उ० १।८०) **इत्यूः** -- कर्षूः । **इक् कृष्यादिभ्यः** (३।२।१०८ वा०) कृषिः । **कृषेर्वृद्धिश्चोदीचाम्** (उ० २।३८) कर्षकः कार्षकः । **वृश्चिकृषोः किकन्** (द० उ० ३।१२) कृषिकः । **कृषेरादेश्च चः** (द०उ०१।४) चर्षणिर्वेश्या[3] । **कृषेर्वर्णे** (उ० ३।८) नक् कृष्णः ॥६६१॥

७१८. **दह भस्मीकरणे** । दहति । **लुपसदचर** (३।१।२४) इति यङ् —दन्दह्यते । **दादेर्घः**[4] (कातन्त्र ३।८ ५७) दग्धा, धक्ष्यति (द्र० ८।२।३७) न्यङ्क्वादौ (गण० ७।३।५३) दाघः, निदाघः, अवदाघो भक्ष्ये[5] । अवदाहोऽन्यः ॥६६२॥

७१९. **मिह सेचने** । मेहति । मेहनम् । क्वसि मीढ्वान् (द्र० ६।

---

१. स्मृत धातुवृत्तौ (पृष्ठ १९९) ।

२. इत आरभ्य आ अन्त क्वचिन्न । ३. द्र० हैमोणादि ६४१ ।

४. अत्र लिबिशेन पाणिनिसूत्रस्य पाठान्तर मत्वा तदीयसूत्रसख्या निर्दिष्टा।

५. न्यङ्क्वादिगणे– 'सञ्ज्ञायामघविदाघनिदाघाः' इत्येव पठ्यते ।

१।१२ **दाम्नी** (३।२।१८२) इति ष्ट्रन् -मेढ्रम्[1] । न्यङ्क्वादौ (गण० ७।३।५३) मेघः ।।६६३।।

७२०. **कित निवासे रोगापनयने च । गुप्तिज** (३।१।५) इत्युत्पत्तौ सन्—चिकित्सति । चकरात् संशये च-विचिकित्सति । निवासे नास्ति केतति । केतनम् । संकेतः । केतुः । केतकी । चुरादौ **केत निश्रावणे** (१०।२७७) संकेतयति ।।६६४।।

७२१. **अनुदात्ता उदात्तेतः** ।।

७२२ **दान अवखण्डने ।** इतो वहान्ता (१।७३१) दशानिट उभयपदिनश्च । **मान्वधदान्शान्भ्यो दीर्घश्चाभ्यासस्य** (३।१।६) इति सन् दीदासते, दीदासति ।।६६५।।

७२३. **शान तेजने** । शीशांसते शस्त्रम्, शीशांसति ।।६६६।।

७२४. **डुपचँष् पाके ।** सानुनासिकोऽकारः सर्वेषामुपलक्षणार्थः[2] । **उपदेशेऽजनुनासिक इत्** (१।१।८) इतीत् संज्ञा यथा स्यात् । पचते, पचति । पक्त्रिमम् । षित्त्वात्(द्र० ३।३।१०४)अङ्- पचा । **स्थागापापचो भावे** (३।३।९५) क्तिन्-पक्तिः । **पचो वः** (८।२।५५) पक्वम् । पचादौ(गण० ३।१।१३४) श्वपचः । **अणपीष्यते**—श्वपाकः मांसपाकः न्यङ्क्वादिः (गण० ७।३।५३), तत्रैव निपातनात् कर्मकर्तरि उण्[3]— दूरेपाकुः फलेपाकुः । **परिमाणे पचः** (३।२।३३) खश् – द्रोणम्पचः । **मितनखे च** (३।२।३४) मितम्पचः[4], नखम्पचः । **राजसूयसूर्य** (३।१।११४) इति कृष्टपच्यः । **अलङ्कृञ्** (३।२।१२६) —इत्युत्पचिष्णुः । **पचेलिमाः कर्मकर्तरि** (द्र० काशिका ३।१।९६) पचेलिमा माषाः । **मांसस्य पचि युड्घञोः** (द्र० का० ६।१।१४४) लोपो वा— मांस्पाकः मांसपाक , मांस्पचनम्[5] मांसपचनम्[5] ।।६६७।।

---

१. मेढ्.' पाठा० ।

२. तुलनाकार्या— 'यत्राचार्या स्मरन्ति तत्रैव सूत्रकारेण तावद्विवक्षिताः सर्वेऽनुनासिका. पठिता डुलभँस् प्राप्तौ इतिवत् । लेखकैस्तु सकीर्णा लिखिता. । पदमञ्जरी १।३।२ (भाग १, पृष्ठ २१४) ।।।

३. 'उञ्' पाठा०। ४. इतोऽग्रे 'कृपणः । आत्मनेपदे किं पचान ' इति क्वचिदधिकम् । अत्र अमरकोशो (३।१।४८) द्रष्टव्यः ।

५. 'मांस्पचनी, मासपचनी' पाठा० ।

७२५. **भज सेवायाम्** । भजते भजति । **तृफलभज** (६।४।१२२) इति भेजे, भेजुः । **भजो ण्विः** (३।२।६२) अर्धभाक् । **सम्पृचानुरुध** (३।२।१४२) इति घिनिण्[1]—भागी । **खलं भगः पदं च** (द्र० काशिका ३।३।१२५) इति भग । घञ् (द्र० ३।३।१८—१९) भागः । भक्तुम् । भक्त । चुरादौ । **भाज पृथक्कर्मणि** (१०।२७२)—विभाजयति॥९६८

७२६. **रन्ज रागे । रञ्जेश्च** (६।४।२६) इति शपि न लोपः—रजते, रजति । **कुषिरजोः प्राजां श्यन् परस्मैपदं च** ( ३ । १ । ९० ) रज्यति वस्त्रं स्वयमेव । **घञि च भावकरणयोः** (६।४।२७) न लोपः—रागः, अधिकरणे रङ्गः । **रञ्जेर्णौ मृगरमणे** (६।४।२४ वा०) रजयति मृगान्, नेह रञ्जयति नट । **रजनरजकरजःसु कित्त्वम्** (तु० ६। ४।२४ वा०) **शिल्पिन् ष्वुन् नृतिखनिरञ्जिभ्यः** (३।१।१।१४५ सू० वा०) रजक[2] । महारजनं कुसुम्भम्[3] । गौरादौ (गण० ४।१।४१) रजनी । **जनीजॄष्क्नसुरञ्जोऽमन्ताश्च** (१।५५४) इति मित्संज्ञाशासनादन्यत्राप्याहुर्यथा—**राजर्षिकल्पो रजयन्**[4] । **सम्पृच** (३।२। १४२)—रागी । **पृषिरञ्जिभ्यां कित्** (उ० ३।१११) इत्यतच्—रजतम् ॥९६९॥

७२७. **शप आक्रोशे** । आक्रोशो विरुद्धानुध्यानम् । वाचा शरीरस्पर्शने चानेकार्थत्वात् । शपते, शपति । **शप उपलम्भने** (१।३।२१ वा०) तङ्, **श्लाघह्नुङ्स्थाशपां** (१।४।३४) इति सम्प्रदानम्—शपते चैत्राय । शपति रिपुं पुरोधाः । **शीङ्शपिरुहि** (तु०उ०३।११३) इत्यथच्—शपथ । **शाशपिभ्यां ददनौ** (उ० ४।९७) शब्द[5] । **शपेर्बश्च** (उ० १।१०५) इति कल—शबलो वर्ण ॥९७०॥

---

१. अष्टाध्यायां घिनुण् प्रत्ययः ।

२. अत्राह सायणः—'ण्याने तु अक्ङित्यपि रञ्जेर्मित्त्वविधानाल्लिङ्गान्नलोप इति तरङ्गिणीपदमञ्जर्यौ' (पृष्ठ २०४) । अयं पाठो नोपलभ्यतेऽत्र तरङ्गिण्याम् ।

३. 'काञ्चनं कुसुम्भ च' पाठा० ।  ४. अनुपलब्धमूलम् ।

५. इतोऽग्रे 'शब्दनम्' इति क्वचिदधिकम् । शब्द धातुश्चुरादौ पठ्यते (१०।१६०) । ततोऽनायासेन 'शब्द' प्रातिपदिकं निष्पद्यते देवराजस्तु निघण्टु व्याख्याने (१।११।३२) 'शब्दन शब्दः' इति क्षीरस्वामी । इत्युद्धृतवान् । इय व्युत्पत्तिः क्षीरस्वामिना अमरकोशव्याख्याने (१।६।१) निर्दिष्टा ।

७२८. **त्विषा दीप्तौ** । त्वेषते, त्वेषति । त्विट् । **नप्तृनेष्टृ** (उ० २।९५) इति त्वष्टा अर्क[1] । **अवपूर्वो दाननिरसनयोश्चेति दुर्गः** । निरसनमपाकरणम् । अवत्वेषति गां द्विजाय, अवत्वेषते मलम् ।६७१।

७२९. **यज देवपूजासंगतिकरणदानेषु** । यजते, यजति । **वचिस्वपियजादीनां किति** (६।१।१५) सम्प्रसारणम् –इज्यते, इष्ट, इष्टिः । **लिट्यभ्यासस्योभयेषाम्** (६।१।१७) इयाज । **यजयाचरुच** (७।३।६६) इति कुत्वं नास्ति—याज्यम् । **प्रयाजानुयाजौ यज्ञाङ्गे** (७।३।६२) अन्यत्र प्रयाग, अनुयाग । **करणे यजः** (३।२।८५) णिनिः—अग्निष्टोमयाजी । **सुयजोर्ङ्वनिप्** (३।२।१०३)—यज्वा **पूङ्यजोः शानन्** (३।२।१२८) –यजमान । ऋतौ यजति (द्र० ३।२।५९) — ऋत्विक् । **यजजपदशां यङः** (३।२।१६६) इत्यूकः यायजूकः । **यजयाच** (३।३।९०) इति नङ्—यज्ञ । **व्रजयजोर्भावे क्यप्** (३।३।९८) इज्या । उणादौ यष्टि[2] । **अर्तिपृवपि** (उ० २।११८) इत्युस्—यजु काठकम्[3] ।।६७२।।

७३०. **डुवप् बीजसन्ताने**[4] । बीजानां सन्तान क्षेत्रे विस्तारणम् । वपते, वपति । [प्रणिवपते] प्रणिवपति (द्र० ८।४।१७) । उप्यते । वप्ता । उवाप, ऊपु, ऊपे । उप्त । **आसुयुवपि** (३।१।१२६) इति ण्यत् वाप्य । उप्त्रिमम् । **गृधिवपिभ्यां रन्** (तु० उ० २।२७) वप्र । **अर्तिपृवपि** (उ० २।११८) इत्युस्—वपु । **वसिवपिवदिराजि** (द० उ० १।५३) इतीञ्—वापिः । भिदादौ (गण० ३।३।१०४) वपा ।।६७३।।

७३१. **वह प्रापणे** । वहते, वहति । प्रणिवहते, प्रणिवहति (द्र० ८।४।१७) । उवाह, ऊहु ; ऊहे । **सहिवहोरोदवर्णस्य** (६।३।११२) वोढा । **अदिखादिनीवहीनाम्** (१।४।५२ वा०) कर्मसंज्ञा नास्ति—वाहयति भारं चैत्रेण मैत्र । **वह्यं करणम्** ((३।१।१०२) । **कर्त्री-**

---

१. सूर्य.' पाठा० ।

२. वसेस्ति. (उ० ४।१७९) इति बाहुलकाद् यजेरपि ।

३. क्षीरस्वामी कठशाखाध्यायी आसीदिति सभाव्यत । सम्प्रति कश्मीरेष्वेव कठब्राह्मणा उपलभ्यन्ते ।

४, 'टुवप् बीजतन्तुसन्ताने' इति काशकृत्स्नः (पृष्ठ ११६) ।

**जीवपुरुषयोर्नशिवहोः** (३।२।४३) णमुल्—पुरुषवाहं वहति प्रवाहः। उह्यतेऽनेनेति वाहः[1] स्कन्धोऽश्वश्च[2]। **गोचरसंचर**। (३।३।११९) इति वह साधु। **वहो ध च**(द० उ० १।१९६ कपाठः)इत्यू—वधू। **वहिश्रिश्रुयुद्रुग्लाहा**(उ० ४।५१) इति निः—वह्निः। **अशित्रादिभ्य इत्रोत्रौ** (उ० ४।१७३)— वहित्रम् ॥६७४॥

**७३२. अनुदात्ताः स्वरितेतः ॥**

**७३३. वस निवासे। ७३४. अनुदात्त उदात्तेत्।** वसति। उवास, ऊषु। उष्यते, **शासिवसिघसीनां च** (८।३।६०) इति षत्वम्। निवत्स्यति (द्र० ७।४।४९)। **न पादमि** (१।३।८९) इति तङ्—वासयते। **भाषायां सदवसश्रुवः** (३।२।१०८) ऊषिवान्। **अमावास्यदन्यतरस्याम्** (तु० ३।१।१२२) अमावास्या, अमावस्या। **वसतिक्षुधोरिट्** (७।२।५२) **गत्यर्थाकर्मक** (३।४।७२) इति क्त—उषित। **मृडमृद** (१।२।७) उति क्त्वा कित्—उषित्वा। **वसेस्तव्यत् कर्तरि णिच्च** (३।१।९६ वा०)—वास्तव्य। **अमेरतिः, वहिवस्यर्तिभ्यश्चित्** (उ० ४।५९,६०)—वसतिः। **शृस्वृस्निहि** (उ० १।११) इत्युः—वसुः। **वसेस्तुन्** (उ० १।७६) वस्तु। **अगारे णिच्च** (उ० १।७७) वास्तु। **अतिकमिभ्रमिदेविवासिभ्यश्चिद्** (तु० द० उ० ८।६२) इत्यरन्—वासरम्। **वसिवपि** (उ० ४।१२५) इतीञ् वासिः, वासी तक्षभाण्डम् रक् (द्र० उ० २।१३)—उस्रो रश्मिः, **षत्वं नेष्यते। धापॄवस्यज्यतिभ्यो नः** (उ० ३।६) वस्नं मूल्यम्। वसेः सरः (द्र० उ० ३।७१)—वत्सरः। वसेः कसुन् (द्र० उ० ४।२३४)—उषः। **उपसर्गे वसेः** (उ० ३।११४) इत्यथः—आवसथः। **तॄभूवहिवसि**(उ० ३।१२८) इति झच्—वसन्तः। **वसस्तिप्** (तु० द० उ० १।७४—कपाठः) वस्तिर्मेढ्रोर्ध्वं नाभेरधः, वस्तयो वस्त्रान्तावयवाः। **बस्त गन्ध अर्दने** (१०।१३२) अस्य बस्तश्छागः। अदादौ **वस आच्छादने** (२।१६) वस्ते वस्त्रम्, वासस्। दिवादौ **वसु स्तम्भे** (४।१०८) वस्यति। चुरादौ **वस स्नेहच्छेदापहरणेषु**[3] (१०।१८२), **वास उपसेवायाम्** (१०।२७०) वासयति ॥६७५॥

---

१. 'वहः' पाठा०। तच्चासाधु, उत्तरत्र वहशब्दस्य निर्देशात्।

२. 'स्कन्धदेशः' पाठा०।

३. '० छेदोपसहरणेषु' पाठा०।

७३५. **वेञ् तन्तुसन्ताने** । इतस्त्रयोऽनिटः । वयते, वयति । **वेञो वयिः** (२।४।४१) **ग्रहिज्यावयि** (६।१।१६) इति सम्प्रसारणम्, **लिटि वयो यः** (६।१।३८) इति यकारस्य नास्ति—ऊयुः । थलि च[1]—उवयिथः । **वश्चास्यान्यतरस्यां किति**(६।१।३९)ऊवुः । **लिटयन्यतरस्याम्** (२।४।४०) इति यदा वयिर्नास्ति तदा वेञ इति धातोरभ्यासस्य च सम्प्रसारणनिषेधः ववौ, ववुः । **शाछासाह्वाव्यावेपां युक्** (७।३।३७) वाययति । **ह्वावामश्च** (३।२।२) इत्यणि तन्तुवायः[2] । **ल्यपि च** (६।१।४१) इति न सम्प्रसारणम् - प्रवाय । **ऊतियूतिजूति** (३।३।९७) इत्यूतिर्वपनम् । **वेञो डिः** (द्र० द० उ० १।६२) विः पक्षी । **मनिन्** (द० उ० ६।७३ वेमा । **वेञो डित्**(द० उ० १।३९) —वीचिः ॥९७६॥

७३६. **व्येञ् संवरणे** । संवरणमाच्छादनम्[3] । व्ययते, व्ययति । संवीयते । **न व्यो लिटि** (६।१।४६) इत्येच आत्त्वं नास्ति—संविव्याय[4] । **इडत्त्यर्तिव्ययतीनाम्** (७।२।६६) संविव्ययिथ । अनभ्यासस्य[5] इत्युपधादीर्घो नास्ति । **स्वपिस्यमिव्येञां यङि** (६।१।१९)

---

१. अत्र लिबिशेन भ्रान्त्येदं सूत्रप्रतीकमिति मत्वा ६।४।१२१ संख्या निर्दिष्टा, नात्रास्य सूत्रस्य किंचित् कार्यम् । २. 'तन्त्रवायः' पाठा० ।

३. 'सवरणमुपयोगः । व्ययति व्ययते व्ययं करोतीत्यर्थः' इति काशकृत्स्नधातुपाठकन्नडटीकानुसारमर्थनिर्देशः (द्र० पृष्ठ ११७) । कन्नडटीकानुसारम् एतद्धातुनिष्पन्ने 'व्यय' शब्दे चायमेवार्थ. स्पष्टमुपलभ्यते । 'व्ययः, व्ययनम्' आत्त्वाभाव. कथमिति नोक्तं टीकाकृता ।

४. अत्राह सरस्वतीकण्ठाभरणटीकाकारो दण्डनाथः केचिण्णलि थल्यपि विशेषनिर्देशेनैव सिद्धे 'अलिटि'(स०क०सूत्रम्)इनि सामान्येन निर्देशात् व्ययतेर्लिटि सप्रसारण पूर्वत्व वा विभाषयन्ति । तेन सविव्ययतु संविव्ययुः इत्याद्यपि भवति । तद्यथा संविव्ययुर्वसनचारु चमूसमुत्थं पृथ्वीरजः करभकण्ठकडेरमाभाः (तु० शिशुपालवध ५।३) । द्र० स० कण्ठा० ६।१।५६ । शिशुपालवधव्याख्याता वल्लभदेवः 'सविव्ययुः, सविव्युः' इत्युभयथा पाठमाह । अत्र सरस्वतीकण्ठाभरणसम्पादकस्य टिप्पण्यपि द्रष्टव्या ।

५. अत्र लिबिशेन भ्रान्त्या ६।१।८ सूत्रसंख्या निर्दिष्टा । इह वाक्यस्यास्य तात्पर्यं न विदमः ।

सम्प्रसारणम् - संवेवीयते । **व्यश्च** (६।१।४३) इति न ल्यपि सम्प्रसारणम्—संव्याय । **विभाषा परेः** (६।१।४४) —परिवीय परिव्याय । **शाछासाह्वा** (७।३।३७) इति युक्—संव्याययति । **नौ व्यो यलोपः पूर्व-[पद]स्य च दीर्घः** (उ० ४।१३६) नीविः, नीवी[1] ॥६७७॥

७३७. **ह्वेञ् स्पर्धायां शब्दे च**[2] । ह्वयते, ह्वयति । **निसमुपविभ्यो ह्वः** (१।३।३०) तङ्—निह्वयते, संह्वयते, उपह्वयते, विह्वयते । **स्पर्धायामाङः** (१।३।३१) मल्लो मल्लमाह्वयते । आहूयते । **ह्वः सम्प्रसारणम्, अभ्यस्तस्य च** (६।१।३२,३३) जुहुवुः, णौ च संश्चङोः[3] – जुहावयिषति, अजूहवत् । **लिपिसिचिह्वश्च** (३।१।५३) इत्यङ्—आह्वत् । **आत्मनेपदेष्वन्यतरस्याम्** (३।१।५४) आह्वत आह्वास्त । **शाछासा** (७।३।३७) इति युक्—ह्वाययति । **ह्वावामश्च** (३।२।२) इत्यण्—स्वर्गाह्वायः । **आतश्चोपसर्गे** (३।१।१३६) प्रह्वः । **ह्वः सम्प्रसारणं च न्यभ्युपविषु** (३।३।७२) इत्यप् निहवः । **आङि युद्धे** (३।३।७३) आहवः । **निपानमाहावः** (३।३।७४) । **भावेऽनुपसर्गस्य** (३।३।७५) हवः । छित्वरादौ (द्र० उ० ३।१) उपह्वरः । बाहुलकाद् आह्वयः ॥६७८॥

७३८. **[अनुदात्ताः]**[4] ।

७३९. **वद व्यक्तायां वाचि**, ७४०. **उदात्त उदात्तेत्**[5] । वदति । वदिता । **भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः** (१।३।४७) तङ्—वदते[6] चार्वी लोकायते, भातीत्यर्थः, गेहे वदते, यतत इत्यर्थः,

---

१. 'मूलधनम्' इति क्वचिदधिकम् ।

२. 'स्पर्धायां वाचि' इति काशकृत्स्नः (पृ० ११७) ।

३. ह्वः संप्रसारणम् (६।१।३२) इत्यत्र 'णौ च संश्चङोः' इत्यनुवर्तनादिति भावः । लिपिशेनात्र भ्रान्त्या सूत्रनिर्देश इति बुद्ध्वा ६।१।३१ सूत्रसंख्या निर्दिष्टा । 'णौ च संश्चङोः' इत्यनेन सूत्रेण (६।१।३१) तु श्वयतेर्विभाषा संप्रसारणं विधीयते ।

४. वेञादीनामनुदात्तत्वविधानार्थं सूत्रमिदमपेक्षते, न चोपलभ्यते ।

५. काकाक्षिन्यायेन सूत्रमिदमनेनेनोत्तरेण, चोभाभ्यां संबध्यते ।

६. काशकृत्स्नस्तु सामान्येन 'वद' धातुमुभयपदिनं मनुते (पृष्ठ ११७) ।

क्षेत्रे विवदन्ते, नाना वदन्तीत्यर्थः; परदारानुपवदते, रहस्युपच्छन्दयतीत्यर्थः। **व्यक्तवाचां समुच्चारणे** (१।३।४८) सम्प्रवदन्ते[1] द्विजाः। **विभाषा विप्रलापे** (१।३।५०) विप्रवदन्ते मौहूर्तिकाः, विप्रवदन्ति वा[2]। **अनोरकर्मकात्** (१।३।४९) अनुवदते कठः कलापस्य[3]। **अपाद् वदः** (१।३।७३) अकर्त्रभिप्राये क्रियाफले—अपवदते, अपवदति। उद्यते। **वदव्रज** (७।२।३) इति वृद्धिः—अवादीत्। **न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदसः** (१।३।८९) आत्मनेपदं णिचि—वादयते वीणाम्। **अवद्यपण्यवर्यागर्ह्य** (३।१।१०१) इत्यवद्यं गर्ह्यं साधु। **राजसूयसूर्य** (३।१।१४४) इति मृषोद्यम्। **वदः सुपि क्यप् च** (३।१।१०६) ब्रह्मोद्यम्, ब्रह्मवद्यम्। **प्रियवशे वदः खच्** (३।२।३८) प्रियंवदः, वशंवदः। **यजजपदशां यङः** (३।२।१६६) **वदेरपीष्यते**[4] वावदूकः। उत्तिः—**तितु** (७।२।९) इति नेट्, **इडपीष्यते**—उदितिः। **मृडमृद** (१।२।७) इति क्त्वा कित्—उदित्वा। **अच्छगत्यर्थवदेषु** (१।४।६९) गति संज्ञः—अच्छोद्य। **वृतॄवदि** (उ० ३।६२) इति सः—वत्सः। **वदेरान्यः** (उ० ३।१०४) वदान्यो दाता[5]। **वदन्योऽपीष्टः**। **वसिवपिवदि** (द० उ० १।४३) इतीञ्—वादिः। **भूवादिगृभ्यो णित्रन्** (उ० ४।१७७ श्वेत०) वादित्रम् ॥९७९॥

७४१. **टुओश्वि गतिवृद्ध्योः**, सेट्। श्वयति। श्वयिता। श्वयथुः। ओदित्त्वात् (द्र० ८।२।४५) निष्ठानत्वम्, **श्वीदितो निष्ठायाम्** (७।२।१४) नेट्—शूनः। यजादित्वात् (द्र० ६।१।१५)—शूयते। **विभाषा श्वेः** (६।१।३०) लिङ्यङोः सम्प्रसारणम्—शिश्वाय, शुशाव; शिश्वियुः, शुशुवुः; शेश्वीयते, शोशूयते। **णौ च संश्चङोः** (६।१।३१) शुशावयिषति, शिश्वाययिषति; अशूशुवत् अशिश्वयत्। **विभाषा धेट्श्व्योः** (३।१।४९) चङ्—अशिश्वियत् अश्वयीत्—**ह्म्यन्तक्षण**

---

१. 'प्रवदन्ते' पाठा०। २. 'वा' क्वचिन्न।

३. 'कलापकस्य' पाठा०। धातुवृत्तावपि (पृष्ठ २१२) 'कलापकस्य' पाठः। शुद्धः पाठस्तु 'कलापस्य' इत्येव (द्र० काशिका १।३।४९)।

४. 'यजजप इत्यत्र वदेरनूपदेशः कार्य इति पदकारवचनादूक.' इति अमरटीकायां (३।१।३५) क्षीरस्वामी। लिबिशेनात्र तुलनार्थं उणादेः ४।४१ संख्या निर्दिष्टा। सा चिन्त्या, यजजप इत्याद्यूकविधायकस्य सूत्रस्य प्रत्यक्षं निर्देशात्।

५. 'दानशील.' पाठा०।

(७।२।५) इति वृद्धिर्नास्ति । **जृस्तन्भु** (तु० ३।१।५८) इत्यङ्, **श्वयतेरः** (७।४।१८) अश्वत् । **श्वनुक्षन्** (उ० १।१५९) इति श्वा, मातरिश्वा ।।९८०।।

७४२. **वृत्** । यजादिरन्तर्गणो वर्तितः ।

**भट्टेश्वरस्वामिपुत्र-क्षीरस्वाम्युत्प्रेक्षितायां**
**धातुवृत्तौ क्षीरतरङ्गिण्यां**
**शब्विकरणो भूवादिगणः**[1]
**सम्पूर्णः समाप्तः**[2] ।

---

१. 'इकां यण्भिर्व्यवधानं व्याडिगालवयोः' इति वचनात् (भाषावृत्तौ ६।१।७७ उद्धृतम्) वकारस्य व्यवधानम् । यत्तु महाभाष्यकृता 'भूवादीनां वकारोऽयं मङ्गलार्थः प्रयुज्यते' (१।३।१ सूत्रे) इत्युक्तं, तस्यायमर्थः—भूवादयो धातवः (१।३।१) इति सूत्रयता भगवता पाणिनिना वकारस्य व्यवधान कृत्वा यण्व्यवहितोऽपि सन्धिर्भवतीति सूचयता छात्राणां मङ्गलं विहितम् । अत एवोक्तं पतञ्जलिना—'अध्येतारश्च मङ्गलयुक्ता यथा स्युः' । अत्र विशेषोऽस्मदीये 'संस्कृत व्याकरण-शास्त्र का इतिहास' नाम्नि ग्रन्थे (सं० २०४१) प्रथमाध्याये द्रष्टव्यः (पृष्ठ २८—३२; च० संस्क०) ।

२. 'इति क्षीरस्वाम्युत्प्रेक्षितायां क्षीरतरङ्गिण्यां धातुवृत्तौ भूवादिगणः समाप्तः' इति पाठान्तरम् ।

# ॥ अथादादिगणः ॥

**[अथानिटौ परस्मैपदिनौ]**

**१. अद भक्षणे।** इतो द्वावनिटौ परस्मैपदिनौ च। अत्ति, **अदिप्रभृतिभ्यः शपः** (२।४।७२) लुक्। अदन् अदती। व्यतिहारे (द्र० १।३।१४) व्यत्यदन्ते[1]। **लुङ्सनोर्घसॢ** (२।४।३७)—अघसत्, जिघत्सति। **लिट्यन्यतरस्याम्** (२।४।४०)—जघास, जक्षुः, **शासिवसिघसीनां च** (८।३।६०) इति षत्वम्। आद। **इडत्त्यर्तिव्ययतीनाम्** (७।२।६६) आदिथ। अत्स्यति। **अदः सर्वेषाम्** (७।३।१००) इति लङ्यट्—आदत। **अदिखादिनीवहीनां** (१।४।५२ वा०) कर्मसंज्ञा नास्ति—आदयति पिण्डीं चैत्रेण। **अदो जग्धिर्ल्यप्ति किति** (२।४।३६) जग्धम्, जग्ध्वा, प्रजग्ध्य। उणादावन्नम् (द्र० उ० ३।१०)। **सृघस्यदः क्मरच्** (३।२।१६०) अद्मरः, घस्मरः। **घस्लृभावेऽच्युपसंख्यानम्** (२।४।३७ वा०) प्रात्तीति प्रघसः। **उपसर्गेऽदः** (३।३।५६) विघसः, नेह—घासः, **घञपोश्च** (२।४।३८) इति घस्लादेशः। **नौ ण च** (३।३।६०)—न्यादः, निघसः। **अदोऽनन्ने** (३।२।६८) क्विप्[2]—आममत्तीत्यामात्[3], नेह—अन्नादः, अण् (द्र० ३।२।१)। **क्रव्ये च** (३।२।६९) क्रव्यात्[4], क्रव्यादः। **अदिशदि** (उ० ४।६५) इति क्रिन्—अद्रिः। **अदेस्त्रिन् त्रिनिश्च** (द्र० द० उ० १।३७) अत्रिर्मुनिः, अत्री क्रिमिः। जत्स्वादौ (द्र० उ० ४।१०२) अत्त्रुः[5]। **अदेर्धंश्च** (द० उ० ६।७१) इति क्वनिप्—अध्वा मार्गः। **अदो नुम् धौ च** (द० उ० ६।६६) इत्यसुन्—अन्धोऽन्नम्। **घसेः किच्च** (उ० ४।३४) इतीरन्—क्षीरम्॥१॥

---

१. 'व्यत्यत्ते' पाठा०।

२, सार्वत्रिकोऽप्यपपाठोऽयम् 'विट्' इति शुद्धः पाठः।

३. अयं वा [ऽग्निरा] ऽमाद येनेदं मनुष्याः पक्त्वाऽश्नन्ति। श० ब्रा० १।२।१।४॥

४. येन [अग्निना] पुरुषं दहन्ति स क्रव्यात्। श० ब्रा० १।२।१।४॥

५. 'अत्रुः क्षुद्रजन्तुः' इति हैमोणादिः (सूत्र ८०६)।

२. **हन हिंसागत्योः** । हन्ति । हन्ता । **ऋद्धनोः स्ये** (७।२।७०) इतीट्—हनिष्यति । **हो हन्तेर्ञ्णिन्नेषु**(७।३।५४) इति घः—अघानि, घ्नन्ति । **नेर्गद** (८।४।१७) इति णत्वम्—प्रणिहन्ति । **हन्तेरत्पूर्वस्य** (८।४।२२) प्रहणनम् । **वमोर्वा** (तु० ८।४।२३) प्रहण्वः प्रहन्मः, प्रहण्मः प्रहन्मः । **आङो यमहनः** (१।३।२८)—इत्यकर्मकात् तङ्—आहते । **स्वाङ्गकर्मकाच्च** (१।३।२८ वा०)—आहते शिरः, नेह—आहन्ति शिरः शत्रोः । व्यतिहारे—**न गतिहिंसार्थेभ्यः** (१।३।१५) व्यतिघ्नन्ति । **गमहन** (६।४।९८) इति अल्लोपः, **अभ्यासाच्च** (७।३।५५) इति घः—जघान, जघ्नुः । **विभाषा गमहनविदविशाम्** (७।२।६८) इति वेट्—जघन्वान्, जघ्निवान् । **स्यसिच्सीयुट्तासिषु** (६।४।६२) इति चिणवदिट् च—घानिष्यते । **हन्तेर्जः** (६।४।३६) जहि शत्रुम् । **हनो वध लिङि** (२।४।४२)—वध्यात् । **वधिभावात् सीयुट्चिण्वद्भावौ**[1] **विप्रतिषेधेन** (तु० ६।४।६२ वा०)—वधिषीष्ट, घानिषीष्ट । **लुङि च** (२।४।४३) अवधीत् । **आत्मनेपदेष्वन्यतरस्याम्** (२।४।४४) आहत, आवधिष्ट, **हनः सिच्** (१।२।१४) इति कित्वम् । **अज्झनगमां सनि** (६।४।१६) दीर्घः—जिघांसति । यङ्—जङ्घन्यते, **हन्तेर्हिंसायां घ्नी** (७।४।३० वा०)[2] जेघ्नीयते । **हनस्तोऽचिण्णलोः** (७।३।३२) घातयति, अजीघतत् । **हनो वा वध च** (३।१।९७ वा०) इति वा यत्—वध्यः घात्यः । **हनस्त च** (३।१।१०८) इति भावे क्यप्—ब्रह्महत्या । **लषपतपद** (३।२।१५४) इत्युकञ्—घातुकः । **हनश्च वधः** (३।३।७६) वधः, घातो वा । **मूर्तौ घनः** (३।३।७७) दधिघनः । **अन्तर्घनोदेशे** (३।३।७८), **अगारैकदेशे प्रघणः प्रघाणश्च** (३।३।७९) । **उद्घनोऽत्याधानम्** (३।३।८०), **निधाय तक्ष्यते यत्र काष्ठं काष्ठं स उद्घनः** (अमर ३।२।३५) । **अपघनोऽङ्गम्** (३।३।८१) । **करणेऽयोविद्रुषु** (३।३।८२) अयोघनः । **स्तम्बे क च** (३।३।८३) स्तम्बघ्नः, स्तम्बघनः । **परौ घः** (३।३।८४)—परिघः । **उपघ्न आश्रये** (३।३।८५) **संघोद्घौ गणप्रशंसयोः**(३।३।८६) । **निघो निमितम्** (३।३।८७)। **घञर्थे कविधानाद्** (द्र० ३।३।५८ वा०) विघ्नः,

---

१. 'मुट्सीयुट्चिण्वद्भावा' पाठा० । 'सीयुटि चिण्वद्भावो विप्रतिषेधेन' इति युक्तः पाठः । द्र० महाभाष्य ६।४।६२ ॥ लिबिशेन नात्राकरग्रन्थनिर्देशः कृतः ।

२. अत्र लिबिशेन सत्यपि पाठ भेदे काशिकाया निर्देशः कृतः ।

**निघ्न आयत्ते** (तु० अमर ३।१।१६) **करणे हनः** (३।४।३७) इति णमुल्—उपलघातं हन्ति। **समूलाकृतजीवेषु हन्कृञ्ग्रहः** (३।४।३६) समूलघातं हन्ति। **हिंसार्थानां च समानकर्मकाणाम्** (३।४।४८) दण्डघातं गाः कालयति[1]। **चरिचलिपतिवदीनां वा द्वे आक् चाभ्यासस्य, हन्तेर्घत्वं च** (६।१।१२ वा० काशिका)—घनाघनः। **अशिषि हनः** (३।२।४९) डः—अरातिहः, तिमिहः[2]। **अपे क्लेशतमसोः** (३।२।५०) क्लेशापहः, तमोपहः। **अन्येभ्योऽपि**[3] इति वरमाहन्ति—वराहः[4], पटे हन्यते—पटहः, कलं हन्ति—कलहः। **कुमारशीर्षयोर्णिनिः** (३।२।५१) कुमारघाती, शीर्षघाती। **लक्षणे जायापत्योष्टक्** (३।२।५२) जायाघ्नस्तिलकः, पतिघ्नः। **शक्तौ हस्तिकपाटयोः**[5] (३।२।५४) हस्तिघ्नः, कपाटघ्नः[5]। **पाणिघताडघौ शिल्पिनि** (३।२।५५)। वक्तव्याद् (द्र० ३।२।५५ वा०) राजघः। **दारावाहनोऽण् अन्त्यस्य च टः संज्ञायाम्** (३।२।४९ वा०) दार्वाघाटः, दार्वाघातः। **चारौ च** (तु० ३।२।४९ वा०) चार्वाघाटः, चार्वाघातः। **समि च वर्णे** (तु० ३।२।४९ वा०) वर्णसंघाटः, वर्णसंघातः। **कर्मणि हनः** (३।२।८६) णिनिः—पितृघाती। **ब्रह्मभ्रूणवृत्रेषु क्विप्** (३।२।८७) ब्रह्महा। **सम्पृच** (३।२।१४२) इत्यभ्याघाती। **शृस्वृस्निहि** (उ० १।१०) इत्युः—हनुः। **हन्तेर्हि च** (द० उ० ७।३४) हिमम्। **हनो वधः क्वुश्च** (तु० उ० २।३६)—वधकः[6]। **वृतृवदि** (तु० उ० ३।६२) इति सः—हंसः[7]। **हन्तेर्मुट् च हिश्च** (तु० उ० ३।१२९) हेमन्तः। **हन्तेरंह च** (उ० ४।६२)—अंहतिः। **वसिवपि** (उ० ४।११५) इतीञ्—घातिः। **आङि श्रिहनिभ्यां ह्रस्वश्च** (उ० ४।१३८)—अहिः। **नञ्याहन एह च** (तु०

---

१. 'घातयति' पाठा०। २. 'तिमिरहः' पाठा०।

३. अत्र लिबिशेन '३।२।७५' सूत्र संख्या निर्दिष्टा। नह्यनेन डो भवति। वचनमिदं नान्यत्र दृष्टम्।

४. वराहो मेघोऽपि। तत्र 'वरम्=उदकम् (निघण्टु १।१२) आहरति' इत्यर्थो द्रष्टव्यः। द्र० निरुक्त ५।४॥

५. '०कवाटयोः' 'कवाटघ्नः' पाठा०।

६. 'वधिः प्रकृत्यन्तरम्। द्र० काशिका ७।३।३५॥

७. 'हम्मतेर्हंसः। कः पुनराह—हम्मतेर्हंसः। किं तर्हि—हन्तेर्हंसः' इति वचनम् (महा० ६।१।१३) अत्रानुसंधेयम्।

उ० ४।२२४) इत्यसुन्—अनेहा कालः, **उशनस्पुरुदंसोऽनेहसां** (७।१।९४) सावन्[1]। **हन्तेर्घुर च** (तु० श्वेत० उ० ४।७०) इति घोरः। **हन्तेर्व च**[2] इति युः—जघनम्। **हन्तेर्युङ् आद्यन्तयोर्घत्वतत्वे च**[3] (तु० उ० ५।४२। द० उ० ६।८४)—परिघातनः, परिघः (तु० अमर २।८९२) ॥२॥

३. **अनुदात्तावनुदात्तेतौ** ॥

**[अथानिट उभयपदिनः]**

४. **द्विष अप्रीतौ**। इतश्चत्वारोऽनिट उभयपदिनश्च। द्विषते, द्वेष्टि, द्वेष्टा। **सत्सूद्विष** (३।२।६१) इति क्विप्—ब्रह्मद्विट्। **द्विषोऽमित्रे** (३।२।३१) शता[4] द्विषन्। **द्विषः शतुर्वा वचनम्** (२।३।६९ वा०)—चौरस्य द्विषन्, चौरं द्विषन्। **द्विषश्च** (३।४।११२) इति वा जुस्—अद्विषुः, अद्विषन् ॥३॥

५. **दुह प्रपूरणे**। प्रपूरणं पूरणाभावः,[5] उपसर्गोऽत्र धात्वर्थं बाधते प्रस्थानवत्। गां दुग्धे, दोग्धि। दोग्धा। **न दुहस्नुनमां यक्चिणौ** (३।१।८९)—दुग्धे गौः स्वयमेव; अदुग्ध। **शल इगुपधादनिटः क्सः** (३।१।४५)—अधुक्षत, अधुक्षत[6], अदुग्ध गौः स्वयमेव। **दुहश्च** (३।१।६३) इत्यदोहि गौः स्वयमेव। बहुवचने[7] **क्सस्याचि** (७।३।७२) लुक्। **लुग् वा दुहदिह** (७।३।७३) इति क्सस्य वा लुक्—अदुग्ध अदुग्धाः, अधुक्षत अधुक्षथाः। **शंसिदुहि** (३।१।१०९ काशिका) इति क्यप्—दुह्यम्। ण्यद् (द्र० ३।१।१२४) अपि दृश्यते दोह्यम्। **सत्सूद्विष** (३।२।६१) इति क्विप्—गोधुक्। **दुह कब्घश्च** (३।२।७०) कामदुघा। **नप्तृनेष्टृ** (उ० २।९५) इति दुहिता। **अन्येभ्योऽपि**[8] **दृश्यते**

---

१. 'अनङ्' शुद्धः पाठः। २. अनुपलब्धमूलम्।

३. अत्र लिबिशेन नाकरग्रन्थनिर्देशः कृतः।

४. 'शतरि' इति साधु। ५. प्रपूरण रिक्तीकरणमित्यन्ये।

६. अत्र सायणीया धातुवृत्तिर्द्रष्टव्या, स्वामिमतं तत्र निराकृतम्।

७. 'बहुवचने' सार्वत्रिकः पाठः सन्नपि निरर्थकः, बहुवचनादन्यत्रापि लोपदर्शनात्। यथा—अधुक्षाताम् अधुक्षाथाम्, अधुक्षि। ८. 'अन्येष्वपि' पाठा०।

(१।३।१३०) इति युच्—सुदोहनः, गोदोहनो घटः; गौरादौ[1] (द्र० गण० ४।१।४१) गोदोहनी[1]। उणादौ दोहदो[2] ऽभिलाषविशेषः ।।४।।

६. **दिह उपचये**। उपचयोऽत्र लेपः। **नेर्गदनद** (८।४।१७) इति णत्वम्—प्रणिदेग्धि। शिष्टं प्राग्वत्। दिग्धः, संदिग्धः। देहनो घटः, गौरादौ (द्र० गण० ४।१।४१) देहनी[3]। उणादौ—देहली[4] द्वाराधो दारुः। देहः ।।५।।

७. **लिह आस्वादने**। लेढि, लीढे। अलिक्षत्। **वसस्याचि** (७।३।७२) अलिक्षाताम्। **लुग् वा दुह** (७।३।७३) इत्यलीढ अलीढा, अलिक्षत अलिक्षथाः। **श्याद्व्यध** (३।१।१४१) इति णः—लेहः। **वहाभ्रे लिहः** (३।२।३२) खश्—वहंलिहः, अभ्रंलिहः। घञ् (द्र० ३।३।१८, १९)—लेहः। आलीढः[5] ।।६।।

[८. **अनुदात्ताः स्वरितेतः** ।।]

९. **चक्षिङ् व्यक्तायां वाचि**, १०. **अनुदात्तोऽनुदात्तेत्**। ङित्करणं नुम्निषेधार्थम्, अन्तग्रहणं हि तत्र (७।१।५८ सूत्रे) अनुवर्तते[6], **गणकृत्यमनित्यम्** (तु० सीर० परि० १२१) इति ज्ञापनार्थं च[7]। यथा— **स एवायं नागः सहति कलभेभ्यः परिभवम्** (सुभाषित ६३१)। आचष्टे। **चक्षिङः ख्याञ्** (२।४।५४)—आख्याता। **वा लिटि** (२।४।५५)—चख्यौ चख्ये, चचक्ष चचक्षे। **अस्यतिवक्तिख्यातिभ्योऽङ्** (३।१।५२)—आख्यत्। **न ध्याख्या** (८।२।५७) इति ख्यातः। **चक्षेः शिच्च** (उ० २।११९) इत्युस्—चक्षुः। **चक्षेर्बहुलं शिच्च** (उ० ४।२३३) इत्यसुन्—नृचक्षा राक्षसः, अवचक्षाः ।।७।।

---

१. नहि गौरादिषु पठ्यते। 'पिप्पल्यादयश्च' इत्यवान्तर्गणस्याकृतिगणत्वात् सभवति।

२. द्र० हैमोणादि २४४।

३. अस्यैव पृष्ठस्य टिप्पणी १ द्रष्टव्या।

४. सरस्वतीकण्ठा० २।३।९८।। हैमोणादि ४६५।

५. अत्र क्षीरस्वामिनोऽमरटीका (२।८।८६) द्रष्टव्या।

६. अयं भावः—यत्रान्ते इकार इद् भवति, तत्रैव नुम्विधानम्। अत्र तु इकारस्येत्वेऽपि नान्त इकार इत्, तेन नात्र नुम् भवति।

७. 'वा' पाठा०। सायणेन मतमिदं निराकृतम धातुवृत्तौ (पृष्ठ २३०)।

[**अथ सेट आत्मनेपदिनः**]

**११. ईर गतौ** । इतः पृचिपर्यन्ता (२।२१) द्वादश सेट आत्मनेपदिनश्च । ईर्ते । ईरिता । चुरादौ **ईर क्षेपे** (१०।२०५) ईरयति । **कम्पने च इत्येके**[1] ॥८॥

**१२. ईड स्तुतौ**[2] । ईट्टे, ईडिता । **ईडजनोर्ध्वे च** (७।२।७८) इतीटि ईडिषे, ईडिध्वे । ईडा । **इडाया वा** (८।३।५४) इति लिङ्गाद् इडा[3] । ईड्यः ॥९॥

**१३. ईश ऐश्वर्ये** । भुव ईष्टे । **ईशः से** (७।२।७७)—ईशिषे । ईशिता । **अधीगर्थदयेशां कर्मणि** (२।३।५२)षष्ठी[4] । ईशानः । ईशः । **स्थेशभास** (३।२।१७५) इति वरच्—ईश्वरः[5]॥१०॥

**१४. आस उपवेशने** । आस्ते । आसिता । **अधिशीङ्स्थासां कर्म** (१।४।४६) खट्वामध्यास्ते । **ईदासः** (७।२।८३)—आसीनः । **दयायासश्चः**(३।१।३७) इत्याम्—आसाचक्रे । **गत्यर्थाकर्मक** (३।४।७२) इति क्तः उपासितो गुरुं चैत्रः । **ण्यासश्रन्थो युच्** (३।३।१०७)—आसना ॥११॥

**१५. आङः शासु इच्छायाम्** । आशास्ते । आशासिता । **शासु अनुशिष्टौ** (२।७५) तु धात्वन्तरं ह्रस्वनिषेधादिविषयम्—**नाग्लोपिशास्वृदिताम्** (७।४।२) अशशासत्[6] । **शास इदङ्हलोः** (६।४।३४) अशिषत् । **क्वावुपसंख्यानम्** (६।४।३४ वा०) आशीः । क्ते (द्र० ७।२।१५) आशास्तः । **अनुदात्तेतश्च हलादेः** (३।२।१४९) युच्—आशासनः । आशास्तिः—**गुरोश्च हलः** (३।३।१०३) इति नास्ति

१. काशकृत्स्नः (पृष्ठ१२५),दुर्गसिंहश्च इत्थमेव पठतः ।

२. 'ईड ईल स्तुतौ' इति काशकृत्स्नः (पृष्ठ१२५) । अत्र ५३ पृष्ठस्था पूर्वोल्लिखिता टि० १ द्रष्टव्या । ३. इल धातोः (६।६५) 'इला' इत्यपि ।

४. 'भुव ईष्टे' इति प्रागुक्ते प्रयोगे ।

५. वरचि स्त्रियामीश्वरा । अश्नुतेराशुकर्मणि वरट् च (उ० ५।५७) इति वरटष्टित्त्वात् स्त्रियामीश्वरी भवति ।

६ अत्र एतद्धातुसूत्रस्था सायणीया धातुवृत्तिः(पृष्ठ २३२) अनुसंधेया । तत्र स्वामिमते प्रकृतस्याङः शासुधातोरप्युपधाह्रस्वत्वनिषेध उक्तः । इह तु न तथा पाठ उपलभ्यते ।

**निष्ठायां सेटोऽकारवचनात्** (३।३।९४ वा०)[1]। **उदितो वा** (७।२।५६) आशास्त्वा, आशासित्वा। **आङः, शास** इति **दौर्गा**[2],—आशासित्वा, आशासितः ॥१२॥

१६. **वस आच्छादने**। वस्ते पटम्। वसिता। वसानः। वसितः। भ्वादेर् (१।७३३) उषितः। अच् (द्र० ३।१।१३४ वा०)—वसः। भिदाद्यङ् (द्र० ३।३।१०४) वसा[3]। वसनम्। **वसस्तिप्** (तु० द० उ० १।७४ कपाठ) वस्तिमेढ्रोर्ध्वम्। **ष्ट्रन्** (द० उ० ८।७९)—**वस्त्रम्**। **वसेर्णित्** (उ० ४।२१८)—वासः। वादित्वात् (द्र० ६।४।१२६) लिट्येत्वाभ्यासलोपौ न स्तः—ववसे, ववसिषे ॥१३॥

१७. **कसि गतिशासनयोः**। कंसते, कंसिता। कंसनः। कंसः। **कस इत्येके**[4] ॥१४॥

१८. **णिसि चुम्बने**। निंस्ते। **वा निंसनिक्षनिन्दाम्** (८।४।३३) णत्वम् प्रणिंस्ते[5] प्रनिंस्ते ॥१५॥

१९. **णिजि शुद्धौ**। निङ्क्ते। प्रणिङ्क्ते। निञ्जिता ॥१६॥

२०. **शिजि अव्यक्ते[6] शब्दे[7]**। शिङ्क्ते। शञ्जानः। शिञ्जिता। **शिजि पिजि** इति **कौशिकः**--पिवते, पिञ्जरः। **खर्जपिञ्जादिभ्य ऊरोलचौ** (उ० ४।९०)—पिञ्जूलः पिङ्गलः[8]। **वृजी वर्जने** इति **दौर्गाः**[9] वृक्ते, वर्जिता, वृक्तः[10] ॥१९॥

---

१. अत्र लिबिशेन नाकरस्थानसकेतो निर्दशितः।

२. काशकृत्स्नीये (पृष्ठ १२५) दौर्गे च धातुपाठे 'आङः शासु' इत्येव पाठ उपलभ्यते। ३. 'भिदादयङि वसा' इति क्वचिन्न।

४. उद्धृतं पुरुषकारे (पृष्ठ १२०) धातुवृत्तौ (पृष्ठ २३४) च।

५. प्रत्याख्यातमिदं सायणेन।

६. 'सिजि' इति काशकृत्स्नः (पृष्ठ १२६)। एतत्पृष्ठस्थाऽस्मदीया टि० १ द्रष्टव्या। ७. अत्राव्यक्तशब्दो भूषणरवः। 'भूषणानां तु शिञ्जितम्' इत्यमरः (१।५।१६)। ८. 'पिङ्गः' पाठा०।

९. काशकृत्स्नोऽपि 'वृजी' इत्येव पपाठ (पृष्ठ १२६)।

१०. 'वृजी वर्जने ⋯ ⋯वृक्त'। एतावान् पाठ उद्धृतः पुरुषकारे (पृष्ठ ५६)। सायणस्तु 'अत्र स्वामी वृज इति दौर्गाः तेषां वृक्ते, वर्जिता' इत्येवमुद्धृतवान् (धातु० पृष्ठ २३५)।

**२१. पृची सम्पर्के**। सम्पर्को मिश्रणम्। पृक्ते। सम्पृक्तः। रुधादौ (७।३०) पृणक्ति। **पृचि** इति **कौशिकः**—पृङ्क्ते,।।१८।।

**२२. उदात्ता अनुदात्तेतः**।।

**२३. षूङ् प्राणिगर्भविमोचने**। इत ऊर्णुञन्ता (२।३१) नव सेटः। सूते। **स्वरतिसूति**(७।२।४४) इति वेट्—सोता, सविता। सुषुवे। **भूसुवोस्तिङि**(७।३।८८)इति गुणो नास्ति—सुवावहै। **स्तौतिण्योरेव षणि** (८।३।६१) इति षत्वम्—सुषावयिषति। **सुविनिर्दुर्भ्यः सुपिसूति** (८।३।८८) इति सुषूतिः। **राजसूयसूर्य** (३।३।११४) इति राजसूयः साधुः। सूतः, सूतकम्, भावक्तान्तात् कन्, **सूतकापुत्रकावृन्दारकाणां वेति वक्तव्यम्** (तु० ७।३।४५ वा०) इति सूतका सूतिका। **सुसूधागृधिभ्यः क्रन्** (श्वेत० उ० २।२७)—सूरोऽर्कः। **सुवः कित्** (उ० ३।३५)—सूनुः। क्रिन् (द्र० उ० ४।६४)—सूरिः। दिवादौ **षूङ् प्राणिप्रसवे** (४।२१)—प्रसूयते। तुदादौ **षू प्रेरणे** (६।११०)—सुवति।।१९।।

**२४. शीङ् स्वप्ने**। शेते। **अधिशीङ्स्थासां कर्म** (१।४।२६)—ग्राममधिशेते। **शीङो रुट्** (७।१।६)—शेरते। **शीङः सार्वधातुके गुणः, अयङ् यि क्ङिति** (७।४।२१,२२)—शय्यते। **अधिकरणे शेते** (३।२।१५)—खशयः, **पार्श्वादिभ्यः करणे** (तु० ३।२।१५ वा०)—पार्श्वशयः। **गत्यर्थाकर्मक** (३।४।७२) इति क्तः, **निष्ठा शीङ्स्विदि** (१।२।१९) इत्यकित्त्वम्—शयितः। आलुज् वक्तव्यात् (द्र० ३।२।१५८ वा०) शयालुः। **व्रते** (३।२।८०) णिनिः—स्थण्डिलशायी। **एरच्** (३।३।५६)—संशयः। **व्युपयोः शेते पर्याये** (३।३।३९) घञ्—तवाद्य राजोपशायः, विशायः। **संज्ञायां समज** (३।३।९९) इति क्यप्—शय्या। **भृमृशी** (उ० १।७) इत्युः—शयुरजगरः। **शीङो धुक्लन्वलञ्वलन्वालनः** (तु० उ० ४।३८)—शीधुः शीलम्, शैवलम्, शेवलम्, शेवालम। **वृङ्शीभ्यां रूपस्वाङ्गयोः पुट् च** (द० उ० ९।६१) इत्यसुन् शेपो लिङ्गम्। **शीङः किद्[1] ध्रस्वश्च**(तु० द० उ० ३।५५)—शिखा। शिखरम्, शेखरम्। शाखा तु शाखतेः (१।९०),

१. 'निद्' इति द० उ०, श्वेत'० नारा०। शिखाशब्दस्याद्युदात्तत्वदर्शनात् 'निद्' पाठेनैव भाव्यम्। गुणस्तु ह्रस्वविधानसामर्थ्यादेव न भविष्यति। तस्मादिह 'किद्' इति पाठश्चिन्त्य।

**आनकः शीङ्भियोः** (तु० उ० ३।८२)—शयानकः । निशेरतेऽस्मिन्निति निशीथः (द्र० उ० २।६) । **इण्शीभ्यां वन्** (उ० ४।१५२)—शेवः सुखम् ।।२०।।

२५. **यु मिश्रणे** । यौति, **उतो वृद्धिर्लुकि हलि** (७।३।८९) । यविता । **सनीवन्तर्ध** (७।२।४९) इति वेट्—युयूषति यियविषति । **आसुयुवपि** (३।१।१२६) इति ण्यत्—याव्यम् । **ऋदोरप्** (३।३।५७)—यवः, स्वार्थेऽण्[1] यावः, कनि (द्र० ५।४।२९) यावकोऽलक्तकः । **समि युद्रुदुवः** (३।२।२३) घञ्—संयावो गुडमिश्रं खाद्यम्[2] । **उदि श्रयतियौतिपूद्रुवः** (३।३।४९)—उद्यावः । नन्द्यादौ (द्र० ३।१।१३४) ल्युः—यवनः । **कनिन् युवृषि** (उ० १।१५६) इति कनिन्—युवा । **तिथपृष्ठ** (उ० २।१२) इति यूथः । **कुसुयुभ्यो दीर्घश्च** (तु० द० उ० ७।५)—यूपः । **अजियुधूनीभ्यो दीर्घश्च** (उ० ३।४७)—यूका । **सृयुवचिभ्योऽन्युजागूजक्नुचः** (उ० ३। ८१)—यवागूः । **वहियुभ्यां च** (उ० ३।११४ श्वेत०)—इत्यसच्—यवसो[3] घासः । **वहिश्रिद्रु** (तु० उ० ४।५१) इति नि—योनिः । [4]**पूङ्य्वोर्लोपश्च**(तु०द० उ० ६।१६)**इत्यूषन्**—यूषः । यूषेः[5] सौत्राद् योषा[6] ।

---

१. प्रज्ञादिभ्यश्च (५।४।३८) इति प्रज्ञादेराकृतिगणत्वात्, यावादिभ्यः कन्(५।४।२९)इति सूत्रे यावपदनिर्देशाद् वा । २. 'गुडगोधूमखाद्यम्' पाठा०।

२ उणादिसूत्रपाठस्तु श्वेतवनवासिपाठेन सवदति, पर स णित्त्वमनुवर्त्य यावसपद व्युत्पादयति । वेदे (यजु० २१।४३) 'यवस' इत्यप्याद्युदात्त उपलभ्यते । तदर्थं 'वहियुभ्या नित्' इति दशपादीसूत्रे (६।४७) णित्त्वं नानुवर्तनीयम् ।

४. अत्र 'भूङ्य्वोर्लोपश्च' इति शुद्ध पाठो द्रष्टव्य, तथैव दशपाद्युणादौ निर्देशात्, स्वय च 'भूङ् बन्धने' (१।६६२)सूत्रव्याख्याने स्वल्पभेदेनोद्धरणाच्च (पृ० १५६) ।

५. 'युषे.' इति शुद्धः पाठो द्रष्टव्य । 'हृसृरुहियुषिभ्य इतिः' इत्युणादिसूत्रे (१।९७) पाठदर्शनात युष सौत्रो धातुः । अपि च 'यूष' पाठे लघूपधत्वाभावाद् 'योषा' इत्यत्र गुणोऽपि न स्यात् ।

६. इतोऽग्रे लिबिशेन भ्रान्त्या उणादे. ३।६१ सूत्रसख्या तुलनाय निर्दिष्टा । अत्र सूत्रे उज्ज्वलदत्तेन यूधातोः सप्रत्यये योषापदसिद्धिरुक्ता, क्षीरस्वामिना तु युषधातो । लिबिशेनैतदपि न बुद्ध यत् युष धातो स-प्रत्यये योषापदसिद्धिः कथ भविष्यति ?

**हृसृरुहि** (उ० १।९७) इति योषित् । यवासो[1] (द्र० उ० ४।२) दुरालभा[2] । **ऊतियूतिजूति** (३।३।९७) इति यूतिः । **संघोऽयुतसिद्धानाम्**[3] इत्यादिदर्शनाद् **यु अमिश्रण इत्येके**[4] । क्र्यादौ **युञ् बन्धने** (९।७)—युनाति । चुरादौ **यु जुगुप्सायाम्** (१०।१५६)—यावयते, याव्यः ॥२१॥

२६. **रु शब्दे** । रौति, **तुरुस्तुशम्यमः सार्वधातुके** (७।३।९५) हलादौ वा ईट् रवीति । रविता । **सनि ग्रहगुहोश्च** (७।२।१२) इतीण् नास्ति – रुरूषति । **ऋदोरप्**(३।३।५७)—रवः । **उपसर्गे रुवः** (३।३।२२) घञ् संरावः । **विभाषाङि रुप्लुवोः** (३।३।५०) – आरवः, आरावः । भ्वादौ **रुङ् गतिरेषणयोः**(१।६८३)रवते । रवणः। **रुशातिभ्यां क्रुन्** (द० उ० १।१५९)—रुरुर्मृगः । **अच इः** (उ०४। १३९) रविः । **असुन्**[5]– **पुरूरवाः**(उ० ४।२३२) । **मह्यां रौति** (द्र० ६।३।१०९काशिका)—मयूरः ॥२२॥

२७. **णु स्तुतौ** । नौति, प्रणविता । **आङि नुप्रच्छयोः** (१।३।२१ वा०) तङ् – आनुते । नुनूषति । नवः, प्रणवः । **नुदंशोर्गुणश्च**[6] (तु० द० उ० ६।५४) इति नव ॥२३॥

२८. **टुक्षु शब्दे** । क्षौति । क्षवथुः । क्षविता । क्षवः । क्षतम् । **वौ क्षुश्रुवः** (३।३।२५) घञ्—विक्षावः ॥२४॥

२९. **क्ष्णु तेजने** । क्ष्णौति शस्त्रम् । **समः क्ष्णुवः** (१।३।६५) तङ्-संक्ष्णुते, चुक्ष्णूषति ॥२५॥

३०. **ष्णु प्रसवणे** । स्नौति । **स्नुक्रमोरनात्मनेपदनिमित्ते** (७।२।३६) इतीट् – प्रस्नविता । सुस्नूषति । **न दुहस्नुनमां यक्चिणौ**(३।१।

---

१. जवासा इति लोके प्रसिद्धा ।

२. निघण्टुषु क्वचिद् दुरालम्भा इत्यपि पाठ उपलभ्यते । अत्र दुरालभा-दुरालम्भयोर्विषये पूर्वा १५९ पृष्ठस्था प्रथमा टिप्पणी द्रष्टव्या ।

३. अनुपलब्धमूलम् । ४. प्रक्रियाकौमुदी टीकायां स्मृतमिदम् ।

५ अत्र लिविशेन वृथैव ४।१८८ उणादिसूत्र-संख्या निर्दिष्टा ।

६ अत्र लिबिशेन सूत्राकरस्थानमनिर्दिश्योज्ज्वलदत्तीयोणादिवृत्तौ बाहुलकात् प्रसाधितनवपदव्युत्पत्तिस्थास्य (उ० १।१५६) निर्देशः कृतः ।

८९)— प्रस्नुते गौः स्वयमेव, प्रास्नोष्ट । **स्नुव्रश्चि** (उ० ३।६६) इति कित् स — स्नुषा ॥२६॥

**३१. ऊर्णुञ् आच्छादने । ऊर्णोतेर्विभाषा** (७।३।९०) हलादौ पिति सार्वधातुके वृद्धिः, पक्षे गुणः—प्रौर्णौति प्रौर्णोति । **ऊर्णोतेर्विभाषा** (७।२।६) इति वृद्धिः—प्रौर्णावीत् प्रौर्णवीत् । **गुणोऽपृक्ते** (७।३।९१) प्रौर्णोत् । **सनीवन्तर्ध** (७।२।४९) इति वेट् प्रोर्णुनविषति, प्रोर्णुनुविषति, प्रोर्णुनूविषति । **सूचिसूत्रि** (३।१।२२ वा०) इति यङ् —प्रोर्णोनूयते । **विभाषोर्णोः** (१।२।३) कित्त्वम्– प्रोर्णुवितव्यम् । प्रोर्णवितव्यम् । **ऊर्णोतेर्डः** (उ० ५।४७)--ऊर्णा । **ऊर्णोतेर्नुलोपश्च** (उ० १।३०) इति कुः– ऊरुः । **महति ह्रस्वश्च** (उ० १।३१)— उरुः ॥२७॥

**३२. उदात्ताः ।**

**३३. द्यु अभिगमने** । इतो मापर्यन्ताः (२।५५) त्रयोविंशतिरनिटः । द्यौति । द्योता । द्यौः ॥२८॥

**३४. षु प्रसवैश्वर्ययोः** । सौति । सोता । सुषाव । **स्तुसुधूञ्भ्यः परस्मैपदेषु** (७।२।७२) सिचीट्—असावीत् । सुतः । भ्वादौ (१।६७२) सवति, सविता[1] । स्वादौ (५।१) सुनोति **कुसुयुभ्यश्च** (द० उ० ७।५।६६) इति सूपः ॥२९॥

**३५. कु शब्दे** । कौति । कोता । कूपः । भ्वादौ **कुङ्** (१।६८१) कवते । तुदादौ **कु शब्दे** (तु० ६।१०२)—कुवति[2] । शब्दत्वेऽर्थेऽप्येषां **कौतिः शब्दमात्रे, कुवतिरार्तस्वरे, कवतिरव्यक्ते शब्दे**[3] ॥३०॥

**३६. ष्टुञ् स्तुतौ** । स्तौति । **उपसर्गात् सुनोति** (८।३।६५) इति षत्वम्– अभिष्टौति । स्तोता, प्रस्तोता, **कृसृभृ** (७।२।१३) इति नेट् — तुष्टोथ । **सिवादीनां वाड्व्यवायेऽपि** (७।३।७१) इति षत्वम् – पर्य-

---

१. भौवादिकः सवतिरनिट्, तेन सोता इत्येव युक्तः पाठः ।

२. तुदादौ 'कुङ्' पठ्यते । तेन 'कवते' इत्यात्मनेपद युक्तम् ।

३. अत्र "कवतिस्तावदव्यक्ते शब्दे वर्तते उष्ट्रः कोकूयते इति । कुवतिरप्यार्तस्वरे- चोकूयते वृषल इति, पीडित इत्यर्थः । कौतिस्तु शब्दमात्रे" इति न्यासवचनम् (७।४।६३) अप्यनुसन्धेयम् । स्मृतः क्षीरपाठः पुरुषकारे (पृष्ठ ३२) ।

ष्टौत् पर्यस्तौत् । **स्तौतिण्योरेव षण्यभ्यासात्** (८।३।६१) षः—तुष्टूषति । **परिनिविभ्यः सेव** (८।३।७०) इति षः—परिष्टौति । **एतिस्तुशासु** (३।१।१०९) इति क्यप्—स्तुत्यः । अप् (द्र० ३।३।५७) —स्तवः **प्रेः द्रुस्तुस्रुवः** (३।३।२७) घञ्—प्रस्तावः । **यज्ञे समिस्तुवः** (३।३।३१)—संस्तावः, अन्यत्र संस्तवः । **भ्राजभास** (३।२।१७७) इति क्विप्—ग्रावस्तुत् । करणे क्तिन् **इष्यते**[1] स्तुतिः । **दाम्नी** (३।२।१८२) इति ष्ट्रन्—स्तोत्रम् । **अर्तिस्तुसु** (उ० १।१४०) इति मन्—स्तोमः । **ष्टुभु स्तम्भे** (१।२७८) ऽस्मात् तु स्तोभः औतोऽनर्थकः श्रुतिपूरण.[2] ॥३१॥

३७. **ब्रूञ् व्यक्तायां वाचि । ब्रुव ईट्** (७।३।९३) ब्रवीति । **णिश्रन्थिग्रन्थिब्रूञात्मनेपदाकर्मकाणामुपसंख्यानम्** (३।१।८९ वा०) इति कर्मकर्तरि यक्चिणौ न स्तः—ब्रूते कथा स्वयमेव, अवोचत । **ब्रुव. पञ्चानामादित आहो ब्रुवः** (३।४।८४)—आह, आहुः । **आहिभुवोरीट् प्रतिषेधः** (१।१।५६ वा०) **आहस्थः** (८।२।३५)—आत्थ । **ब्रुवो वचिः** (२।४।५३)—वक्ता । **भव्यगेय** (३।४।६८) इति कर्तरि-प्रवचनीयश्चैत्रोऽनुवाकस्य । **चेलड्ब्रुव** (६।३।४३) इति लिङ्गात् कः—ब्राह्मणब्रुवः । **क्वसौ** (द्र० ३।२।१०७) ऊचिवान् । **उपेयिवाननाश्वाननूचानश्च** (३।२।१०९) वचिना ग्रहणात्[3] ॥३२॥

३८. **इण् गतौ** । एति । **एत्येधत्यूठ्सु** (६।१।८९) इति वृद्धिः—उपैति । इतः । **इणो यण्** (६।४।८१)—यन्ति । लिटि—**दीर्घ इणः किति** (७।४।६९)—ईयुः । एता । **एतेर्लिङि** (७।४।२४) उपसर्गाद् ह्रस्वः—समियात् । **इणो गा लुङि** (२।४।४५), **गातिस्था** (२।४।७७) इति सिज्लुक्, **गापोर्ग्रहणेनेण्पिबत्योर्ग्रहणात्** (द्र० २।४।७७ वा०)—अगात्, अगुः । **णौ गमिरबोधने** (२।४।४६)—गमयति,

---

१. श्रुयजिस्तुभ्यः करणे (३।३।९४) इति वार्त्तिकेनेति शेषः । वार्त्तिक च ल्युड्बाधनार्थम् ।

२. साम्नि (गीतयां) प्रयुज्यमाना मन्त्रबाह्या 'ओ हाइ' इत्येवमादयोऽनर्थकाः-शब्दाः स्तोभा इत्युच्यन्ते । तत्सामान्यादनर्थार्थकोऽप्ययं स्तोभशब्दः । यदाह सूत्रलक्षणे—अस्तोभमनवद्य च सूत्र सूत्रविदो विदुः (वायु पुराण ५९।१४२) इति ।

३. तादृशनिपातनात् वक्तेरनूचान इति भावः ।

बोधने—प्रत्याययति । **सनि च** (२।४।४७)—जिगमिषति, बोधने—अर्थान् प्रतीतिषति । **उपेयिवाननाश्वान्** (३।२।१०९) इत्युपेयिवान् । **एतिस्तुशासु** (३।१।१०९) इति क्यप्—इत्यः । **श्याद्व्यध** (३।१।१४१) इति णः—अत्यायः । **इण्नश्जि** (३।२।१६३) इति क्वरप्—इत्वरः । **एरच्** (३।३।५६)—अन्वयः, समयः । **परिन्योर्नीणोर्द्यूताभ्रेषयोः** (३।३।३७) घञ्—न्यायः । **परावनुपात्यय इणः** (३।३।३८) तवाद्य पर्यायः[1], नेह विपर्ययः । **संज्ञायां समज** (३।३।९९) इति क्यप्—इत्या । **छन्दसीणः** (उ० १।२) उण्—आयुः । **किंजरयोः श्रिणः** (उ० १।४) ञुण्—जरायुः । **दुरीणो लोपश्च** (उ० २।२०) इति रक्—दूरम् । **एतेर्णिच्च** (उ० २।११८) इत्युसिः—आयुस् । **इण्सिदीङुष्यविभ्यो नक्** (उ० ३।२)—इनः । **इण्भीका** (उ० ३।४३) इति कन्—एकः । **हसिमृग्रिण्वा** (उ० ३।८६)इति तन्—एतो वर्णः । **इणः किद्** (उ० ३।१५३) इति भः—इभः । **अध्यायन्यायोद्याव**[2] (३।३।१२२) इति न्यायः । **इण आगसि**, (उ० ४।१९८)इत्यसुन् नुट् च—एनस् । **असुन्** (द० उ० ९।४९) अयः शस्त्रम् । **इण आगोऽपराधे** (उ० ४।२१७ श्वेत०)—आगस् । रक् (द्र० उ० २।२८) इरा[3] । **समीणः** (उ० २।११) इति थक्—समिथः संगम । **सानसिवर्णसि**(उ० ४।१०७) इतील्वलोऽसुरः । **कुवश्चड् दीर्घश्च, समीणः**[4] (उ० ४।९२, ९३) समीच समुद्र । एतीत्येणो मृग ॥३३॥

**३९. इङ् अध्ययने** । इङोऽधिनावश्यंभावी योगः । **यदाह–कश्चित् तमनुवर्तते**[5] । अधीते ॥ अधीयते—**अकृत्सार्वधातुकयोर्दीर्घः** (७।४।२५) । **गाङ् लिटि** (२।४।४९) अधिजगे वेदम् । **विभाषा लुङ्लृङोः** (२।४।५०) **गाङ्कुटादिभ्योऽञ्णिन्ङित्** (१।२।१)इति ङित्त्वम्, **घुमा-**

---

१. इतोऽग्रे 'क्रमः' इत्यधिकं क्वचित् ।

२. उणादिप्रत्ययान्तेषु कथमष्टाध्यायाः सूत्रमुद्धृतम् ? किमत्र पाठभ्रंशो-जातः ?

३. 'गौर भौर् वाक्' इत्यधिक क्वचित् । अत्र 'गौ. भू , वाक्' इति शुद्ध पाठो द्रष्टव्यः ।

४. 'समीण.' सूत्रमुणादौ द्विः पठ्यते । सन्देहनिवृत्त्यर्थमत्र पूर्वसूत्रेण सह निर्दिष्टम् । ५. अयं कृत्स्नः पाठः—धात्वर्थं बाधते कश्चित् कश्चित्तमनुवर्तते । विशिनष्टि तमेवार्थमुपसर्गगतिस्त्रिधा ॥

**स्थागापाजहाति** (६।४।६६) इतीत्वम्—अध्यगीष्ट, अध्यैष्टः अध्यगीष्यत, अध्यैष्यत। **इङश्च** (२।४।४८) इति सनि गमिः, **अज्झनगमां सनि** (६।४।१६) इति दीर्घः—अधिजिगांसते। **क्रीङ्जीनां णौ** (६।१।४८) आत्त्वम्—अध्यापयति, **बुधयुध** (१।३।८६) इत्यतङ्[1]। **णौ च संश्चङोः** (२।४।५१)—अधिजिगापयिषति, अध्यापिपयिषति; अध्यजीगपत्, अध्यापिपत्। **इङ्धार्योः शत्रकृच्छ्रिणि** (३।२।१३०)—अधीयन् पारायणम्। **इङश्च** (३।३।२१) इति घञ्—उपाध्यायः। **अपादाने स्त्रियां वा ङीष्** (३।३।२१ वा०)—उपाध्यायी, उपाध्याया। **अध्यायन्यायोद्यावा** (३।३।१२२) इत्यध्यायः साधुः ॥३४॥

४०. **इक् स्मरणे**। ककारो **ऽधीगर्थ** (२।३।५२) इति विशेषणार्थः—मातुरध्येति। **इण्वदिकः** (२।४।४५ वा०) अतिदेशाद् अध्यगात्, अधियन्ति, अधिगमयति, अधिजिगमिषति। अधीत्य ॥३५॥

४१. **वी गतिप्रजनकान्त्यसनखादनेषु**। प्रजनः प्रथगर्भग्रहणम्, असनं क्षेपः, अशनं व्याप्तिरित्येके। वेति **प्रजने वीयतेः** (६।१।५५) इति णावात्त्वं वा—पुरोवातो गाः प्रवापयति, प्रवाययति। **वीपतिभ्यां तनन्** (उ० ३।१५०)—वेतनम्। **वियस्तुट् च** (द० उ० ९।४५) इत्यसच्—वेतसः। **असुन्** (द० उ० ९।४९)—वयस्। **वीज्याज्वरिभ्यो निः** (उ० ४।४८)—वेणिः। **गुधृवीपचिवचि** (द० उ० ८।८९) इति त्रन्[2]—वेत्रम्। **अजिवृरीभ्यो निच्च** (उ० ३।३८) इति णुः—वेणुः। वीतम् असारं हस्त्यश्वम्। **क्तिच्** (द्र० ३।३।१७४) वीतिरश्वः ॥३६॥

४२. **या प्रापणे**। **नेर्गद** (७।४।१७) इति णत्वम्—प्रणियाति। **आच्छीनद्योर्नुम्** (७।१।८०) वा—याती यान्ती। **लङः शाकटायनस्यैव** (३।४।१११) इति झेर्जुस् वा—अयान्, अयुः। लुङि—**यमरमनमातां सुक् च** (तु० ७।२।७३) इट् च—अयासीत्। **यश्च यङः** (३।२।१७६) वरच्—यायावरः। **यो द्वे च** (उ० १।२१) इति ययुरश्वः। **कमिमनिजनि** (उ० १।७३) इति तुः—यातुः राक्षसः। **हुयामा**

---

१. अतङ् अर्थाद् आत्मनेपदाभाव,, परस्मैपदमिति यावत्।

२. अत्र लिबिशेन 'त्रन्' पाठोऽशुद्ध इति मत्वा 'सार्वत्रिकोऽयं पाठः' इति टिप्पणी कृता। यद्यपि पञ्चपाद्यां, क्वचिच्च दशपाद्यां 'त्रः' इत्येवोपलभ्यते, तथापि दशपाद्याः क. ख. ग. हस्तलेखेषु 'त्रन्' इत्येव पठ्यते।

(उ० ४।१६८)इति अन्—यात्रा। गम्यादौ(गण० ३।३।३) यायी। **हुयामा** (उ० १।३७)इति मृगयुः साधुः। **अर्तिस्तुसु** (उ० १।१४०) इति मन्—यामः ॥३७॥

४३. **वा गतिगन्धनयोः**[1]। वाति। **नेर्गद** (८।४।१७) इति णत्वम्—प्रणिवाति। वाती, वान्ती। **वो विधूनने जुक्** (७।३।३८)—पक्षैकेनोपवाजयति। **'वीजयतिः'** इति तु **लौकिको धातुः**[2]। **निर्वाणोऽवाते** (८।२।५०) साधुः, वाते तु निर्वातो वायुः, गत इत्यर्थः। **अर्तिस्तुसु** (उ० १।१४०) इति मन्—वामः। **कृवापाजि** (उ० १।१) इत्युण्—वायुः। **हसिमृग्रिण्वा** (उ० ३।८६) इति तन्—वातः ॥३८॥

४४. **भा दीप्तौ**। भाति। **दाभाभ्यां नुः** (उ० ३।३२)—भानुः। **चिन्तिपूजि** (३।३।१०५) इति चकारारराद् भानं[3] भा। भास्तु भासेः (१।४१२)। **न भाभूपूकमि** (८।४।३४) इति प्रभानम्। प्रभा (द्र० ३।३।१०६)। सर्वादिपाठाद् (गण० १।१।२७) भवतु ॥३९॥

४५. **ष्णा शौचे**। स्नाति। निष्णाति। **ग्लास्नावनुवमां च** (१।५५६) इति मित्त्वम्—प्रस्नपयति[4], अनुपसर्गाद् वा[5] (द्र० १।५५५)—स्नापयति स्नपयति। **निनदीभ्यां स्नातेः कौशले** (८।३।८९)षत्वम्—निष्णातः, नदीष्णः। घञर्थे कः (द्र० ३।३।५८ वा०)—प्रस्नः। भ्वादौ **ष्णै वेष्टने** (१।६५५)—**स्नायति**। **स्नामदि** (उ० ४।१११) इति वनिप्—स्नावा, स्नायुः ॥४०॥

---

१ 'गन्धनं मर्दनम्' इत्यधिक क्वचित्।

२. द्र० क्षीरतरङ्गिण्याम् 'ईज' (१।११२) धातुव्याख्यानम्—"वीजेर्लौकिकाद् अवीजयत्। तत्रैव टिप्पणमपि द्रष्टव्यम् (पृष्ठ ४० टि० १)।

३. लिबिशेन 'चकाराद् भानम्' इत्यत्रैव वाक्यसमाप्तिचिह्नं निदिष्टम्, तदनन्तरं 'भा' इत्येतावत् स्वतन्त्रमुदाहरणं स्वीकृतम्, तदसत्। नहि 'चिन्तिपूजि' (३।३।१०५) इत्यनेन 'भानम्' पदं सिद्ध्यति, अपि त्वनेन सूत्रेण चिन्तादिपदप्रसिद्ध्यै 'अङ्' विधीयते। तस्मादयमत्र क्षीरस्वामिन आशयः—अङ्विधायके 'चिन्तिपूजि' इत्यादिसूत्रे चकारेण 'भा' धातोरपि स्त्रियां भावेऽङ्प्रत्ययो बोध्यः, तेन (टापि) भान 'भा' इत्याकारान्तं भापदं प्रसिद्ध्यति।

४. आद्ययोरप्राप्तौ विकल्प इत्युक्तं प्राक् (१।५५६ व्याख्याने)। तदनुसारं सोपसर्गात् प्रस्नापयति इत्येव प्राप्नोति। तथैव पूर्वम् (१।५५६)उदाहृतमपि।

५. अनुपसर्गाद्वा' इति त्वनुवर्तमानं पदमत्र निर्दिष्टम्।

४६. **श्रा पाके**। श्राति, पच्यते स्वयमेवेति कर्मकर्तर्याहुः[1]। णौ मित् (द्र० धातुसूत्र १।५४७)—श्रपयति। श्राणा यवागूः। **शृतं पाके, क्षीरहविषोः** (६।१।२७ सू० भाष्यं च) ण्यन्ताण्यन्तयोर्निपातनम्[2]॥

४७. **द्रा कुत्सितायां गतौ**। कुत्सिता गतिः पलायनम्, निद्रा च।[3] द्राति। **नेर्गद** (८।४।१७) इति णत्वम्—प्रणिद्राति। **स्पृहिगृहिपति** (३।२।१५८) इत्यालुच्—निद्रालुः। निद्राणः। भ्वादौ **द्रै स्वप्ने** (१। ६४५)—द्रायति॥४२॥

४८. **प्सा भक्षणे**। प्रणिप्साति (द्र० ८।४।१७)—**श्वनुक्षन्** (उ० १।१५६) इति विश्वप्साऽग्निः[4]॥४३॥

४९. **पा रक्षणे**। पाति। **पातेर्लुग्** (७।३।३७ वा०) णौ—पालयति। **नप्तृनेष्टृ** (उ० २।९५) इति पिता। रक् (द्र० उ० २।१३)—विप्रः। असुनि **पातेस्थुक्** (तु० उ० ४।२०४)—पाथोऽम्बु। **पानीविषिभ्यः पः** (उ० ३।२३)—पापम्। **इण्भीकापा** (उ० ३।४३)—इति कन्—पाको[5] बालः। **पातेर्डतिः** (उ० ४।५७)—पतिः। **नभ्राण्नपाद्** (६।३।७५) इति नपात्[6] **पातेर्डुमसुन्** (उ० ४।१७८)—पुमान्। के—नृपः (द्र० ३।२।३) अधिपः(द्र० ३।१।१३६)। **नामन्सामन्** (द० उ० ६।७९)—इति पाप्मा। **ष्ट्रन्** (द० उ० ८।७९)—पात्रम्। **मनिन्** (द० उ० ६।७३)—पामा। भ्वादौ **पा पाने** (१।६५७)—पिबति, **पै ओवै शोषणे** (१।६५४)—पायति॥४४॥

---

१. क आह इति न ज्ञायते। २. अत्र प्रदीपोद्द्योतावपि द्रष्टव्यौ।

३. स्मृतमिद धातुवृत्तौ (पृष्ठ २५५)।

४. प्सातेः क्विपि प्साः। नास्ति प्सा भक्षणं यस्य स अप्सः। 'यदप्स इत्यभक्षस्य' इति निरुक्तम् (५।१३)। अस्मिन्नेव खण्डे 'अप्स इति रूपनाम। अप्साते' इत्यनेन अप्सा' इति स्वतन्त्रो धातुरप्यस्तीति ज्ञाप्यते।

५. पाकशब्दः पवित्रार्थेऽपि प्रयुज्यते। तथा च मन्त्रवर्णः—'यो मा पाकेन मनसा चरन्तमभिचष्टेऽनृतेभिर्वचोभिः' (ऋ० ७।१०४।८)। अयमेव शब्दोऽस्मिन्नेव चार्थे फारसीभाषायामपि प्रयुज्यते। अत्र विशेषः—स० व्या० शास्त्र का इतिहासनाम्नि ग्रन्थे (भाग १ पृष्ठ ५०, च० संस्क०) ऽवलोकनीयः।

६. इतोऽग्रे—'पातयतेस्त्विद निपातन मुक्तम्—तनूनपात् (गण० ६।२। १४०)' इत्यधिकम्।

**५०. रा दाने**[1] । राति । **रातेर्डैः** (उ० २।६६) इति रा धनम् । कन् (द्र० उ० ३।४०) राका पूर्णिमा । **राशदिभ्यां त्रिप्** (द० उ० ४।६७ कपाठः) — रात्रिः ॥४५॥

**५१. ला आदाने** । लाति । **लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने**[2] (तु० ७।३।३६) णौ— घृतं विलालयति, विलापयति । **आतोऽनुपसर्गे कः** (३।२।३)— बहुल[3] ॥४६॥

**५२. दाप् लवने** । पकारो **दाधा घ्वदाप्** (१।१।२०) इत्यर्थः[4] । दाति क्षेत्रम् । दायन्ते व्रीहयः । दाता । **दाम्नी** (३।२।१८२) इति ष्ट्रन्—दात्रम् ॥४७॥

**५३. ख्या प्रकथने** ।[5] आख्याति । ख्याता[6] । **अस्यतिवक्तिख्यातिभ्योऽङ्** (३।१।५२)—आख्यत् । **न ध्याख्या** (८।२५७) इति निष्ठानत्वं नास्ति ख्यातः । **समाने ख्यश्च**[7] (तु० उ० ४।१३७)—इति सखा ॥४८॥

**५४. प्रा पूरणे** । प्राति । क्ते (द्र० ८।२।४३)—प्राणः ॥४६॥

**५५. मा माने** । मानं वर्तनम् । पात्रे माति, प्रणिमाति । माती मान्ती । **घुमास्था** (६।४।६६) इतीत्वं नास्ति, **सर्वत्र हि पामाग्रहणं**-

---

१. अष्टाध्यायीसूत्रपाठे यथा संहितापाठ आश्रीयते व्याख्यातृभिस्तथैव धातुसूत्रेष्वपि संहितापाठ एवाश्रीयते वृत्तिकारैः । तदनुसारम् अत्र 'रादाने' इत्येव पाणिनीयः पाठः । तेन 'रा दाने' 'राऽऽदाने' इत्युभयथा विच्छेदोऽत्र प्रामाणिकः । तदुक्त निरुक्तकारेण '[अप्स इति व्यापिन] तद् रा भवति रूपवती । तदनयाऽऽत्तमिति वा तदस्यै दत्तमिति वा' (निरुक्त ५।१३) । धातुसूत्राणा संहितापाठस्य प्रामाण्यार्थम् अस्मदीयः 'स० व्या० शास्त्र का इतिहास' ग्रन्थस्य एकविंशतितमाध्याये (भाग २, पृष्ठ ७२-७४; स २०४१) द्रष्टव्यम् । क्षीरतरङ्गिण्या उपोद्घातेऽपि द्रष्टव्यम् ।

२. 'विपातने' पाठान्तरम् । 

३. 'बहुलम्' पाठा० ।

४. 'इति पिदर्थ.' पाठा० ।

५. 'प्रथने' पाठा० ।

६. 'ख्यातः' पाठा० ।

७. नैतादृश्यानुपूर्वी क्वचिदुपलभ्यते । सायणीय ऋग्भाष्ये (१।२२।८) 'समाने ख्यश्चोदात्त.' इत्येव पठति ।

**लुग्विकरणस्य णत्ववर्जम्**[1]—मायते। **सनि मीमा** (७।४।५४) इत्यच इस्—मित्सति। **हुयामाश्रुवसिभसिभ्यस्त्रन्** (तु० उ० ४।१६८)—मात्रा। **चन्द्रे मो डित्** (उ० ४।२२८)—चन्द्रमाः। **द्यतिस्यतिमा** (७।४।४०) इतीत्—मितः। **मः सः**[2] —मासः। **मापो रुरौ च** (द० उ० १।१५७)—मेरुः। **माछाससिसूभ्यो यः** (उ० ४।१०८ श्वेत०)—माया। **ऋज्रेन्द्र** (उ० २।२८) इति माला ॥५०॥

**५६. अनुदात्ताः ।**

**[अथानिट् परस्मैपदी]**

**५७. वच भाषणे**[3], **५८. अनुदात्त उदात्तेत्** । वक्ति। वक्ता। **वचिस्वपि** (६।१।१५) इति सम्प्रसारणम्—उवाच,[4] उक्तम्। **अस्यतिवक्तिख्यातिभ्योऽङ्** (३।१।५२), **वच उम्** (७।४।२०) अवोचत्। **भव्यगेय** (३।४।६८) इति कर्तरि प्रवचनीयोऽनुवाकस्य चैत्रः। **यजयाचरुच** (७।३।६६) इति कुत्वं नास्ति—प्रवाच्यम्। **वचोऽशब्द-**

---

१. स्मृतमिदं प्रक्रियाकौमुद्याम् (भाग २, १६०)। धातुवृत्तौ स्मृत्वा निराकृतम् (पृष्ठ २५८)। इह हि वैयाकरणानां विविधाः प्रवादा दृश्यन्ते। तथाहि—"गामादाग्रहणेष्वविशेषः" (परि० सीरदेव १०८, नागेश ११५ शेषाद्रिनाथ ६८) इत्यनया परिभाषया लुग्विकरणपरिभाषा (परि० सीर० ८६, नागेश ६१) बाध्यत इति सीरदेवनागेशशेषाद्रिनाथाः। वृत्तिकारोऽप्यत्रैवानुकूल इति न्यासकार आह (६।४।६६)। तथा सति घुमास्था (६।४।६६) इत्यादिना ईत्वे मीयत इत्येव भवितव्यम्। मतान्तरे 'गामादा' परिभाषया लुग्विकरणपरिभाषा न बाध्यत इत्यपि न्यासकारसीरदेवावाहतुः। तथा सति मायत इत्येव भवति। क्षीरस्वाम्युक्तं मत नास्माभिः क्वचिदुपलब्धम्। यदि केवले णत्व (८।४।१७) एव मासामान्यस्य ग्रहणमभिप्रेत स्यात्तर्हि परिभाषाया माशब्दनिवेशो व्यर्थ एव, तत्र सूत्र एव तथा व्याख्यानसंभवात्। अपि च णत्वेऽपि लुग्विकरणपरिभाषा कुतो न प्रवर्तत इति वक्तव्यम्। तस्मात् बहुमतानुसारमीत्वेन भवितव्यमेव इति युक्त पश्यामः।

२. 'मासश्च' इति दशपाद्युणादि-पाठः (६।२७), 'माङः सः' इति कातन्त्रोणादिदुर्गसिंहवृत्तौ (५।६४) पाठ उपलभ्यते। लिबिशेन तु हैमोणादिसूत्रनिदर्शनाय ५६४ सख्यानिर्दिष्टा।

३. परिभाषणे पाठान्तरम्।

४. उवाचेत्यत्र तु 'लिट्यभ्यासस्य' (६।१।१७) इति सम्प्रसारणम्।

**संज्ञायाम्** (७।३।६७)—वाच्यम्, शब्दे--वाक्यम् । घञ् (द्र० ३।३।१९) - अनुवाकः, वाकः । **उपेयिवान्** (३।२।१०९) इत्यनूचानः । श्लोकवचः पचादौ[1] (गण० ३।१।१३४)। **कृके वचः कश्च** (उ० १।६) इति ञुण्— कृकवाकुः कुक्कुटः । **पातृतुदिवचि** (उ० २।७) इति थक्—उक्थं साम । **गुधृवीपचिवचि** (उ० ४।१६७) इति अन्—वक्त्रम् । **क्विब्वचि** (उ० २।५७) इति दीर्घः—वाक् । **असुन्** (द० उ० ७। ४९)—वचस् । **पुंसि सञ्ज्ञायां घः** (३।३।११८)—वकः । **वचन्तीति नेष्यते, अनभिधानात्**[2] । चुरादौ वाचयति[3] । **पारायणिकैर्नाधीतो-ऽयम्**[4] ।।५१।।

**[अथ सेटः परस्मैपदिनः]**

**५६. विद ज्ञाने** । इतश्चत्वारः सेटः परस्मैपदिनश्च । वेत्ति, वित्तः विदन्ति । **विदो लटो वा** (३।४।८३) इति णलादयो वा—वेद, विदतुः, विदुः । **दश्च** (८।२।७५) इति दस्य वा रुः—अवेः, अवेत् । **समो गमि** (१।३।२९) इति तङ्—संवित्ते । **वेत्तेर्विभाषा** (७।१।७) इति रुट्—संविद्रते बुधः, संविदते । **रुदविदमुष** (१।२।८) इति सेट् संश्च क्त्वा च कितौ वा[5]- विविदिषति विवेदिषति, विदित्वा,

---

१. पचादौ 'श्लोकवचः' न पठ्यते । तस्याकृतिगणत्वात्साधुत्वं सम्भवति ।

२. उद्धृतमिद धातुवृत्तौ (पृष्ठ २५८) । वचन्ति प्रयोगोऽनभिधानान्न भवतीत्यत्र न किंचित्साक्षात् शिष्टवचनमुपलभ्यते । धातुवृत्तौ (पृष्ठ २५८) तु मतान्तरमप्युपन्यस्यते—'आत्रेयस्तु एकवचनान्तानुदाहृत्य अन्यत्राभिधानमित्येके इति' । स्कन्दस्वामी तु स्वग्भाष्ये (१।५४।८) 'प्रवचन्ति' इत्यपि प्रयुक्तवान् ।

३. क्षीरस्वामी चुरादौ स्वयं न पठति, 'वद संदेशने' (१०।२२९) इति सूत्रव्याख्याने चान्द्रमतेनोपन्यस्यति । यथाह—'चन्द्रो वचेति अपाठीत्' ।

४. सायणेनास्यार्थः 'पारायणिकैर्वच परिभाषणे धातुर्न पठितः' इत्यन्यथाव-बुध्यास्य धातोः प्रामाणिकतां प्रत्यपादि । (पृ० २५९) चौरादिको वद संदेशने पारायणिकैर्न पठित इति तु स्वामिनोऽभिप्रायः । अयमेव चाभिप्रायः पुरुषकारेण स्वामिनाम्ना स्मृतः (पृ० ५१) । प्रक्रियाकौमुद्यामपि (भाग २ पृष्ठ १९७) द्रष्टव्यम् ।

५. अत्र स्वामी भ्रान्तः । रुदविदसूत्रं हि रलो व्युपधाद्धलादेः संश्च (१।२। २६) इत्यादिना विकल्पे प्राप्ते नित्यं कित्त्वं विधत्ते । तेन विविदिषति विदित्वा इत्येव भवति । अत्र 'रुदिर् अश्रुविमोचने' (२।६२) इति सूत्रस्य तरङ्गिण्यपि द्रष्टव्या ।

वेदित्वा । **उषविदजागुरन्यतरस्याम्** (तु० ३।१।३८) इत्यां वा विदांचकार, आमि विदेरगुणत्वमाहुः (द्र० ३।१।३८ भाष्य), विवेद । **सिजभ्यस्तविदिभ्यश्च** (३।४।१०६) इति झेर्जुस्—अविदुः । **विदांकुर्वन्त्वित्यन्यतरस्याम्** (३।१।४१), पक्षे – विदन्तु । **णौ अनुपसर्गाल्लिम्पविन्द** (३।१।१३८) इति शः—वेदयः । **सत्सूद्विष्** (३।२।६१) इति क्विप्—वेदवित् । क्ते[1] विदितः । **विदिभिदिछिदेः कुरच्** (३।२।१६२)—विदुरः । **विन्दुरिच्छुः** (३।२।१६९) इति विन्दुर्विद्वान् । **बिदि अवयवे** (१।५३) ऽस्मात् तु बिन्दु[2]र्जलकणः, ओष्ठ्यादिः । **संज्ञायां समज** (३।३।९९) इति क्यप्—विद्या । **घट्टिवन्दिविदिभ्यो** (३।३।१०७ वा०) युच्—वेदना । **कर्मणि दृशिविदोः साकल्ये** (३।४।२९) णमुल्—ब्राह्मणवेदं भोजयति । **विदेः शतुर्वसुः** (७।१।३६) वा—विद्वान्, विदन् । **विभाषा गमहन** (७।२।६८) इतीट्—विविद्वान् विविदिवान् । **हृपिशिरुहि** (द० उ० १।४७) इतीन्—वेदिः । **हलश्च** (३।३।१२१) इति करणे घञ्—वेदः । **नभ्राण्नपाद्** (६।३।७५) इति न विद्यते—नवेदाः, असुन् सर्ववेदाः सर्वस्वदक्षिणक्रतुयाजी[4] । दिवादौ **विद सत्तायाम्** (४।६३)—विद्यते । तुदादौ **विद्लृ लाभे** (६।१३६)—विन्दति । रुधादौ **विद विचारणे** (७।१७)—विन्त्ते, विनत्ति[5] । चुरादौ **विद चेतनाख्यानविवादेषु** (१०।१५४) तङानी—वेदयते ॥५२॥

६०. **अस भुवि**[6] । भवनं भूः, सत्ता । अस्ति । **श्नसोरल्लोपः** (६।४।

---

१. अत्र लिबिशेन भ्रान्त्या कित्त्वविकल्पविधायकसूत्रस्य (१।२।२६) संख्या निर्दिष्टा ।

२. 'बाहुलकादु' इति बिदि अवयवे (१।५३) इत्यत्र स्वामी ।

३. उज्ज्वलदत्तेन 'गतिकारकयो.' (उ० ४।२२६) सूत्रवृत्तौ व्याख्यातः ।

४. 'सर्ववेदाः स येनेष्टो यागः सर्वस्वदक्षिणः' इत्यमरः (२।७।९) ।

५. रुधादौ विदधातुरनुदात्तेत् पठ्यते (द्र०क्षीर० ७।१७) । तेन 'विनत्ति' इति रूपं चिन्त्यम् ।

६. अस भुवि, स भुवि इति द्वौ स्वतन्त्रौ धातू । वैय्याकरणैस्तु उभयोर्धात्वोः प्रसिद्धानां पदानां साधुत्वज्ञापनाय कैश्चिद् 'अस भुवि' इति पठ्यते, कैश्चित् 'स भुवि' इति । द्र०—'अस्ति सकारमातिष्ठते, आगमौ गुणवृद्धी आतिष्ठते' (महा० १।३।२२) । 'स भुवि' इत्यापिशलीयः पाठः । (द्र० न्यासपदमञ्जरी व्याख्याने १।३।२२) ।

१११)—स्तः, सन्ति, सन्। **उपसर्गप्रादुर्भ्यामस्तिर्यच्परः** (८।३।८७) इति षः—अभिष्यात् अभिषन्ति, प्रादुःष्यात् प्रादुःषन्ति, नेह—अभिस्तः। **तासस्त्योर्लोप** (७।४।५०)—त्वमसि, व्यतिसे। **रि च** (७।४।५१)—व्यतिरे। **ह एति** (७।४।५२) इति सस्य हः—व्यतिहे। **ध्वसोरेद्धावभ्यासलोपश्च** (६।४।११९)—एधि। **अस्ति सिचोऽपृक्ते** (७।२।९६) इतीट्—आसीत्। **अस्तेर्भूः** (२।४।५२), **गातिस्था** (२।४।७७) इति सिज्लुक्, **आहिभुवोरीट्**, **प्रतिषेधः** (१।१।५६वा०), **भूसुवोस्तिङि** (७।३।८८) इति गुणाभावः—अभूत्। **अनुप्रयोगे तु भुवाऽस्त्यबाधनम्** (२।४।५२ वा०)—कारयामास। **कृभ्वस्तियोगे** (५।४।५०) च्विः—शुक्लीस्यात्॥५३॥

६१. **मृजूष् शुद्धौ**। **व्रश्चभ्रस्ज** (८।२।३६) इति षः, **मृजेर्वृद्धिः** (७।२।११४)—मार्ष्टि। **मृजेरजादौ संक्रमे विभाषा वृद्धिः**[1]=परिमृजन्ति परिमार्जन्ति। ऊदित्त्वाद् (द्र० ७।२।४४) वेट्—मार्ष्टा मार्जिता। मृष्टः। **मृजेर्विभाषा** (३।१।११३) क्यप् परिमृज्यः, परिमार्ग्यः। **तुन्दशोकयोः परिमृजापनुदोः** (३।२।५) कः—तुन्दपरिमृजोऽलसः। घञ् (द्र० ३।३।१८,१९)—मार्गः। भिदादौ (**गण०** ३।३।१०४) मृजा। **कञ्जिमृजिभ्यां चिद्** (उ० ३।१३७) **इत्यारन्**—मार्जारः, मार्जालः। **मृजेष्टिलोपश्च** (उ०१।११०) इति कलच्—मलः। चुरादौ **मृजूष् शौचालंकारयोः** (१०।२३७)—मार्जयति। मार्जना (द्र० ३।३।१०७)। मार्जितः, मार्जित्ता रसालेति **रूढिः** (द्र० अमर २।९।४४)॥५४॥

६२. **रुदिर् अश्रुविमोचने**। **रुदादिभ्यः सार्वधातुके** (७।३।७६) इतीट्—रोदिति। लङि—**रुदश्च पञ्चभ्यः** (७।३।९८) इतीट्—अरोदीत्, **अड् गार्ग्यगालवयोः** (७।३।९९)—अरोदत्। रुद्याद्—इतीडटौ पूर्वविप्रतिषेधेन बाधित्वा यासुट्[2] (द्र० ३।४।१०३)। **इरितो वा** (३।१।५७) इत्यङ्—अरुदत् अरोदीत्। **रलो व्युपधाद्** (१।२।२६) इति निषेधे प्राप्ते **रुदविदमुष** (१।२।८) इति संश्च क्त्वा च

---

१. 'अथान्ये वैयाकरणा मृजेरजादौ संक्रमे विभाषा वृद्धिमारभन्ते' इति भाष्यम् (१।१।३) अत्रानुसंधेयम्।

२. उद्धृतं धातुवृत्तौ (पृष्ठ २६२)।

कितौ वा[1]—रुरुदिषति, रुरोदिषति, रुदित्वा रोदित्वा । **रोदेर्णिलुक् च** (उ० २।२२) इति रक्—रुद्रः ॥५५॥

६३. **उदात्ता उदात्तेतः** ॥

[**अनिट् परस्मैपदी**]

६४- **ञिष्वप् शये**, **६५ अनुदात्त उदातेत्** । स्वपिति । सुष्वाप । **सुविनिर्दुर्भ्यः** (८।३।८८) इति षः । सुषुप्यते । **वचिस्वपि** (६।१।१५) इति सम्प्रसारणम् सुषुपुः । लङि (द्र० ७।३।९८,९९) अस्वपीत् अस्वपत् । लुङि अस्वाप्सीत् । **रुदविद** (१।२।८) किति सुषुप्सति, सुप्त्वा । **स्वापेश्चङि** (६।१।१८)सम्प्रसारणम्—असूषुपत् । **स्वपो नन्** (३।३।९१)—स्वप्नः । **ञीतः क्तः** (३।२।१८७)—सुप्तः । **स्वपितृषोर्नजिङ्** (३।२।१५२)—स्वप्नक् ॥९६॥

[**अथ सेटः परस्मैपदिनः**]

६६. **श्वस प्राणने** । प्राणनं जीवनम् । इतो वष्टयन्ता (२।८२) द्वादश सेटः । श्वसिति । अश्वसीत्, अश्वसत् । लुङि—**अतो हलादेर्लघोः** (७।२।७) वा[2] वृद्धिः—अश्वसीत्, अश्वासीत् । **श्याद्व्यध** (३।१।१४१) इति णः—श्वासः । **काशकृत्स्ना अस्य निष्ठायाम् अनिट्त्वमाहुः**[3]—आश्वस्तः, विश्वस्तः । **चलनशब्दार्थाद्** (३।२।१४८) युच् श्वसनः ॥५७॥

---

१. अत्रापि भ्रान्तः स्वामी । न हि 'रलोव्युपधाद्' (१।२।२६) इति क्त्वासनो. कित्वं प्रतिषेधति, किं तर्हि विकल्पं विधत्ते । 'रुदविद' (१।२।८)इति तु नित्य कित्त्व प्रतिपादयति, न विकल्पम् । अतः 'रुरुदिषति रुदित्वा' इत्येव साधु । विद ज्ञाने (२।५९) सूत्रव्याख्यानेऽपीयमेवास्य भ्रान्तिः । उत्तर धातुसूत्र व्याख्याने '**रुदविद**' इत्यनेन नित्यं कित्त्वं विहितम् ।

२. क्षीरस्वामो 'ह्म्यन्तक्षण' (७।२।५)सूत्रे'शस' धातु पठति । तेन–'अशसीत्' इति शमेर्वृद्धिनिषेधो भवति ( क्षीरत० १।४८० पृष्ठ १०४) । तेनात्र स्वामिमते वृद्धिविकल्पः । ये तु ह्म्यन्तक्षण (७।२।५) सूत्रे 'श्वस' धातु पठन्ति, तेषाम् 'अश्वसीत् इत्येव भवति, शसधातोस्तु अशसीत् अशासीत् इत्युभयथा ।

३. स्मृतमिदं धातुवृत्तौ (पृष्ठ २९४) । काशकृत्स्नधातुपाठस्य कन्नडटीकायामेतद्धातुसूत्रव्याख्याने तादिप्रत्ययसामान्य इडाभाव उदाह्रियते । यथा—'श्वस्तिः, श्वस्तम्, श्वस्तव्यम्,' इति (पृष्ठ १२४) ।

६७. **अन च** । चात्[1] प्राणने । प्रपूर्वः—प्राणिति । प्राणीत् प्राणत्। **अनितेः** (८।४।१९) इति णत्वम् । **अन्तः** (८।४।२०)—प्राण् । **उभौ साभ्यासस्य**(८।४।२१) –प्राणिणिषति । **कॄवृजॄसि** (उ० ३।१०) इति नः - अन्नम् । **असुन्**(द० उ० ९।४९)—अनः शकटम् । अध्न्यादिषु (गण० उणादि ४।११२)अन्यः । **अनिदृशिभ्यां चित्** (तु० उ० ३।४१) अनीकम् । प्राणाद्या[2] घञि ।

६८. **जक्ष भक्षहसनयोः** ।[**जक्षिति**], जक्षति । अजक्षीत्, अजक्षत् । **जक्षित्यादयः षट्** (६।१।६)अभ्यस्तः । **नाभ्यस्ताच्छतुः** (७।१।७८) इति न नुम्—जक्षत् । **वा नपुसंकस्य** (७।१।७९) जक्षति कुलानि, जक्षन्ति । **सिजभ्यस्त**(३।४।१०९) इति झेर्जुस्—अजक्षुः । लुङि—अजक्षिषुः ।।५७।।

६९: **उदात्ता उदात्तेतः** ।

७०. **वृत्** । रुदादयः पञ्चोक्ताः ।।

७१. **जागृ निद्राक्षये** । सेट् । जागर्ति, जाग्रतः[3], जाग्रति बुधाः । **रिङ् शयग्लिङ्क्षु** (७।४।२८) इति प्राप्ते **जाग्रोऽविचिण्णल्ङित्सु** (७।३।८५) इति गुणः—जागर्यते । **उषविद—जागुर**[4]**न्यतरस्याम्** (तु० ३।१।३८) इत्याम् वा—जागरांचकार, जजागार । **णलुत्तमो वा** (७।१।९१)णित्—जजागार, जजागर । **ह्म्यन्तक्षण** (७।२।५) इति वृद्धिर्नास्ति—अजागरीत् । **जागर्तेरकारो वा** (३।३।१०१ वा०) जागरा, जागर्या । **जागुरूकः** (३।२।१६५)- जागरूकः । **जॄशॄस्तॄजागृभ्यः क्विन्** (उ० ४।५४)—जागृविः ।।५९।।

७२. **दरिद्रा दुर्गतौ** । सेट् । दरिद्राति । **इद् दरिद्रस्य** (६।४।११४)—दरिद्रितः । **श्नाभ्यस्तयोरातः** (६।४।११२) लोपः दरिद्रति । **दरिद्रातेरसार्वधातुके** (कातन्त्र ३।८।३४)[5] दरिद्र्यते, दरि-

---

१. 'चकारात्' पाठा० । २. प्राण-अपान-व्यान-उदान-समानाः ।

३. 'जागृतः' इति शुद्धः पाठो द्रष्टव्यः ।

४. जागृभ्य' पाठा० । क्षीरस्वामी सर्वत्र 'जागुर्' इत्येव पठति ।

५. अत्र लिबिशेनाबुद्ध्वा भाष्यवार्तिक द्रष्टु ६।४।११४,१ सख्या निर्दिष्टा ।

द्रायते **इत्येके** । पचादौ (द्र० ३।१।१३४) दरिद्रः । **दरिद्रातेर्वा**[1] इत्याम् — दरिद्रांचकार । ददरिद्रौ[2] । अभ्यस्ताज् (द्र० ३।४।१०९) **झेर्जुस्** —अदरिद्रुः, लुङि वा[3] —अदरिद्रीत् अदरिद्रासीत् । **तनिपतिदरिद्राणां** (तु० ७।२।४९ वा०) सनि वेट् — दिदरिद्रासति दिदरिद्रिषति । **न दरिद्रायके लोपो दरिद्राणे च नेष्यते, दिदरिद्रासतीत्येके दिदरिद्रिषतीति वा** (६।४।११४ वा०) । दरिद्रितः, यस्य विभाषा (७।२।१५) इतीण्निषेधो नास्ति, तत्रैकाच् इत्यनुवृत्तेः । **दरिद्रातेर्यालोपश्च** (उ० १।६०) इत्यूः — दद्रूः ॥६०॥

**७३. उदात्तौ** । नोदात्तेतौ, **दरिद्राजागृत्यनित्त्वस्मरणात्**[4] ॥

**७४. चकासृ दीप्तौ** । चकास्ति । चकासति । चकासत् । **कास्यनेकाज्ग्रहणाद्** (द्र० ३।१।३५ भाष्य) आम्—चकासांचकार । **तिप्यनस्तेः** (८।२।७३) इति सस्य दः —अचकाद् भवान् । **सिपि धातो रुर्वा** (८।२।७४)—अचकात् त्वम्, अचकास्त्वम् । अचकासेत् । चकासिता ॥६१॥

**७५. शासु अनुशिष्टौ** । अनुशिष्टिर्नियोगः । शास्ति । शासति । शासिता । **शास इदङ्हलोः** (६।४।३४) **शासिवसि** (८।३।६०) इति ष - शिष्टः । **शा हौ** (६।४।३५)-शाधि । **तिप्यनस्तेः** (८।२।७३) इति दः— अशाद् भवान् । **सिपि धातो रुर्वा** (८।२।७४) अशात् त्वम्, अशास्त्वम् । झेर्जुस् (द्र० ३।४।१११)—अशासुः । **सर्तिशास्त्यर्तिभ्यश्च** (३।१।५६) इत्यङ्—अशिषत् । **नाग्लोपिशास्वृदिताम्** (७।४।२) —अशशासत् । **एतिस्तुशासु** (३।१।१०९) इति क्यप्—शिष्यः । **तृन्तृचौ**[5] **शंसिक्षदादिभ्यः संज्ञायां चानिटौ** (उ० २।९४)—शास्ता[6] बुद्धः, प्रशास्ता ऋत्विक् । **वितन् आबादिभ्यः** (३।३।९४ वा)—शिष्टिः ।

---

१. अनुपलब्धमूलम् । मतमिद स्मृत धातुवृत्तौ (पृष्ठ २६६) । अत्र धातुवृत्तिरनुसंधेया । २. स्मृमिदं धातुवृत्तौ (पृष्ठ २६६) ।

३. 'अद्यतन्यां वा' इति वार्तिकम् (६।४।११४) अत्रानुसंधेयम् ।

४. द्र०—पृष्ठ ६, पं १ ।

५. तृंस्तृचौ पाठा० । ६. अप्तृन्तृच् (६।४।११) सूत्रे 'प्रशास्तृ' शब्दे प्रोपसर्गस्यातन्त्रत्वात् दीर्घः' । द्र० धातुवृत्ति; (पृष्ठ २६७) ।

शास्तिरुणादौ[1] । **भाषायां शासियुधि** (३।३।१३०) इति युच् – दुःशासनः । **उदितो वा**(७।२।५६) इट्—शिष्ट्वा, शासित्वा । शिष्टः ।६२।

७६. **उदात्तावुदात्तेतौ** ।

**[अथ सेटावात्मनेपदिनौ]**

७७. **दीधीङ् दीप्तिदेवनयोः**[2] । देवनं क्रीडा । आदीधीते । **यीवर्णयोर्दीधीवेव्योः** (७।४।५३) लोपः—आदीध्यते, आदीधिता । **दीधीवेवीटाम्** (१।१।६)इति गुणवृद्धी न स्तः—आदीध्यनम्, आदीध्यकः । दीधितिः—**अग्रहादीनाम्** (७।२।६ वा०) इति पर्युदासात् **तितुत्र** (७।२।९) इतीण्निषेधो नास्ति ।।६३।।

७८. **वेवीङ् वेतिना तुल्ये**[2] । **वी गत्यादौ**(२।३९), तत्तुल्यार्थे । **वेतनातुल्य इत्यपाठः** । आवेवीते । शिष्टं प्राग्वत् ।।६४।।

७९. **उदात्तौ** । नोदात्तेत्तौ अनित्वस्मरणात्[3] ।

८०. **वृत्** । जक्षित्यादयः प्रभवा अभ्यस्ता वृत्ताः ।

**[अथ सेटौ परस्मैपदिनौ]**

८१. **षस स्वने**[4] । सस्ति । **माछाससिसूभ्यो यः** (उ०४।१०९)—सस्यम् । **रास्नासास्ना** (उ० ३।१५) । **सस्ति ससने इति चैके** पेठः[5] — संस्ति ।।६५।।

८२. **वश कान्तौ** । कान्तिरिच्छा । वष्टि । **ग्रहिज्यावयि** (६।१।१६) इति संप्रसारणम्—उष्टः उशन्ति; उशन्, उशती । वशिष्यति । विवशिषति । यङि **न वशः** (६।१।२०) सम्प्रसारणम्—वावश्यते । ण्यन्ताल्ल्युः (गण० ३।१।१३४)—वाशनः । **वशेः कित्** (द० उ० ८।७३) इतीरन्—उशीरम् । वशः कनस् (द्र० उ० ४।२३९)—

---

१. अत्र पक्षान्तरणि धातुवृत्तौ द्रष्टव्यानि (पृष्ठ २६७) ।

२. इमौ छान्दसाविति भाष्यम् (१।१।६) । नेति कातन्त्रीयाः । पाणिनिस्तु न विशेषमाह । अत्र विशेषस्त्वस्मदीये 'संस्कृत व्याकरण शास्त्र का इतिहास' नाम्नि ग्रन्थे प्रथमभागे ३९-४० (च० संस्क०)पृष्ठयोर्द्रष्टव्यः ।

३. 'एकाचां च चिरेजिरेः' इति स्मरणात् (द्र० पृष्ठ ६, पं० १) ।

४. षस षसन' इति स्वामिपाठ इत्याह सायणः (धातु पृ० २६७) ।

५. अत्र धातुवृत्तिः (पृष्ठ २६७,२६८) द्रष्टव्या ।

उशनाः । उशिक् । (द्र० उ० २।७१) । **अब्विधौ वशिरण्योरुपसंख्यानम्** (३।३।५८ वा०) – वशः ।।६६।।

८३. **उदात्ता उदात्तेतः** ।

८४. **चर्करीतं च** । चर्करीतं परस्मैपदम्[1] । यङ्लुकः **पूर्वाचार्यसंज्ञैषा** । शपो लुक् प्रयोजनम् । वावदीति, नर्नर्ति । **दीधीङादयश्छान्दसाः**[2] ।।

**[अथानिड् आत्मनेपदी]**

८५. **ह्नुङ् अपनयने**, ८६. **अनुदात्तः** । अपनयम् अपलापः । निह्नुते चैत्राय, **श्लाघह्नुङ्स्था** (१।४।३४) इति सम्प्रदानम् । अपह्नोता ।।६७

७८. **वृत्** । स्वपादयः स्वरार्थं वर्तिताः[3] ।

**भट्टेश्वरस्वामिपुत्र-क्षीरस्वाम्युत्प्रेक्षितायां**
**धातुवृत्तौ क्षीरतरङ्गिण्यां**
**लुग्विकरणोऽदादिगणः**
**सम्पन्नः समाप्तः**[4] ।

---

१. सर्वं एव धातुवृत्तिकारा एतत्सूत्रव्याख्याने 'परस्मैपदम्' इति व्याचक्षते । तदयुक्तम् । अस्मात्सूत्रात् प्रागेव 'उदात्ता उदात्तेतः' इति सूत्रस्य पाठात् । अपि च 'परस्मैपदम्' इति व्याख्याने 'दाधर्त्ति' (७।४।६५) सूत्रभाष्यमपि न सगच्छते । तत्र हि 'देतिक्ते' निपातनाद् यङ्लुकः परस्मैपदित्व ज्ञापितम् । द्र० पृष्ठ ९० टि० ६ ।

२. नेदं धातुसूत्रम् । स्वामिवचन चैतत् । दीधीवेव्योश्छान्दसत्व भाष्यकृता 'दीधीवेवीटाम्' (१।१।६) सूत्रभाष्य उक्तम् । षसिवशी छान्दमाविति (६।१ ३ ) **सूत्रभाष्ये** पठ्यते । वश धातुस्तु लोकेऽपि प्रयुज्यते । यथा—'**वष्टिभागुरिरल्लोपम्** इति । तथा '**उशन्ति वाते**' इति चरके (सूत्र० ३।२०) प्रयुज्यते ।

३. स्वपादिर्हिंसामच्यनिटि (६।१।१८८) इति आद्युदात्तत्वार्थम् इति भावः ।

४. 'इति क्षीरतरङ्गिण्यां लुग्विकरणा अदादयः समाप्ताः' पाठा० ।

# ॥ अथ जुहोत्यादिगणः ॥

**१. हु दानादनयोः** । दानमत्र हविःप्रक्षेप, अदनं भक्षणम् । इतो डुधाञन्ता (३।१०) दशानिटः । **जुहोत्यादिभ्यः श्लुः** (२।४।७५) **श्लौ** (६।१।१०) इति द्विर्वचनम् जुहोति, जुहुतः । **हुश्नुवोः सार्वधातुके** (६।४।८७) यण्—जुह्वति, **अदभ्यस्तात्** (७।१।४) । **भीह्रीभृहुवां श्लुवच्च** (३।१।३९) इति वाऽऽम्—जुहवांचकार जुहाव । **हुझल्भ्यो हेर्धिः** (६।४।१०१)—जुहुधि । होता । **अर्चिशुचिहुसृपिछदिछर्दिभ्य इसिः** (उ० २।१०८) इतीसिः—हविः । **अर्तिस्तुसु** (उ० १।१४०) इति मन्—होमः । **हुयामा** (उ० ४।१६८) इति त्रन् होत्रम् । **द्युतिगमिजुहोतीनां द्वे च** (३।२।१६८ वा०)—जुहूः स्रुक् ॥१॥

**२. ञिभी भये** । चौरेभ्यो बिभेति, **भीत्रार्थानां भयहेतुः** (१।४।२५) अपादानम् । **भियोऽन्यतरस्याम्** (६।४।११५) इत्त्वम्—बिभितः । **भीह्री** (३।१।३९) इति बिभयांचकार बिभाय । **भीस्म्योर्हेतुभये** (१।३।६८) तङ्—**भियो हेतुभये षुक्** (७।३।४०)—मुण्डो भीषयते । **बिभेतेर्हेतुभये** (६।१।५६) आत्त्वं वा—मुण्डो भापयते, नेह—कुञ्चिकयैनं भाययति । **भियः क्रुक्लुकनौ** (३।२।१७४)—भीरुः, भीलुकः । क्रुकन् अपि (द्र० ३।०।१७४ भाष्य०)—भीरुकः । **भिय षुग् वा** (उ० १।१४८) इति मक्—भीमः, भीष्मः । **अज्विधौ भयादीनामुपसंख्यानम्** (३।३।५६ वा०)—भयम्, भीतिः, भीः । **ऋज्रेन्द्राग्र** (उ० २।२८) इति भेरभेलौ । **आनकः शीङ्भियः** (उ० ३।८२)—भयानकः । **इण्भीका** उ० ३।३४) इति कन्—भेकः ॥२॥

**३. ह्री लज्जायाम्** । जिह्रेति, जिह्रियति । **भीह्री** (३।१।३९) इति जिह्रयांचकार, जिह्राय । **अर्तिह्रीव्ली** (७।३।३६) इति पुक्—ह्रेपयति । **नुदविन्दोन्दत्रा** (८।२।५६) इति वा नत्वम्—ह्रीणः ह्रीतः । ह्रीः ॥३॥

**४. पॄ[1] पालनपूरणयोः** । पिपर्ति, पिपूर्तः[2] पिपुरति[3]—**अर्तिपिप-**

---

१. 'पृ' पाठान्तरम् ।
२. नास्ति क्वचित् ।
३. 'पिप्रति' पाठान्तरम् ।

**त्र्योश्च** (७।४।७७) इत्यभ्यासस्येत्त्वम् । **शृदृप्रां ह्रस्वो वा** (७।४।१२)—निपप्रुः, निपपरुः । क्र्यादिनियमाद् (द्र० ७।२।१३) इट्—पप्रिव । ह्रस्वान्तोऽयमिति **नन्दी**[1]—पपरिव । **ऋद्धनोः स्ये** (७।२।७०)—परिष्यति । **धारिपारि** (३।१।१३८) इति ण्यन्ताच्शः—पारयः । **पार तीर** (१०।२६३) इत्यस्य पारम् । **ऋदोरप्** (३।३।५७)—परः । **न ध्याख्या** (८।२।५७) इति निष्ठानत्वाभावः—पूर्तः । पूर्तिः । **वा दान्तशान्त** (७।२।२७) इति ण्यन्तात् पूर्णः पूरितः । **पूरी आप्यायने** (४।४२) ऽस्मात् तु पूर्णः । क्र्यादौ (६।१८) पृणाति, तत्रैव ग्रहणशेषं वक्ष्यामः ॥४॥

५. **डुभृञ् धारणपोषणयोः** । **भृञामित्** (७।४।७६)—बिभर्ति । भर्ता । भारः । क्त्रिः (द्र० ३।३।८८), **क्त्रेर्मम् नित्यम्** (४।४।२०)—भृत्रिमम् । **टुभृञ्** इति **द्रमिडाः**—भरथुः[2] (द्र० ३।३।८९) । **भीह्री** (३।१।३९) इति वाम् श्लुवच्च—बिभरांचकार बिभार । भृतः । क्र्यादौ **भृ भरणे** (९।२०)—भृणाति, भरः, भरिता, भरीता । **फलेग्रहिरात्मंभरिश्च** (३।२।२६) चात् कुक्षिभरः[3] (द्र० ३।२।२६ काशिका) । **संज्ञायां भृतॄ** (३।२।४६) इति विश्वंभरा । **संज्ञायां समज** (३।३।९९) इति भृत्या । **भृञोऽसंज्ञायाम्** (३।१।११२)—भृत्यः । **संज्ञायां पुंसि दृष्टत्वान्न ते भार्या प्रसिध्यति**[4] (३।१।११२ भाष्य०) **भृङ्गारभृङ्गारौ च** (तु० उ० ३।१३६) इति भृङ्गारः साधु । पचादौ (द्र० ३।१।१३४) जारभरा । भ्वादौ (१।६३८) भरति ॥५॥

६. **माङ् माने शब्दे च** । मिमीते, **भृञामित्** (७।४।७६) । मासीष्ट अकित्त्वाद् ईत्वं नास्ति । **सनि मीमा** (७।४।५४) इति मित्सते । अदादौ **मा माने** (२।५५)—माति । भ्वादौ **मेङ् प्रणिदाने**[5] (१।६८५)—विनिमयते ।

७. **ओहाङ् गतौ** । **भृञामित्** (७।४।७६) इति जिहीते पर्णानि[6]

---

१. स्मृतमिदं प्रक्रियाकौमुद्याम् (भाग २, पृष्ठ २२८), धातुवृत्तौ (पृष्ठ २७२) च ।

२. उद्धृमिदं पुरुषकारे (पृष्ठ ३६) ।

३. तथा च चान्द्रं सूत्रम्—'फलेग्रहिरात्मंभरिः कुक्षिम्भरिः' (१।२।१०) ।

४. इतोऽग्रे 'स्त्रियां भावाधिकारोऽस्ति तेन भार्या प्रसिद्ध्यति' इत्यधिकं क्वचित् ।

५. 'प्रणिधाने' पाठा० ।

६. 'पन्नानि' पाठा० ।

नाभ्युज्जिहते रत्नानि[1]। हायते ग्रामः। **हश्च व्रीहिकालयोः** (३।१।१४८) इति ण्युट्—हायनो नाम व्रीहि, वर्ष च। **ओदितश्च** (८।२।४५) इति निष्ठानत्वम्—हानः। हात्वा ॥७॥

**८. ओहाक् त्यागे**। ककारो **हश्च व्रीहिकालयोः** (३।१।१४८) इति सामान्यग्रहणाविघातार्थ ; अकित· (द्र० ७।४।८३) इत्यभ्यासस्य दीर्घत्वनिषेधार्थ इत्येके। जहाति। **जहातेश्च** (६।४।११६) इतीत्वं वा—जहित, जहीतः। जाहीतीति यङ्लुकि। **आ च हौ** (६।४।११७) इतीत्वम्, ईत्वम्, आत्वं च—जहिहि, जहीहि, जहाहि। **लोपो यि** (६।४।११८)—जह्यात्। **घुमास्था** (६।४।६६) इतीत्वम्—हीयते। **एर्लिङि** (६।४।६७)—हेयात्। **वातशुनीतिलशर्धेष्वजधेट्-तुदजहातिभ्यः** (३।२।२८ वा०) खश्—शर्धजहा मृगाः[2]। हीनः। **ग्लाज्याहाभ्यो निः** (३।३।८५ वा०)—हानिः। **जहातेश्च क्त्वि** (७।३।४३) इतीत्वम्—हित्वा। **नौ हः** (उ० ३।४४) इति कन्—निहाका गोधा[3]। **नञि जहातेः** (उ० १।१५७) कनिन्—अह·। कलं जहातीति कलहः—कः (द्र० ३।२।५) ॥८॥

९. **डुदाञ् दाने**। दत्ते। **नेर्गदनद** (८।४।१७) इति प्रणिददाति। **नाभ्यस्ताच्छतुः** (७।१।७८) नुम्—ददत्। **घुमास्था** (६।४।६६) इतीत्वम्—दीयते। **आङो दोऽनास्यविहरणे** (१।३।२०) तङ् विद्यामादत्ते। **ध्वसोरेद्धावभ्यासलोपश्च** (६।४।११९)—देहि। **गातिस्थाघु** (२।४।७७) इति सिज्लुक्—अदात्। **स्थाघ्वोरिच्च** (१।२।१७) सिच् किच्च—अदित[4]। **सनिमीमा** (७।४।५४) इति दित्सति। डु (द्र० ३।३।८८)—दत्रिमम्। **ददातिदधात्योर्विभाषा** (३।१।१३९) इति शः, पक्षे **श्याद्व्यध** (३।१।१४१) णः—ददः दायः। **प्रे दाज्ञः** (३।२।६)—विद्याप्रदः। **दो दद्घोः** (७।४।४६) दत्तः। **अच उपसर्गात् तः** (७।४।४७)—प्रत्तम्। **दाधेट्सि** (३।२।१५९) इति रुः—दारुर्दानम्[5]। **उपसर्गे घोः किः** (३।३।९२) आदिः। **आतो युच्** (३।३।१२८) सुदानो गौस्त्वया। **दायादः** ॥९॥

---

१. 'तृणानि' पाठा०। २. 'माषा' इति भाष्यादौ पाठः।

३. 'गोधिका' पाठा०। ४. 'आदित' पाठा०।

५. न लोकाव्यय (२।३।६९) सूत्रे 'उ' इत्यनेनोकारान्तस्यापि प्रतिषेध इति षष्ठ्यभाव।

**१०. डुधाञ् दानधारणयोः**[1] । धत्ते । प्रणिदधाति । दधत् । धीयते । धेहि । अधित । अधात् । **दधस्तथोश्च** (८।२।३८) इति भष्—धत्तः, धत्स्व, धत्त्रिमम् । **पाय्यसान्नाय्य** (३।१।१२९) इति धाय्या सामिधेनी । दधः । धायः । **दधातेर्हि** (७।४।४२)—हितम् : **वष्टि भागुरिरल्लोपम्**[2] इति पिहितम्, पिधानम् । **स्पृहिगृहि** (३।२।१५८) इत्यालुच्— श्रद्धालुः, श्रदुपसर्गवत्[3] । **भाषायां धाञ्कृसृ** (३।२।१७१ वा०) इति किकिनौ—दधिः । **आतोऽनुपसर्गे कः** (३।२।३)—गोधा । **आतश्चोपसर्गे** (३।१।१३६) कः विधः, विधा ! कर्कन्धूर्बदरी (द्र० उ० १।९३) । **वयसि धाञः, पुरसि च**[4] (उ० ४।२२८, २३०) इत्यसिः — वयोधाः, पुरोधाः । **विधाञो**[5] **वेध च** (उ० ४।२२५)— वेधाः । **सितनिगमि** (उ० १।६९) इति तुन्—धातुः । **दधातेर्यन्नुट् च** (उ० ५।४८)—धान्यम् । **सुसूधाञ्गृधिभ्यः क्रन्** (उ० २।२४) धीरः । **कृपृवृजिमन्दि** (उ० २।८१) इति क्युन्—निधनम् । **आनको लूशिङ्धिधाञ्भ्यः** (तु० उ० ३ । ८३)—धानकः । **अन्दूदृन्भू** ( तु० उ० १। ९३) इति दिधिषूर्ज्येष्ठानूढा[6] । **धापृवस्यज्यतिभ्यो नः** (उ० ३।६)

---

१. 'धारणपोषणयोः' इतिः क्वचित्, स चार्वाचीनः पाठः । दशपादीवृत्ते. क-पाठो दानार्थ एवानुकूलः । निरुक्तकारो (७।१५) ऽपि 'रत्नधातमं रमणीयानां धनाना दातृतमम्' इत्याह ।

२. द्र० 'सं० व्या० शास्त्र का इतिहास' भाग १, पृष्ठ १०४, (च० सस्क०) । तत्र पाठभेदा अपि निर्दिष्टाः । अत्र 'अवाप्योः' ग्रहणमुपलक्षणार्थम्, तेन अधेरपि भवति । 'धिष्ठितम्' 'धिष्ठितः' इत्यादीनि पदानि महाभारतादावसकृत् प्रयुज्यन्ते ।

३. श्रच्छब्दस्योपसंख्यानम् (१।४।५९ वा०) इति वार्त्तिकेन । शाकटायनस्तु 'श्रद् अच्छ अन्तर्' इत्येतान् त्रीनधिकानुपसर्गानाह । द्र० बृहद्देवता २।९५।

४. प्रायेण सर्वासूणादिवृत्तिषु 'वयसि' धाञः, पयसि च, पुरसि च' (४। २२८-२३०) इति पाठक्रमो दृश्यते । क्षीरस्वामिपाठे तु मध्यमं सूत्र नासीदिति प्रतीयते । युक्तं च चैतत्, उत्तरयोर्द्विश्चकारपाठात् ।

५. 'वौ धाञो' पाठा० ।

६. अत्र विप्रवदन्ते स्मृतिकारा । तदुक्त क्षीरस्वामिना अमरटीकायाम् (२।६।२३)—"दिधिषू द्वौ वारौ द्विरूढा संस्कृता । यदाहुः—अक्षता च

—धानाः । अघ्न्यादौ (द्र० उ० ४।११२) सन्ध्या । **उपसर्गे घोः किः** (३।३।९२)—सन्धिः, विधिः । **कर्मण्यधिकरणे च** (३।३।९३)—ओषधिः, वालधिः । भिदादौ (गण० ३।३।१०४) श्रद्धा । **आतो युच्** (३।२।१२८) सुधानस्त्वया भारः । दिवादौ **धीङ् आधारे** (४।२६)—धीयते ॥१०॥

११. **अनुदात्ताः** ।

१२. **णिजिर् शौचपोषणयोः** । इतस्त्रयोऽनिट उभयपदिनश्च[1] । **निजां त्रयाणां गुणः श्लौ** (७।४।७५)—नेनेक्ति । **नाभ्यस्तस्याचि पिति सार्वधातुके** (७।३।४८) गुणः—नेनिजानि । अनिजत्, अनैक्षीत् ॥११॥

१३. **विजिर् पृथग्भावे** । वेवेक्ति । वेविजानि । **विचिर्** इति सभ्याः—वेविचानि, विवेचनम्, विवेकः ॥१३॥

१४. **विष्लृ व्याप्तौ** । वेवेष्टि । अविषत् (द्र० ३।१।५५) । **उदिदित्येके**[2]—अविक्षत्, विष्ट्वा वेषित्वा (द्र० ७।२।५६) । परिवेषः । **विषेर्व्याप्तिकर्मणि कः**[3] (तु०दश०उ० ९।२०)—विषम् । **विषेः किन्नुश्च** (द्र० उ० ३।३९) विष्णुः । घञ् (द्र० ३।३।१९) वेषो नेपथ्यम् ॥१३॥

१५. **घृ क्षरणदीप्त्योः** । क्षरणं स्रवणम् । **बहुलं छन्दसि** (७।४।७८) इतीत्त्वम् जिघर्ति[4] । मन्—घर्मः (द्र० उ० १।१४९) ।

---

क्षता चैव पुनर्भवति पुनर्भूः सा संस्कृता पुनः (याज्ञ० १।६७) । मनुस्त्वन्यथाह—ज्येष्ठाया ह्यनूढायां कन्यायामुह्यतेऽनुजा । साऽग्रेदिधिषूर्ज्ञेया पूर्वा तु दिधिषूर्मता (नोपलभ्यते मनुस्मृत्याम्) ।"

१. 'एतदादयो विष्लृपर्यन्तास्त्रयोऽनुदात्ताः स्वरितेतः' इति सायणः (धातु० वृ० पृष्ठ २७९) ।

२. स्मृतमिदम्—प्र० कौ० (भाग २ पृ० २३२), पुरुषकारे (पृष्ठ ११२), धातुवृत्तौ (पृष्ठ २७९) ।

३. 'कन्' इत्यौणादिकः पाठः । निर्विशेषेणेदमौणादिकं सूत्रमित्यविज्ञाय अष्टाध्याय्यां ३।१।१३५ सूत्रसंख्या निर्दिष्टा ।

४. घृप्रभृतीनां छान्दसत्वमग्रे गणान्ते निर्दिश्यते ।

**अञ्जिघृसिभ्यः क्तः** (उ० ३।८९)—घृतम्। घृणा। **घृणिपृश्नि** (उ० ४।५२) इति घृणिः। भ्वादौ (१।६६९) घरति, चुरादौ (१।९८) घारयति ॥१४॥

१६. हृ **प्रसह्यहरणे**[1]। बलान्मोषेऽर्थे। जिहर्ति। भ्वादौ **हृञ् हरणे** (१।६३७) –हरति ॥१५॥

१७. **ऋ सृ गतौ। अर्तिपिपर्त्योश्च** (७।४।७७) इतीत्वम्—इयर्ति। **गुणोर्तिसंयोगाद्योः** (७।४।२९) अर्यते। **सर्तिशास्त्यर्तिभ्यश्च** (३।१।५६) इत्यङ्—आरत। **इडत्त्यर्तिव्ययतीनाम्** (७।२।६६)—आरिथ। **स्मिपूङ्रञ्ज्व्** (७।२।७४) इतीट्—अरिरिषति। **यङि च** (७।४।३०) इति गुणः—अरार्यते, **दीर्घोऽकितः** (७।४।८४) इति अकित्त्वाद् दीर्घः[2]। भ्वादौ (१।६६८) ऋच्छति। सिसर्ति[3]। **सर्तिशास्त्यर्तिभ्यश्च** (३।१।५६) इत्यङ्—असरत्। भ्वादौ (१।६६७) सरति। तत्रैव ग्रहणान्युक्तानि। चुरादौ सारयति[4] ॥१६,१७॥

**१८. कि ज्ञाने।** चिकेति, चिकितः, चिक्यति ॥१८॥

१९. **भस भर्त्सनदीप्त्योः**[5]। बभस्ति। बाहुलकाद् (द्र० ७।४।

---

१. 'प्रसह्यकरणे' पाठा०।

२. 'दीर्घो नास्ति' इति मूलपाठः, स चाशुद्ध.। अभ्यासे दीर्घत्वदर्शनात्।

३. 'ससर्ति' पाठान्तरम्। तच्चाशुद्धम्, अभ्यासस्येत्त्वविधानात् (७।४।७८)।

४. चुरादौ (२५६) क्षीरस्वामी 'शार दौर्बल्ये' पठित्वा 'शारयति' इत्युदाहरति, 'सार इति दुर्गः' इति पाठान्तरं चोपन्यस्यति।

५. "भसधातोः 'भर्त्सने' इत्यर्थो नवीनः 'भक्षणे' इति तु प्राचीनोऽर्थः" इति स्वामिदयानन्द. १।२८।७ ऋग्भाष्ये। सायणस्तु धातुवृत्तौ 'भर्त्सनदीप्त्योः' इति पठन्नपि ऋग्भाष्ये १।२८।७ 'भस भक्षणदीप्त्योः' इत्येव पपाठ। अत्र 'हरी इवान्धासि बप्सता' इति मन्त्रव्याख्याने 'हरीवान्नानि भुञ्जाने' इति यास्कवचनम् (६।३६) अप्यत्रानुसंधेयम्। दशपाद्युणादिवृत्तौ 'भक्षणदीप्त्योः' (८।८४) 'भर्त्सनदीप्त्योः' (६।४२, ७३) इत्युभयथा पठ्यते। विग्रहानुसारमर्थानुसारं च द० उ० ६।४२, ४३ इत्युभयत्रभक्षणार्थ एव संगच्छते।

७८) इत्वं नास्ति । न बभस्ति—नभः[1] । भसितं भस्म, **मनिन्** (द्र० उ० ४।१४५) । **हुयामाश्रुभसिभ्यस्त्रन्** (उ० ४।१६८)—भस्त्रा । **शदूभसोऽदिः** (उ० १।१३०)—भसद् भगम् ॥१६॥

२०. **कित ज्ञाने ।** चिकेति, चेकितानि । कितवः, किं तवास्तीति वा[2] । उः—केतुः (द्र० उ० १।७४) केतनम् । भ्वादौ **कित निवासादौ** (१।७२०) केतति, चिकित्सति । चुरादौ (१०।२७७) केतयति ।२०

२१. **तुर त्वरणे ।** तुतोर्ति । तुरगः, तुरितः ॥२१॥

२२. **धिष शब्दे ।** दिधेष्टि । धिषणा, **धृषेर्धिष च** (उ० २।८२) इति क्युर्वा । **अन्दू** (उ० १।९३) इति दिधिषू । **सानसिवर्णसि** (उ० ४।१०७) इति धिष्ण्यम् ॥२२॥

२३. **धन धान्ये ।** दधन्ति । **कृषिचमितनिधनि** (उ० १।८०) इत्यूः धनू राशिः । **अर्तिपृवपि** (उ० २।११७) इत्युस्—धनुस् । वनिप् (द्र० ३।२।७५)[3] धन्वा । अच् (द्र० ३।१।१३४)—धनम् । भ्वादौ (१।३०८ पाठा०) धनति ॥२३॥

२४. **जन जनने ।** जजन्ति । **ईडजनोर्ध्वे च** (७।२।७८) इतीट् जनिषे, छान्दसत्वाद् द्वे न भवतः । दिवादौ । **जनी प्रादुर्भावे** (४।४०) जायते ॥२४॥

२५. **गा स्तुतौ च**; २६. **छन्दसि** । जनने च । **भृञामित्, बहुलं छन्दसि** (७।४।७६,७८) इति च—जिगाति, जिगीतः, जिगति । भ्वादौ **गाङ् गतौ** (१।६८०)—गाते । **कै गै शब्दे** (१।६५२)—गायति । **इणो गा लुङि** (२।४।४५) अगात् । इङो, **गाङ्लिटि** (२।४।४९) अधिजगे ॥२५॥

२७. **वृत्** ॥

---

१. तु० अमरकोष भानुजिटीका पृष्ठ ३० ।

२. द्र० निरुक्त ५।२२ ।

३. अत्र लिबिशेन 'उ० १।१५६ तुलनीयम्' इति सकेतितं तच्चिन्त्यम्, कनिन्प्रत्ययस्य तत्र विधानात् । अत्र तु 'अन्येभ्योऽपि दृश्यन्ते' (३।२।७५) इत्यनेन वनिप् भवतीति सूचितं स्वामिना । पूर्वत्र ७२ पृष्ठस्था टि० ३ द्र० ।

२८. अनुदात्ताः ॥

जिघर्त्यादयो द्वादश च्छान्दसाः ।[1]

भट्टक्षीरस्वाम्युत्प्रेक्षितधातुवृत्तौ क्षीरतरङ्गिण्यां
श्लुविकरणा जुहोत्यादयः सम्पन्नाः[2] ॥

---

१. अत्र कश्चित् पाठो भ्रंशः प्रतीयते। पञ्चविंशे सूत्रे 'गा स्तुतौ च' छन्दसि' इति पठित्वा 'जनने' इत्यर्थश्चकारेण समुच्चित इति प्रतीयते। 'जिघर्त्यादयो द्वादश छान्दसाः' इति पाठस्तु 'छन्दसि' इत्यंशस्यैव व्याख्यारूप इति विज्ञायते। सायणोऽपीत्थमेवाह—इह छन्दसीति पठ्यते, तच्च घृप्रभृतीना शेष.' (धातु० पृष्ठ २८०)। तथा सत्यत्रैव पाठेन भाव्यम्—'२५. गा स्तुतौ च। [चात्] जनने च। भृञामित्·················अधिजगे ॥२५॥ २६. छन्दसि। जिघर्त्यादयो द्वादशच्छान्दसाः ॥ २७. अनुदात्ताः ॥ २८. वृत् ॥ भट्टक्षीर ।'

२. इति क्षीरतरङ्गिण्यां श्लुविकरणा जुहोत्यादयः परिसमाप्ताः।

# ॥ दिवादिगणः ॥

**[अथ सेटः परस्मैपदिनः]**

१. **दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिगतिषु**[1] । व्यवहारः क्रयविक्रयादिः । इत षुहान्ता (४।१८)एकविंशतिः सेटः परस्मैपदिनश्च । **दिवादिभ्यः श्यन्** (३।१।६९)-दीव्यति । देविता । **दिवः कर्म च** (१।४।४३) अक्षान् दीव्यति, अक्षैर्दीव्यति वा । **दिवस्तदर्थस्य** (२।३।५८) इति षष्ठी शतस्य दीव्यति । **सनीवन्तर्ध** (७।२।४९) इति वेट्—दुद्यूषति, **छ्वोः शूडनुनासिके च** (६।४।१९) इति । दिदेविषति । द्यूत्वा, देवित्वा **न क्त्वा सेट्** (१।२।१८) इति कित्त्वाभावः । अक्षद्यूः । पचादौ । (गण ३।१।१३४) देवः, देवी[2] । **दिवोऽविजिगीषायां** (८।२।४९) निष्ठानत्वम्—आद्यून औदरिकः । विजिगीषायाम्—द्यूतम् । **वृषादिभ्यश्चित्** (उ० १।१०६) देवलः[3] । **शकादिभ्योऽटन्** (उ० ४।८१)—देवटः । **दिवेर्ऋन्** (तु० उ० २।९९)—देवा पत्युः कनिष्ठो[4] भ्राता । तथा **अर्तिकमिभ्रमि** (उ० ३।१३२) इति देवरः । **कृविघृष्वि** (उ० ४।५६)[5] किकीदिविश्चाषः । **दिवो द्वे दीर्घश्चाभ्यासस्य** (उ० ४।५५) इति क्विन्—दीदिविरन्नम् । **दिवेर्डिव्**[6]—द्यौः ॥१

---

१. 'स्तुतिकान्तिगतिषु' इति क्वचित् ।

२. पचादिगणे (३।१।१३४) देवट् पाठात् टित्त्वान्ङीप् (४।१।१५) द्रष्टव्यः ।

३. ऊर्णाजीवी' इत्यधिकं क्वचित् । अमरकोशेतु देवाजीवस्तुदवेलः इति पठ्यते । (२।१०।११) ।

४. 'कनिष्ठः' क्वचिन्न । अत्रास्मत्संपादितायां दशपाद्युणादिवृत्तौ देवरपदव्याख्याने (८।६२) आस्माकीना टिप्पणी द्रष्टव्या (पृष्ठ २३० टि०२) ।

५. दशपाद्युणादिवृत्तौ (१।२६) 'किकिः दीवि.' इति द्वे पदे व्याख्याते । अत्र तत्रस्था टिप्पणी द्रष्टव्या (पृष्ठ १८ टि० २) ।

६. हैमोणादि ९४९ । अन्यत्र 'डिविः' प्रत्ययः (भोज २।१।३०६, श्वेत० ५।८० 'कातन्त्र ६।५३ ; अमरटिकामर्वस्व, भाग १ पृष्ठ ७) । हैमोणादौ प्रत्ययान्तस्य हल इत्संज्ञा न भवति ।

२. **षिवु तन्तुसन्ताने**। सीव्यति। सिषेव। **परिनिविभ्यः** (८।३।७०) इति षत्वम्—[परिषीव्यति] निषीव्यति, विषीव्यति। **सिवादीनां वा** (८।३।७१) इति पर्यसीव्यत। सुस्यूषति। सिसेविषति, **स्तौतिण्योः** (८।३।६१) इति नियमात् षत्वं नास्ति। स्यूत्वा सेवित्वा। स्यूतम्। **स्तन्भुसिवुसहां चङ्युपसर्गात्** (तु० ८।३।११६ वा०)—पर्यसीषिवत्। **सिवः किद्**[1] इति चट्—सूचः, सूची। **सिविमुच्योष्टेरू च** (उ० ४।१६३)—सूत्रम्। **सिवुष्ठिवोर्ल्युटि वा दीर्घः**[2]—सीवनम्, सेवनम्। प्रसेवको भस्त्रादिः[3] ॥२॥

३. **स्रिवु गतिशोषणयोः**। स्रीव्यति। **ज्वरत्वर** (६।४।२०) इत्यूट्त्वम्—स्रूत्वा स्रेवित्वा ॥३॥

४. **ष्णसु निरसने**। स्नस्यति। **मिदित्येके** सिष्णसयिषति। **ष्णुस अदर्शने**[4] इति **द्रमिडाः** ॥४॥

५. **क्नसु ह्वरणदीप्त्योः**। ह्वरणं कौटिल्यम्। क्नस्यति। **चरिचलि** (६।१।१२ वा०) इति चक्नसम् ॥५॥

६. **प्युस विभागे**। प्युस्यति ॥६॥

७. **प्लुष दाहे**। प्लुष्यति। प्लोषित्वा। **भ्वादौ** (१।४६३) प्लोषति[5]। **क्र्यादौ** (९।५९) प्लुष्णाति ॥७॥

८. **नृती गात्रविक्षेपे**। गात्रविक्षेपो नाट्यम्। नृत्यति। **सेऽसिचि कृतचृतछृदतृदनृतः** (७।२।५७) इति वेट्—नर्त्स्यति, नर्तिष्यति निनृत्सति

---

१. अनुपलब्धमूल सूत्रम्। चटः कित्त्वात् छ्वो. शूड् (६।४।१९) इत्यूठ्। अन्यत्रोणादौ टेरूत्वं विधीयते।

२. अर्थतोऽनुवादः—'ल्युट्, ष्ठिवुसिवो दीर्घश्च' चान्द्र १।३।९७, ९८, सूत्रम्। तुलना कार्या—सरस्वतीकण्ठा० २।४।१६४,१७७॥

३. द्रष्टव्या क्षीरस्वासिनोऽमरटीका १।६।७॥ 'वीणाङ्गम्' पाठा०। अत्र वीणाप्रान्ते वक्रकाष्ठमुच्यते' इति धातुवृत्तिर्द्रष्टव्या (पृ० २८२)।

४. उद्धृतमिद धातुवृत्तौ (पृष्ठ २८३)। 'अर्दने' पाठा०। लिबिशेन अर्दने' इति स्वीकृत्य 'अदर्शने' पाठान्तरम् उपन्यस्तम्। तच्चिन्त्यम्, धातुवृत्तौ 'अदर्शने' इत्यस्यव स्वामिनाम्ना निर्देशात्।

५. अत्र धातुवृत्तौ 'अयं पुपादावपि पठ्यते, फलमडोऽपि सिद्धिरिति स्वामी' इति पठ्यते। अय पाठ इह नोपलभ्यते।

निर्नर्तिषति । नृत्तम्, **यस्य विभाषा**(७।२।१५)इत्यनिट्त्वे सिद्धे ईदित्त्वं यङ्लुगर्थम्[1]—नरीनर्त्तः, क्षुभ्नादित्वात् (द्र० ८।४।३९) णत्वाभावः । **न पादम्याङ्यम** (१।३।८९) इति तङ्—नर्तयते ।।८।।

**९. त्रसी उद्वेगे**[2] । उद्वेगो[2] भयम् । **वा भ्राशभ्लाश** (३।१।७०) इति वा श्यन्—त्रसति, त्रस्यति । **वा जॄभ्रमुत्रसाम्** (६।४।१२४) लिट्येत्त्वाभ्यासलोपौ—त्रेसुः तत्रसुः । **त्रसिगृधि** (३।२।१४०) इति क्नुः— त्रस्नुः । चुरादौ **त्रस धारणे** (१०।१९४ पाठा०) त्रासयति[3] ।९

**१० कुथ पूतीभावे ।** पूतीभावो दुर्गन्धिः, क्लेदः । कुथ्यति । कोथित्वा । कुथितम्, कोथितम्[4] । कोथः ।।१०।।

**११. पुथ हिंसायाम् ।** पुथ्यति, पोथनम्[5] ।।११।।

**१२. गुध परिवेष्टने** । गुध्यति । गुधित्वा । **गुधेरूमः** (उ० ५।२) गोधूमः । भिदादौ (गण० ३।३।१०४) गोधा । **उन्दिगुधि** (दश० उ० ९।२८) इति कित् सः—गुत्सः । **लक्ष्ये छान्तः**[6]—गुच्छः ।।१२।।

**१३ क्षिप प्रेरणे** । क्षिप्यति, **द्वाविमाबम्भसि क्षिप्य** (महाभारत) इति लोट् । नेट्—क्षेप्ता । **नव्योऽयम्**[7] । तुदादौ(६।५)क्षिपते, क्षिपति ।

**१४. पुष्प विकासे** । पुष्प्यति । पचादौ (द्र० ३।१।१३४)पुष्पम् । पुष्पितस्तारकादौ (द्र० ५।२।३६) ।।१४।।

---

१. यद्यपि "श्तिपा शपानुबन्धेन' इति परिभाषया ईदितफलमिण्नषेधो यङ्लुकि न प्रवर्तते, तथापि केवले नृत्यतौ 'यस्य विभाषा' (७।२।१५) इत्यनेनैवेण्निषेधे सिद्ध ईदित्व व्यर्थ सद् यङ्लुक्यपि इण्निषेधं प्रवर्तयति । अत्र धातुवृत्तिर्द्रष्टव्या (पृष्ठ २८४) ।

२. 'उद्वेजने' 'उदेवजनम्' पाठान्तरे ।

३. 'चुरादौ······त्रासयति' क्वचिन्न ।

४. कथमत्र कित्त्वविकल्प इति न जानीमः । उदुपधात् (१।२।२१) इत्यनेन तु न संभवति, शब्विकरणस्य तत्र विधानात् ।

५. इतोऽग्रे 'पोथयामास' इत्यधिकम् ।

६ गुच्छस्तु गुङ् शब्दे (१।९७९) इत्यस्मात् छकि (द्र० हैमो० १२४)। नात्र गुत्सस्य प्राकृतं रूपं गुच्छ इति शक्यं वक्तुम्, तथैव न मत्सस्य मच्छः ।

७. दैवादिकेषु 'क्षिप प्रेरणे' इति न प्राचीनः पाठ इत्यर्थः । द्रष्टव्यात्र धातुवृत्तिः (पृ० २८४) ।

**१५. तिम तीम**[1] **ष्टिम ष्टीम आर्द्रीभावे।** तिम्यति, तीम्यति, स्तिम्यति, स्तीम्यति। तिष्टेम तिष्टीम। **इषितिमि** (दश०उ० ८।२६ कंपाठः)इति किरच्—तिमिरम्। इक् (द्र० उ० ४।१२२)—तिमिः। तेमनं व्यञ्जनम्। स्तिमितः ॥**१५**—१७॥

**१६. व्रीड चोदने।** चोदनं लज्जा[2]। व्रीड्यति। व्रीडितः, व्रीडा। बाहुलकाद्[3]—**व्रीडाद् अमु देवमवीक्ष्ये**[4] ति ॥१६॥

**१७. इष गतौ।** अन्विष्यति। एषित्वः, **न क्त्वा सेट्** (१।२।१८) कित्। प्रेषितः। प्रैषः, प्रैष्यः—**प्रादूहोढोढ्येषैष्येषु** (६।१।८९ वा०) इति वृद्धिः। **इषेरनिच्छार्थस्य** (३।३।१०७ वा०) इति युच् एषणा, अन्वेषणा। **परेर्वा** (३।३।१०७ वा०)पर्येषगा, परीष्टिः[5]। **इश्यशिभ्यां तकन्** (उ० ३।१४८)—इष्टका। **क्सुश्चेषे** (द० उ० १।१५४) इक्षुः। भ्वादौ **ऐषृ गतौ** (१।४०६)—अन्वेषते। तुदादौ **इषु इच्छायाम्** (६।५८)—इच्छति। क्र्यादौ **इष आभीक्ष्ण्ये** (९।५७) इष्णाति[6] ॥२०॥

**१८. षुह शक्यर्थे।** शक्यर्थस्तृप्तिः[7]। मुह्यति। सुषोह। आदनस्य

---

१. स्मृतमात्रेयेण, तं च सस्मार सायणः (धातु० पृ० २८५)।

२ उद्धृत धातुवृत्तौ (पृष्ठ २८५)।

३. अत्र लिविशेन भ्रान्त्या चौरादिकस्य 'बहुलमेतन्निदर्शनम्' (१०।३२४) सूत्रस्य सङ्ख्या निर्दिष्टा। अत्र तु 'कृत्यल्युटो बहुलम्' (३।३।११३) सूत्रस्थ बहुलग्रहणमभिप्रेतम्। तेन हि 'गुरोश्च हलः' (३।३।११३) इत्यनेन स्त्रियां भावे प्राप्नमकारप्रत्ययं बाधित्वा घञपि भवति, इत्येषोऽत्र क्षीराभिप्रायः।

४. अनुपलब्धमूलमिदम्।

५. द्रष्टव्यम्—'भवति हि निष्पन्नेऽभिव्याहारे योगपरीष्टिः। निरुक्त १।१४। 'तस्य निमित्तपरीष्टिः.' मी० १।१।३॥

६. अत्राह सायणः—'अयं चुरादावपीति स्वामी' (धातु० पृष्ठ २८५)। नात्र तथा पाठ उपलभ्यते। भ्वादौ एषृ गतौ (४०६) इत्यत्र तु 'चुरादौ अन्वेषयति' इति पठित्वापि स्वामि चुरादौ न पपाठ।

७. यथा तूद्धृतं धातुवृत्तौ (पृष्ठ २८५) तथा 'षुह चक्यर्थे। चक्यर्थस्तृप्तिः' इत्येवं पाठेन भाव्यम्। चक तृप्ताविति वचनात् (१।७४) पुरुषकारे तु 'शकार्ये' इत्येव पठ्यते (द्र० पृष्ठ १२२)।

सुहितः । **षह षुह संभक्तौ**[1] इति दुर्गः—विषह्यति ॥२१॥

**१९. उदात्ता उदात्तेतः ।**

**२०. जॄष् झॄष् वयोहानौ ।** इतश्चत्वारः सेटः । जीर्यति । जरा द्र० ३।३।१०४) । **वा जॄभ्रमुत्रसाम्** (६।४।१२४) इत्येत्वाभ्यासलोपौ वा—जजरु, जेरुः । **जॄस्तन्भु** (तु० ३।१।५८) इति वाङ्—अजरत् अजारीत् । **वॄतो वा** (७।२।३८) इतीटो दीर्घो वा—जरिता जरीता । **इट् सनि वा** (७।२।४१) जिजीर्षति जिजरिषति जिजरीषति । **लिङ्सिचोरात्मनेपदेषु** (७।२।४२) वेट्—जर्षीष्ट जरिषीष्ट, **न लिङि** (७।२।३९ दीर्घः । अजीर्ष्ट, अजरिष्ट, अजरीष्ट । **जनीजॄष्** (१।५५४) इति मित्—जरयति । **अजर्यं संगतम्**[2] (३।१।१०५) । कुमि जीर्यति—कुञ्जरः, अच् (द्र० ३।१।१३४) । **गत्यर्थाकर्मक** (३।४।७२) इति क्त—अनुजीर्णो वृषली चैत्रः । **जीर्यतेरतृन्** (३।२।१०४)—जरन्, जरती । **दारजारौ कर्तरि णिलुक् च** (३।३।२० वा०) घञ्—जारः । **जॄव्रश्च्योः क्त्वि** (७।२।५५) इतीट्—जरित्वा जरीत्वा । जर्जरः—यङ्लुक्यच् (द्र० ३।१।१३४) । **जॄविशिभ्यां**[3] **झच्** (३।१२६)—जरन्तो महिषः । क्र्यादौ **जॄ वयोहानौ** (९।२३)—जॄणाति ।[4] झीर्यति । झर्झरः । झरः, निर्झरः । झर्झरीकः ॥२२,२३॥

**२१. षूङ् प्राणिप्रसवे ।** सूयते स्त्री । **स्वरतिसूतिसूयति** (७।२।४४) इति वेट्—सोता सविता । इतो व्रीङन्ता (३०) नवौदितः[5]—सूनः, सूनवान् । प्रसूनं पुष्पम्, अत एवायम् **अप्राणिप्रसव इत्यन्ये**[6] ।

---

१. पुरुषकारे तु 'क्षीरस्वामी तु सुहेत्येव पठित्वाऽऽह—षह षुह शक्ताविति दुर्गः' इत्येवमुद्धियते (पृष्ठ १२२) ।

२. 'आर्यसगतम्' पाठा० ।     ३ 'जॄविशिभ्य' पाठा० ।

४. स्मृतं पुरुषकारे (पृष्ठ ४२) । चुरादौ (१०।२०९) पठितमिह क्षीरस्वामी न सस्मार ।

५. 'स्वादय ओदितः' (४।३१) इति वक्ष्यमाणसूत्रेण । ओदित्त्वे ओदितश्च' (८।२।४५) इति निष्ठानत्वम् ।

६. पुरुषकारे (पृष्ठ ३३) तु यथा पाठ उद्धृतस्तथात्र 'आहुः' पाठ. । अयमत्रापि क्वचिद्धस्तलेखे पठ्यते ।

अदादौ (२।२३) सूते, सूतः। तुदादौ **षू प्रेरणे** (६।११०)—सुवति ॥२४॥

२२. **दूङ् परितापे।** परितापः खेदः। दूयते। द्रविता। दूनः ॥२५।

२३. **उदात्तः।**

२४. **दीङ् क्षये।** इतो दोपर्यन्तास् (४।३८) त्रयोदशा[1] निट.। दीयते। दीनः। **दीङो युडचि क्ङिति** (६।४।६३)—उपदिदीये, उददिदीयाते। **मीनातिमिनोतिदीङां ल्यपि च** ६।१।५०) इत्यात्त्वम्—उपदाता, उपदाय। उपदेश एवात्त्वात् (द्र० ६।१।५० भाष्य) **श्याद्व्यध** (३।१।१४१) इति णः—उपदायः। **स्थाघ्वोरिच्च** (१।२।२०) इत्यत्र **दीङः प्रतिषेधः** (१।२।२० वा०) उपादास्त स्वरः शिक्षकस्य। उपदेदीयते, उपदिदीषते, **उपदिदासत इत्यपीष्यते**[2] ॥

२५. **डीङ् गतौ**[3]। डीयते। डीनः। भ्वादौ (१।६६३) डयते। डयितः। **डयतेरेवेह श्यनर्थ ओदित्स्वार्थश्च पाठ इत्येके**–डीनः। **व्याघ्रभूतिस्तु —इवर्णष्वथशीङ्श्रिञावपि** (७।२।१० काशिकायामुद्धृतः) इति डीङः सेट्त्वं विशेषेणाह ॥२७॥

२६. **धीङ् आधारे।** शेषो भूवं धीयते। धीनः ॥२८॥

२७. **मीङ् हिंसायाम्।** मीयते। मीनः, मीनवान्। माता। **सनिमीमा** (७।४।५४) इतीस्—मित्सते[4]। क्र्यादौ मीञ् (९।४)—मीनाति ॥२९॥

२८. **रीङ् स्रवणे।** रीयते। रीणः। **अर्तिह्री** (७।३।३६) इति पुक्—रेपयति। विजन्तान्मतुप्[5]—रेवती। **स्रुरीभ्यां तुट् च** (उ० ४। २०२) इत्यसुन्—रेतः। **अजिवृरीभ्यो निच्च** (उ० ३।३८) इति णुः—रेणुः। क्र्यादौ **री गतिरेषणयोः** (९।३१)—रिणाति ॥३०॥

---

१. 'चतुर्दश' युक्तः पाठः।

२. उद्धृतं धातुवृत्तौ (पृष्ठ २८७)। ३. स्मृत पुरुषकारे (पृष्ठ ३०)।

४. स्मृत धातुवृत्तौ (पृष्ठ २८८)।

५. अत्र लिबिशेन 'रयेर्मतौ बहुलम्' इति वार्त्तिकस्य सख्या (६।१।३७,६) निर्दिष्टा, सा चिन्त्या। वार्तिके 'रयि' शब्दाद् 'रेवान्' पदसिद्धिः प्रदर्शिता। इह तु विजन्ताद् 'रे' शब्दान्मतुपि। तेन नात्र तद्वार्तिकस्यावश्यकता।

२९. **लीङ् श्लेषणे** । लीयते । विलिल्ये । लीनः । **विभाषा लीयतेः** (६।१।५१) इत्यात्वं वा—विलाता विलेता, विलास्यते विलेष्यते । **निमिमीलिलियां खलचोः प्रतिषेधः** (६।१।५० वा०)—दुर्लयः, निलयः प्रलयः, विलयः । **लियः सम्माननशालीनीकरणयोश्च** (१।३।७०) इति तङ्—जटाभिरालापयते । **लियः प्रलम्भनशालीनीकरणयोः णौ नित्यमात्त्वमिष्टम्**[1] । **लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने**[2] (तु० ७।३।३९)—घृतं विलीनयति । प्रश्लेषनिर्देशाद् ईकारान्तादेव नुगिष्टः[3], नेह—विलापयति विलाययति । **श्याद्व्यध** (३।१।१४१) इति णः—विलायः । क्र्यादौ (९।३२)लिनाति लेष्यति । चुरादौ **ली द्रवीकरणे** (१०।२०६)आधृषीयः— विलापयति, विलयति, उल्लापयते ॥३२॥

३०. **व्रीङ् वृणोत्यर्थे** । वृणोत्यर्थो वरणम् । व्रीयते । व्रीणः । क्र्यादौ **व्री वरणे** (९।३५)— व्रीणति ॥३२॥

३१. **स्वादय ओदितः**[4] ।

३२. **पीङ् पाने** । **परयापि तृषा विबाधितो नहि रथ्यागतमम्बु पीयते**[5] । पेता । **माङ् मान** इति **दुर्गः**[4]——मायते । ह्वादौ (३।६) मिमीते ॥३३॥

३३. **ईङ् गतौ** । **सर्वः स्वार्थं प्रतीयते**[6] ॥३४॥

३४. **प्रीङ् प्रीतौ** । प्रीयते । **इगुपधज्ञा** (३।१।१३५) इति कः—प्रियः । क्र्यादौ **प्रीञ् तर्पणे कान्तौ च** (९।२)—प्रीणीते, प्रीणाति । **प्रीञ् तर्पणे** (१०।२२५) आधृषीयः—प्रीणयति, प्रयते, प्रयति ॥३५॥

३५. **शो तनूकरणे** । श्यति, **ओतः श्यनि** (७।३।७१) लोपः । **विभाषा घ्राधेट्शाच्छासः** (२।४।७८) इति सिचो वा लुक्—अशात् अशासीत् । **शाच्छोरन्यतरस्याम्** (७।४।४१) इतीत्—निशितम् निशातम्, संशितव्रत इति **नित्यमिष्यते** (द्र० ७।४।४१ भाष्य), शितिः शातिः । **शाच्छासाह्वा**(७।३।३७) इति णौ युक्—निशाययति । **आत-**

---

१. द्रष्टव्या काशिका १।३।७०॥ २. 'विपातने' पाठा० ।

३. नाम्ना विना स्मृतं धातुवृत्तौ (पृष्ठ २८८) ।

४. अनुपलब्धमूलम् ।

५. उद्धृत पुरुषकारे (पृष्ठ २०) धातुवृत्तौ (पृष्ठ २८८) च ।

६. अद्युपलब्धमूलम् ।

**श्चोपसर्गे** (३।३।१०६)—निशा[1]। **शः कित् सन्वच्च** (उ० १।२०) इति कुः—शिशुः। **शाशपिभ्यां ददनौ** (उ० ४।९७)—शादः पङ्कः। ॥३६॥

**३६. छो छेदने**। अवच्छ्यति। अवाच्छात् अवाच्छासीत्। अवच्छाययति। छितः, छातः। **माछाससि** (उ० ४।१०९) इति यः—छाया। **कृविघृष्वि** (उ० ४।५६) इति छविः। **छापूखडिभ्यो गक्** (द० उ० ३।६९) गक्—छागः। कम्बलादौ[2] छगलः[3] ॥३७॥

**३७. षो अन्तकर्मणि**। अन्तकर्म विनाशः। स्यति, अवस्यति प्रणिष्यति (द्र० ८।४।१७)। **उपसर्गात्** (८।३।६५) षः। **प्राक् सितादड्व्यावायेऽपि** (८।३।६३)—अभ्यष्यात्। **विभाषा घ्रा** (२।४।७८) इति वा सिज्लुक्—अवासात्, अवासीत्। **घुमास्था** (६।४।६६) इतीत्वम्—अवसीयते। **शाछा** (७।३।३७) इति युक्—अवसाययति। णः (द्र० ३।१।१४१)—अवसायः। **द्यतिस्यति** (७।४।४०) इतीत्त्वम्—अवसितः। **ऊतियूतिजूतिसाति** (३।३।९७) इति सातिः। **सातिभ्याम्** (उ० ४।१५३) इति मनिन्—साम। [सात्म।] सात्मनो भावः सात्म्यम्[4] ॥३८॥

**३८. दो अवखण्डने**। द्यति। **गातिस्था** (२।४।७७) इति सिज्लुक्—अवादात्। अवदातुम्। **द्यतिस्यति** (७।४।४०) इतीत्त्वम्—निर्दितम्। अवत्तम्—**अच उपसर्गात् तः** (७।४।४७)। घुग्रहणानि समा-

---

१. भागुरिमते हलन्तान्निश्शब्दात् टाप्—तदुक्तं—आपं चैव हलन्तानां यथा वाचा निशा दिशा। (द्र० 'स० व्या० शास्त्र का इतिहास' भाग १ पृष्ठ १०७ च० संस्क०)।

२. उणादौ 'छो घुग्ह्रस्वश्च' (१।११२) इत्युज्ज्वलदत्तादयः पठन्ति।

३. 'छागलः' पाठा०।

४. अत्र हि लिबिशेन 'टिप्पण्या हैमोणादेः ८१६ निर्देशः कृत.। स चिन्त्यः। हैमोणादौ तत्र सात्मपदं निरुच्यते, न सात्म्यम्। इह तु ब्राह्मणादेराकृतिगणत्वात् (५।१।१२४) ष्यञ् द्रष्टव्यः।

नानि[1] ॥३८॥

३९. **अनुदात्ताः ।**

४०. **जनी प्रादुर्भावे ।** प्रादुर्भाव उत्पत्तिः । इतो वाश्रन्ताः (५२) चतुर्दश सेट आत्मनेपदिनश्च । **ज्ञाजनोर्जा** (७।३।७९) जायते । **ये विभाषा** (६।४।४३) —जायते जन्यते, जाजायते जञ्जन्यते । जनिता । जनः । अभिजायतेऽनेनेत्यभिजनः[2] । **ईडजनोर्ध्वे च** (७।२।७८) इतीट् — जनिषे, जनिध्वे । **गमहनजन** (६।४।९८) इत्युपधालोपः - जज्ञे । **दीपजनबुध** (३।१।६१) इति कर्तरि चिण् वा—अजनि अजनिष्ट । **जनिवध्योश्च** (७।३।३५) इति वृद्धिर्नास्ति । **जनखनसनां सञ्झलोः** (तु० ६।४।४८) लोपः[3]— जातः । **जनीजॄष्** (१।५५४) इति मित् — जनयति । **भव्यगेय** (३।४।६८) इति कर्तरि—चैत्रो जन्यः । **मनिन्** (दश० उ० ६।७३)जन्म । **जनेरुसिः** (उ० २।११५)— जनुस् । **जनेरठरः**[4] जठरम् । **जनेः को जङ्घ च** (द० उ० ३।७०)— जङ्घा । **जनिघसिभ्यामिण्** (उ० ४।१३०), **जनिवध्योश्च** (७।३।३५) इति वृद्धिनिषेधः— जनिः । **दृसनि** (उ० १।३) इति ञुण् – जानुः । **फलिपाटि** (उ० १।१८) इति जतु । **कमिमनिजनि** (उ० १।७३) इति तुन्— जन्तुः । **यजमनि** (उ० ३।२०) इति युच्—जन्यु । **जनेर्यक्** (उ० ४।१११)—जाया । **जनेस्तोरश्च** (द० उ० ६।२५) जर्त.[5] ।

---

१. इतोऽग्रे लिबिशेन घुसंज्ञाविधायकसूत्रसंख्या (१।१।२०) निर्दिष्टा । सा चिन्त्या । ग्रहणशब्देऽधिकरणे ल्युट्, तेन येषु सूत्रेषु घुनिर्देशस्तानि घुग्रहणान्युच्यन्ते । तुलनीयम्—तत्राण्ग्रहणेष्विण्ग्रहणेषु च सन्देहो भवति' (लण् सूत्रभाष्ये) इति ।

२. नास्ति क्वचित् ।

३. नहीदं सूत्रं लोपं शास्ति, किन्तर्हि ? आत्वम् । तेन 'आत्वम्' इति युक्तः पाठ इष्यते । लिबिशेन नैषाऽशुद्धिर्बुद्धा ।

४. दशपाद्या 'जनेरर ठः' (८।९८) इत्येवं पठ्यते । यथा त्वत्र पाठः तथा जनेः 'अठर' प्रत्यये न रूपसिद्धिर्भवति । तेन कदाचिदत्र दशपादीपाठवत् पाठः स्यात् । लेखकप्रमादेन रठयोर्विपर्यास. सजातः स्यात् ।

५ अत्र लिबिशेन हैमोणादिसूत्रनिर्देशः (१००) टिप्पण्यां कृतः ।

अत्रेदमपि बोध्यम्—जर्तशब्दः प्रायेण सर्वेष्वेवोणादिसूत्रेषु व्युत्पाद्यते । महाभारते सभापर्वणि(४७।२६ कुम्भघोण०) जर्ताः स्मर्यन्ते । चन्द्रवृत्तौ 'अज-

**स्तनिहृषिपुषिगदिमदिघुषिगडिमण्डिजनिनन्दिभ्यो णेरिलुच्**[1] (द० उ० १।१४० कपाठः) जनयित्नुः। **जनेष्टो लोपश्च** (द० उ० ५।४)—जटा। **जत्र्वादयश्च** (उ० ४।१०२) इति जत्रुः। **अन्दूदृन्भू** (तु० उ० १।३) इति जम्बूः। **कुआदिभ्यः संज्ञायां वुन्** (उ० ५।३५)—जनकः, जायतेऽस्याम् (द्र० ३।३।११७) इति जननी। **उपसर्गे च संज्ञायां** (३।३।९९) डः—प्रजा। **अनौ कर्मणः**[2] (तु० ३।२।१००)—स्त्रीम् अनुजातः स्त्र्यनुजः। **अन्येष्वपि** (३।२।१०१)—पूर्वजः। **गत्यर्थाकर्मक** (३।४।७२) इति क्तः—पुमांसमनुजातः जनः, सकर्मकार्थम्।[3] **अलंकृञ्** (३।२।१३६) इतीष्णुच्—प्रजनिष्णुः। **जनसन** (३।२।६७) इति विट्, **विड्वनोरनुनासिकस्यात्** (६।४।४१)—अब्जाः, गोजाः, ऋतजाः, अद्रिजाः[4]॥४०॥

४१. **दीपी दीप्तौ**। दीप्यते। दीपिता। दीप्तः (द्र० ७।२।१४)। **दीपजनबुध** (३।१।६१) इति कर्तरि चिण् वा—अदीपि अदीपिष्ट। **भ्राजभास** (७।४।३) इति वा ह्रस्वः अदीपिपत् अदिदीपत्। **सूददीपदीक्षश्च** (३।२।१५३) इति तृन्, युच् प्राप्तः (द्र० ३।१।१४९)—दीपिता। **नमिकम्पिस्मि** (३।२।१६७) इति रः—दीप्रः। अच् (द्र० ३।१।१३४)—दीपः, प्रदीपः॥४१॥

---

यज्जर्तो हूणान्' (१।२।८१) इत्युदाहरणे चन्द्रेण स्वकालिकस्य कस्यचिज्जर्तराजस्य लोकप्रसिद्धविजयः स्मर्यते। हैमोणादिवृत्तौ (२००) अप्ययं राजा स्मर्यते। रमेशचन्द्रमजुमदारेण चान्द्रवृत्तेः पाठः 'अजयद् गुप्तो हूणान्' इत्येव विना प्रमाण परिवर्त्य चन्द्रो गुप्तकाले बभूवेति मिथ्या कल्पना कृता (द्र० ए न्यू हि० आफ दि ई० पो० भाग ६, पृ० १३७)। चन्द्रकालनिर्णयाय द्रष्टव्योऽस्मदीय. 'सं० व्या० शास्त्र का इतिहास' ग्रन्थः (भाग १, पृष्ठ ३६८-३७० च० सस्क०)

१. अत्र लिबिशेन हैमोणादिसख्या (७९७) निर्दिष्टा।

२. अत्र कदाचित्पाठभ्रंशः स्यात्। अन्यथा सप्तम्यभावे उपपदसञ्ज्ञाया अभावः, तदभावे समासाभावः, तदभावे रूपासिद्धिः प्रसज्यते।

३. गत्यर्थाकर्मकसूत्रे जनग्रहणम् इति शेषः। अत्र सकर्माकर्मत्वविचारो धातुवृत्तौ सम्यक् प्रपञ्चितः, तत्रैव द्रष्टुमर्हः (पृष्ठ २९१)।

४. सर्व एवैते एकस्यामेव श्रुतौ (ऋ० ४।४०।५) क्रमशो निर्दिष्टाः।

४२. **पूरी आप्यायने**। आप्यायनं वृद्धिः। पूर्यते। पूरिता। पूर्णः (द्र० ७।२।१४)। पूर्तिः (द्र० ७।२।६)। **दीपजनबुध** (३।१।६१) इति कर्तरि वा चिण्—अपूरि अपूरिष्ट। **वा दान्तशान्त** (७।२।२७) इति ण्यन्तात् पूर्णः पूरितः। **चर्मोदरयोः पूरेः** (३।४।३१) णमुल्—चर्मपूरं भुङ्क्ते, **वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्** (३।४।३२)—गोष्पदप्रं वृष्टो देवः, गोष्पदपूरं वृष्टो देवः। **ऊर्ध्वे शुषिपूरोः** (३।४।४४)—ऊर्ध्वपूरं पूर्णः ॥४२॥

४३. **तूरी गतित्वरणहिंसनयोः**। गतेस्त्वरणे हिंसने च। तूर्यते। तूरिता। तूर्णः। तूर्यम्। **तूर** इति **दुर्गः** ॥४३॥

४४. **घूरी जूरी हिंसावयोहान्योः**। घूर्यते। घूरिता। घूर्णः। जूर्यते जूरिता। जूर्णः। **गूरी च** इति **दुर्गः** ॥४४,४५॥

४५. **धूरी हिंसागत्योः**। धूर्यते। धूः ॥४६॥

४६. **शूरी हिंसास्तम्भनयोः**। शूर्यते। शूरः ॥४७॥

४७. **चूरी दाहे**। चूर्यते। चूर्णः ॥४८॥

४८. **तप ऐश्वर्ये**। तप्यते। **अन्ये** तु **तप संताप** (१।७१२) इत्यस्यैव भ्वादेरैश्वर्ये संतापे च श्यंस्तङौ वा[1] मन्यन्ते, वा ग्रहणाद् ऐश्वर्येऽपि भ्वादिरित्येके—प्रतपति। नन्द्यादौ (गण० ३।१।१३४) तपनः संज्ञायाम्। द्विषन्तपः, परन्तपः (द्र० ३।२।३९)। **पत** इति **द्रमिडाः**[2]—पत्यते, पतति, अपतिष्ट, अपप्तत् ॥४९॥

४९. **वावृतु वरणे**। वावृत्यते। **ततो वावृत्यमाना सा रामशालामविक्षत** इति **भट्टिः** (४।२८)। **अन्ये** भ्वादेरेव (१।५०४) वरणे दिवादित्वं वा मन्यन्ते। तेन वरणे द्युतादि कार्यं न भवति—अवर्तिष्ट, वर्तिष्यते विवर्तिषते ॥५०॥

---

१. अनेन ज्ञाप्यते उत्तरसूत्रस्थ वाग्रहणं केषाञ्चिन्मते पूर्वसूत्रे सम्बध्यते। अत्र माधवीया धातुवृत्तिरपि द्रष्टव्या (पृष्ठ २९३)।

२. उद्धृतमिदं धातुवृत्तौ (पृष्ठ २९३)। नैरुक्ताः 'पत्यते' इत्यैश्वर्यकर्मसु पठन्ति (निघण्टु २।२१)।

५०. **क्लिश उपतापे** । क्लिश्यते । परार्थे **क्लिश्यतः सतः**[1] इति तु लक्ष्यम् । क्र्यादौ **क्लिशू विबाधने** (९।५४) – क्लिश्नाति । **क्लिशः क्त्वानिष्ठयोः** (७।२।५०) वेट् – क्लिष्ट्वा क्लिशित्वा । **मृडमृद** (१।२।७) इति कित् – क्लिष्टः, क्लिशितः । **निन्दहिंसक्लिश** (३।२।१४६) इति वुञ्—क्लेशकः । **क्लिशेरी चोपधायाः कल्**[2] **लोपश्च लोनाम् च** (दश० उ० ६।६ ङ्पाठः) कीनाशः । **क्लिशेरल्**[2] **लोपश्च लः** (दश० उ० ६।२)– केशः । **किशोरादयश्च** (द्र० उ० १।६५) इति किशोर. । भ्वादौ **क्लेश व्यक्तायां वाचि** (द्र० १।४००)—क्लेशते ।५१

५१. **काशृ दीप्तौ** । काश्यते । काशः । अचकाशत् (द्र० ७। ४। २ ) । **इकः काशे** ( ६।३।१२३ ) दीर्घः—प्रतीकाशः, संकाशः, नीकाशः, अवाकाशः । उणादौ (द्र० २।२)काष्ठम् । भ्वादौ (१। ४२८) काशते ।।५२।।

५२. **वाशृ शब्दे** । वाश्यते । वाशितम् । अववाशत् । **एतावनृदितावित्येके**—अचीकशत्, अवीवशत् । कथं चाकशीति, वावशीति **प्रकृत्यन्तरत्वात्**[3] । वाशा, वाशिका । नन्द्यादेर् (गण० ३।१।१३४) ण्यन्तात् वाशनः । **मन्दिवाशि** (१।३८) इत्युरच्—वाशुरो गर्दभः ।[4] ।।५३।।

५३. **उदात्ता अनुदात्तेतः** ।

५४ **मृष तितिक्षायाम्** । इतः पञ्च स्वरितेतः; द्वौ सेटौ, त्रयोऽनिटः । मृष्यते, मृष्यति, मर्षिता । **परेर्मृषः** (१।३।८२)परस्मैपदम्—परिमृष्यति । **मृषस्तितिक्षायाम्** (१।२।२०) सेण् निष्ठा न कित्—मर्षितः । **भाषायां शासियुधि** (३।३।१३० वा०) इति युच्—दुर्मर्षणः । नन्द्यादौ (गण० ३।१।१३४)मर्षणः । **तृषिमृषिकृषेः काश्यपस्य** (१।२।२५) इति वा कित्—मर्षित्वा, मृषित्वा । चुरादौ (१०। २३८) आधृषाद् वा—मर्षयति मर्षति । तुदादौ **मृश आमर्शने** (६। १२६) तालव्यान्तः ।।५४।।

५५. **ईशुचिर् पूतिभावे** । पूतिभावः क्लेदः । शुच्यते, शुच्यति ।

१. अनुपलब्धमूलम् । २. दशपाद्या 'कन् – रन्' इत्यसहितया निदशः ।
३. द्र० क्षीरत० १।४२८ उपधाह्रस्वोऽत्र छान्दसः ।
४. इतोऽग्रे 'भ्वादौ वाशते' इत्यधिक क्वचित् । भ्वादौ नायं पठ्यते ।

अशुचत्, अशोचीत्, अशुचिष्ट । शुक्तम् । भ्वादौ **शुच शोके** (१।११४)—शोचति, **शुच्यी अभिषवे** (१।३४१)—शुच्यति ॥५५॥

**५६. उदात्तौ स्वरितेतौ ।**

**५७. णह बधने** । नह्यते नह्यति । नद्धा, **नहो धः** (८।२।३४)। **नहिवृति** (६।३।११६) इति क्वौ दीर्घः--उपानत् । **वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयो**[1]रिति–पिनह्यति, अपिनह्यति । **ष्ट्रन्** (द्र० ३।२।१८२) नद्ध्री चर्मरज्जुः । **अनहिभ्याम् उषच्** (द० उ० ६।१३ कपाठः) —नहुषः । **नहो भ च** (तु० द० उ० १।५४) इतीञ्–नाभिः । **नहेर्दिवि भ च चित्**[2] (तु० द० उ० ९।७१ गपाठः) नभस् । संनाहः ॥५७॥

**५८. रन्ज रागे** । रज्यते, रज्यति । रङ्क्ता । भ्वादौ (१।७२६) रजति । तत्रैव ग्रहणान्युक्तानि स्वरितेत्त्वार्थं विकरणार्थं चेह पाठः, एवं शपः (धा० सू० ४।५९) ॥५८॥

**५९. शप आक्रोशे** । शप्यते, शप्यति । शप्ता । शप्त्वा । भ्वादौ (१।७२७) शपति ॥५९॥

**६०. अनुदात्ताः स्वरितेतः ॥**

**६१. पद गतौ** । गतिर्यानं ज्ञानं च । इतो लिशान्ता (७०) नवानिट आत्मनेपदिनश्च । **नेर्गद** (८।४।१७) इति प्रणिपद्यते । **चिण् ते पदः** (३।१।६०) कर्तरि—उदपादि भैक्षम् । प्रपत्ता । **सनि मीमा** (७।४।५४) इति पित्सते । **नीग् वञ्चु** (७।४।८४) इति पनीपद्यते । **जुचङ्क्रम्य** (३।२।१५०) इति पदनः । **लषपतपद** (३।२।१५४) इत्युकञ् उपपादुकः । पदरुज (३।३।१६) इति कर्तरि घञ्—पादः । **खलं भगः पदं च** (द्र० ३।३।१२५ वा०) इति घः करणे—पदम् । **विशिपतिपदि** (३।४।५६) इति णमुल्—गेहानुप्रपादमास्ते, गेहं गेहमनुप्रपादम् । **संपदादिभ्यः** (३।३।१०८ वा०) भावे क्विप्–संपत्, प्रतिपत् । **संज्ञायां समज** (३।३।९९) इति क्यप्—पद्या मार्गः । **अर्तिस्तुसु** (उ० १।१४०) इति मन्–पद्म । रक् (द्र० उ० २।१३)—

---

१. बहुत्र वैयाकरणग्रन्थेषूद्धृत. । द्र० स० व्या० शा० इति० भाग १, पृष्ठ १०४-११० च० संस्क० ।

२. अत्र 'चित्' पदं व्यर्थम्, नभः पदस्याद्युदात्तत्वदर्शनात । द्र० अस्मदीया दशपाद्युणादिवृत्तौ टिप्पणी (पृष्ठ ४०६, टि० ४) ।

पद्रो ग्रामः । **णिल् कसिपद्यर्तेः**(उ० १।८५)--पादूः पादुका । पदवी बाहुलकाद् (द्र० उ० ४।१३३ उज्जल०) अटवीवत् (द्र० १।१९८, पृष्ठ ५४) । चुरादौ (१०।२८१)आगवीर्यं उपपदने ? ।

अत्रैव **खिद दैन्य** इति **दुर्गः**—खिद्यते । खेत्ता । **खिद्यत इति कर्मकर्तरीति** तु **वामनः**[1] । रुधादौ (७।१६) खिन्ते । तुदादौ **खिद परितापे** (६।१४१)— खिन्दति, खेदः खिन्नः ॥५९॥

६२. **विद सत्तायाम्** । सत्ता भावः । विद्यते । वेत्ता । विन्नः[2] । अदादौ **विद ज्ञाने** (२।५९)—वेत्ति, वेदिता । तुदादौ **विद्लृ लाभे**(६।१३६)—विन्दति । रुधादौ **विद विचारणे** (७।१७)—विन्ते, विनत्ति ।[3] चुरादौ **विद चेतनादिषु**[4](१०।१५४)—वेदयते ॥६०॥

६३. **बुध अवगमने** । बुध्यते । बोद्धा । **दीपजन** (३।१।६१) इति वा चिण्— अबोधि विद्वान्, अबुद्ध । **बुधयुध** (१।३।८६) इति बोधयति । के (द्र० ३।१।१३५) बुधः । **मतिबुद्धि** (३।२।१८८) इति वर्तमाने क्तः—राज्ञां बुद्धः । भ्वादौ बोधने (१।६१४) बोधति ॥६१।

६४. **युध संप्रहारे** । संप्रहारो हननम् । युध्यते । योद्धा । योधयति । **राजनि युधिकृञः** (३।२।९५) । क्वनिप्—राजयुध्वा । **सहे च** (३।२।९६)—सहयुध्वा । घञर्थे कः (द्र० ३।३।५८ वा०)—आयुधम् । **भाषायां शासियुधि** (३।३।१३१ वा०) इति युच्—सुयोधनः ॥६२॥

६५. **अनो रुध कामे** । अनुपूर्वो रुधिर् इच्छार्थे दिवादिः । अनुरुध्यते । नेह—रुणद्धि । रोधयनि ॥६३॥

६६. **मन ज्ञाने** । **मन्यकर्मणि** (२।३।१७) इति चतुर्थी--न त्वा तृणाय मन्ये । **एहि मन्ये प्रहासे लृट्** (८।१।४६), **प्रहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च** (१।४।१०६) एहि मन्ये रथेन यास्यसि, न यास्यसि यातस्ते पिता[5] । मन्यतेः (द्र० ३।२।८२ काशिका)णिनिः

---

१. उद्धृत धातुवृत्तौ (पृष्ठ २९७) । सुधाकरोऽपि क्षीरस्वामिपाठमेवोउद्धृतवान् इति धातुवृत्तितः प्रतीयते । वामनीये काव्यालङ्कारे तु 'क्षीयते इति कर्मकर्तरि, स्विद्यत इति च' (५।२।५,६) पाठ उपलभ्यते ।

२. 'वित्त.' पाठा० । ३. 'विनति' कोशेषु पाठ० ।

४. 'वेदनादिषु' पाठा० । ५. 'यातस्तव पितामहः' पाठा० ।

—शोभनमानी । **मनः पुंवच्चात्र**(द्र० ६।३।३६)—पट्वीं मन्यते, पटुमानी । **आत्ममाने खश्च** (३।२।८३)—शूरमानी, शूरंमन्यः । **संज्ञायां समज** (३।३।९९) इति क्यप्– मन्या कृकाटिका । **मतिबुद्धि** (३।२।१८८) इति वर्तमाने क्तः– राज्ञां मतः । मतिः । **शृस्वृस्निहि** (उ० १।१०) इति मनुः । **यजमनि कमिमनि** (उ० १।७३) इति मन्तुः । (उ० ३।२०) इति युच्—मन्युः । **फलिपाटि** (उ० १।१८) इति मधु । **मनेर्दीर्घश्च** (उ० ३।६४) इति सः– मांसम् । **मनेरुच्च** (उ० ४।१२३) मुनिः । **असुन्** (द० उ० ९।४९)—मनस् । **वनिमनिभ्यां चिद् वा** (द० उ० ८।९९)—मठरो मूढः । **गुधृवीपचिवचि** (द० उ० ८।८९) इति त्रन्—मन्त्रः । तनादौ **मनु अवबोधने** (८।९)—मनुते । चुरादौ **मन स्तम्भे** (१०।१५५)—मानयते, मानः ॥६४॥

६७. **युज समाधौ** । समाधिश्चित्तवृत्तिनिरोधः[1] । युज्यते । योक्ता । **सृजियुधिधूञां** (तु० ३।१।८७ वा०) कर्मवद्भावः श्यंश्च—युज्यते रथः स्वयमेव । **युग्यं च पत्रे** (३।१।१२१) साधु । गां युनक्तीति गोयुग.[2], कर्मण्यण्[2] (द्र० ३।२।१) न्यङ्क्वादिः (गण० ७।३।५३) । **अञ्चुयुजि** (३।२।५९) इति क्विन्, **युजेरसमासे** (७।१।७१) नुम्, **क्विन् प्रत्ययस्य कुः** (८।२।६२)—युङ्, युञ्जौ । नेह—अश्वयुक् । ष्ट्रन् (द्र० ३।२।१८२)—योक्त्रम् । मन् (द्र० उ० १।१४६) युग्मम्, न्यङ्क्वादिः (गण० ७।३।५३) के(द्र० ३।१।१३५) च–युगम् । योजनम्, योजना, योगः, यथास्वं ग्रहणानि । रुधादौ **युजिर् योगे** (७।७) युङ्क्ते, युनक्ति। चुरादौ **युज पृची संपर्चने** (१०।२०२)वा णिच्—योजयति योजति ॥६५॥

६८. **सृज विसर्गे** । सृज्यते । **सृजियुधिधूञां** (३।१।८७ वा०) कर्मवद् भावः श्यंश्च—सृज्यते माला स्वयमेव । **सृजिदृशोर्झल्यमकिति** (६।१।५८)—स्रष्टा । **पाणौ सृजेर्ण्यत्** (३।१।१२४ वा०) पाणिसर्ग्या रज्जुः । **समवपूर्वाच्च** (२।१।१२४ वा)—समवसर्ग्या । **ऋत्विग्दधृग्** (३।२।५९) इति स्रक् । **सृजेरसुम् च** (उ० १।१५) इति रज्जुः । तुदादौ (६।११९) सृजति ॥६६॥

---

१. समाधि खलु योगपर्यायः । द्र० योगः समाधिः (योगभाष्य १।१) । योगः खलु चित्तवृत्तिनिरोधः (द्र० योग० १।२) ।

२. अणि गुणाभावो न्यङ्क्वादित्वादेव ।

६९. **लिश अल्पीभावे**। लिश्यते, लेष्टा, लेशः। तुदादौ (६। १२५) लिशति। ॥६७॥

७०. **अनुदात्ता अनुदात्तेतः**।

७१. **राधोऽकर्मकाद् वृद्धावेव**। इतः स्निहान्ता (९२) एकविंशतिरनिटः परस्मैपदिनश्च। राध्नोतेः (५।१९) अकर्मकक्रियाद् वृद्ध्यर्थे श्यन् राध्यति। सकर्मकाद् वृद्धरेन्यत्र च श्नुः—राध्नोत्योदनम्, पचतीत्यर्थः। चुरादौ[1] राधयति ॥६८॥

७२. **व्यध ताडने**। **ग्रहिज्या** (६।१।१६) इति सम्प्रसारणम्—विध्यति। **लिट्यभ्यासस्य** (६।१।१७)—विव्याध। व्यद्धा। **श्याद्व्यध** (३।१।१४१) इति णः—व्याधः। **नहिवृति** (६।३।११६) इति क्वौ दीर्घः—मर्मावित्। **पृथ्यधिभिदि** (तु० उ० १।२३) इति कुः—विधुः। **व्यधजपोरनुपसर्गे** (३।३।६१)—व्यधः, आव्याधः। घञर्थे कः (द्र० ३।३।५८ वा०)—आविधम्।६९

७३. **पुष पुष्टौ**। **अकर्मकममुमाहुः**—वराह इव पुष्यति। **पुषादिद्युतादि** (३।१।५५) इति अङ्—अपुषत्। आगणन्तात् पुषादयः। पोष्टा। **पुष्यसिद्धौ नक्षत्रे** (३।१।११६)। भ्वादौ (१।४६२) पोषति। क्र्यादौ (९।६०) पुष्णाति। चुरादौ **पुष धारणे** (१०।१९५)—पोषयति ॥७०॥

७४. **शुष शोषणे**। **शुष्यति**, अशुषत्। **शुषेः कः** (तु० ८।२।५१)—शुष्कः। **ऊर्ध्वे शुषिपूरोः** (३।४।४४) णमुल्—ऊर्ध्वशोषं शुष्कः। **अविसिविशुषिभ्यः किद्** (द० उ० ७।३०) इति मन्—शुष्मं[2] बलम्। **शुष्मेति लक्ष्यम्**। शुष्मा वह्निः ॥७१॥

७५. **तुष प्रीतौ**। तुष्यति, अतुषत्, तोष्टा ॥७२॥

७६. **दुष वैकृत्ये**। **वैकृत्यं** रूपभङ्गः। दुष्यति, अदुषत्, दोष्टा। **दोषो णौ** (६।४।९०) इत्युपधाया ऊत्—दूषयति। **वा चित्तविरागे** (६।४।९१)—चित्तं दोषयति, चित्तं दूषयति। नन्द्यादौ (द्र० गण० ३।१।१३४) दूषणः। **कषिदूषिभ्यामीकन्** (उ० ४।१६)—दूषीका नेत्रमलम् ॥७३॥

---

१. क्षीरतङ्गिण्या चुरादौ नैव पठ्यते।

२. लोके 'शुष्म' इति नान्तो नपुसकलिङ्गः प्रयुज्यत इत्यर्थ।

७७. **श्लिष आलिङ्गने** । श्लिष्यति, अश्लिषत् । **श्लिष आलिङ्गने** (३।१।४६) श्लिषः प्राण्याश्लेष एव च्लेः क्सः—आश्लिक्षत् कन्याम्, नेह समाश्लिषज्जतु च काष्ठं च । श्लेष्टा । **श्याद्व्यध** (३।१।१४१) इति णः—श्लेषः । **गत्यर्थाकर्मक** (३।४।७२) इति क्तः [कर्तरि]—आश्लिष्टः कन्यां चैत्रः । **श्लिषरेच्चोपधायाः** (उ० ३ १९)—श्लक्ष्णम् । **मनिन्** (द० उ० ६।७३)—श्लेष्मा । भ्वादौ (१।४६३) दाहार्थः—श्लेषति । चुरादौ **श्लिष श्लेषणे** (१०।३३) श्लेषयति ।७४

७८. **शक विभाषितो मर्षणे** । शक्नोतेः (द्र० ५।१८) परस्मैपदं श्यनि विकल्यते[1], अङ् वा, इड् वा, इति **मतभेदः** । शक्यते शक्यति, अशकीत् अशकत्, शकिता शक्ता । अन्यत्र– शक्नोति, [अशकत्] शक्ता । **सनि मीमा** (७।४।५४) इति शिक्षति । **शकिसहोश्च** (३।१।९९) इति यत्–शक्यम् । वनिप् (द्र० उ० ४।११३)—शक्वा, शक्वरी । **शकिशम्योर्नित्** (उ० ३।११२)—शकलः । रक् (द्र० उ० २।१३)—शक्रः । **शकेरुनोन्तोन्त्युनयः** (उ० ३।४९)—शकुनः, शकुन्तः, शकुन्तिः, शकुनिः । **शकेर्ऋतिन्** (उ० ४।५८)—शकृत् । **शकादिभ्योऽटन्** (उ० ४।८१)–शकटः, शकटिः, शकटी, शक्तिः, शक्ती । शकधृषज्ञा (३।४।६५) इति शक्यते भोक्तुम् ॥७५॥

७९. **ष्विदा गात्रप्रक्षरणे** । गात्रप्रक्षरणं घर्मस्रुतिः । स्विद्यति । सिष्वेद । अष्विदत् । असिस्विदत् । स्वेत्ता । स्विन्नः । स्विन्नमनेन, स्वेदितमनेन, प्रस्विन्नः प्रस्वेदितः (द्र० ७।२।१७) । भ्वादौ (१।४९३ पाठा०) स्वेदते ॥७६॥

८०. **क्रुध कोपे** । चैत्राय कुध्यति । **क्रुधद्रुहेर्ष्या** (१।४।३७) इति सम्प्रदानम् । अक्रुधत्, क्रोद्धा । **क्रुधमण्डार्थेभ्यश्च** (३।२।१५१) इति युच्—क्रोधनः ॥७७॥

८१. **क्षुध बुभुक्षायाम्** । क्षुध्यति, अक्षुधत्, क्षोद्धा । उकञ् (द्र० ३।२।१५४) **इष्यते**[2]–क्षोधुकः । **वसतिक्षुधोरिट्** (७।२।५२) क्त्वानिष्ठयोः—क्षुधितः, क्षुधित्वा क्षोधित्वा, **रलो व्युपधाद्** (१।२।२६) इति वा कित्त्वम् ॥७८॥

---

१. स्मृतमिदं पुरुषकारे (पृष्ठ ४७) धातुवृत्तौ (३०१) च ।

२. लोके प्रयोगदर्शनादिति शेषः ।

८२. **शुध शौचे** । शौचं नैर्मल्यम् । शुध्यति । अशुधत् । शोद्धा ॥७९॥

८३. **षिधु संराद्धौ**[1] । संराद्धिर्निष्पत्तिः । सिध्यति । असिधत्, सिषेध, सेद्धा । **सिध्यतेरपारलौकिके** (६।१।४७) णावात्त्वम्—**कार्यं साधयति । नेह**—सेधयति धर्मम् । सिद्ध्वा सिधित्वा सेधित्वा (द्र० ७ २।५६॥ १।२।२६) । **पुष्यसिद्धौ नक्षत्रे** (३।१।११६) । भ्वादौ (१।३८) निषेधति ॥८०॥

८४. **रध हिंसासंराद्ध्योः** । संराद्धिः पाकः । राध्यति । **रधादिभ्यश्च** (५।२।४५) इतीड् वा—रधिता रद्धा । **रधिजभोरचि** (७।१।६१) इति नुम्—रन्धयति । **नेट्यलिटि रधेः** (७।१।६२)नुम्—रधिष्यति, लिटि—ररन्धिव । अरधत्, **अनिदिताम्** (६।४।२४) इति न लोपः । अरत्स्यत्, अरधिष्यत् । रद्धः । रन्धनम् ॥८१॥

८५. **णश अदर्शने** । अदर्शनमनुपलब्धिः । प्रणश्यति । **नशेः षान्तस्य** (८।४।३६) इति णो नास्ति—प्रनष्टः, प्रनङ्क्ष्यति । **मस्जिनशोर्झलि** (७।१।६०)इति नुम् –नंष्टा, नशिता (द्र०७।२।४५)। **नशेर्वा** (८।२।६३) कुत्वम्—नश्यतीति नक् नट् । जीवो नश्यति –जीवनग् आहुतिः, जीवनट् । **बुधयुध** (१।३।८६) इति नाशयति, नन्द्यादौ (गण० ३।१।१३४) वित्तनाशन । **निन्दहिंस** (३ २।१४६) इति विनाशकः । **इण्नशजि**(३।२।१६३) इति क्वरप् –नश्वरः । **कर्त्रोर्जीवपुरुषयोः** (३।४।४३) इति णमुल् –जीवनाशं नष्ट, ॥८२॥

८६. **तृप प्रीतौ** । प्रीतिः सौहित्यम् । तृप्यति । तर्पिता त्रप्ता तर्प्ता, **अनुदात्तस्य चर्दुपधस्य** (६।१।५९) इत्यमागमो वा । तृप्तः । **स्पृशमृशकृषतृपदृपः सिज् वा** (३।१।४४ वा०) –अतृपत्, अत्राप्सीत् अतर्प्सीत् । तुदादौ **तृप तृप्तौ**(६।२९ पाठ०)—तृपति, तृम्पति । रक् (द्र० उ० २।१३)—तृप्रम् । स्वादौ क्षुभ्नादित्त्वात् (गण० ८।४।३९) पाठ उन्नेयः—तृप्नोति । अतर्पीत्, तृपितम् ॥८३॥

८७. **दृप हर्षमोहनयोः** । मोहनं गर्वः । दृप्यति । द्रप्ता, दर्प्ता दर्पिता । दृप्तः । अदृपत्, अद्राप्सीत् अदार्प्सीत् ॥८४॥

---

१. षिधु हिंसासंराध्योः' इति काशिकायां (६ १।४९) पाठः ।

८८. **द्रुह जिघांसायाम्** । **क्रुधद्रुह** (१।४।३७)इति शत्रवे द्रुह्यति । **वा द्रुहमुहष्णुहष्णिहाम्** (८।२।३३) कुत्वम् —द्रोग्धा द्रोढा, द्रोहिता । **सत्सूद्विष**(३।२।६१)इति क्विप् – मित्रध्रुक्, मित्रध्रुट् । अद्रुहत् ।।८५

८९. **मुह वैचित्त्ये** । वैचित्त्यमविवेकः । मुह्यति । मोग्धा, मोढा, मोहिता । मुग्धः, मूढः । अमुहत् । न **पादमि** (१।३।८९) तङ् —परिमोहयते । **मुहेः खो मूर्च** (उ० ५।२२) —मूर्खः ।।८

९०. **ष्णुह उद्गिरणे** । स्नुह्यति । सुष्णोह । स्नोग स्नोढा, स्नोहिता । स्नुग्धः, स्नूढः । अस्नुहत् ।।८७।।

९१. **ष्णिह**[1] **प्रीतौ** । स्निह्यति । सिस्नेह । स्नेग स्नेढा स्नेहिता । स्निग्धः स्नीढ । अस्निहत् । **ऋत्विग्दधृग्** ( ।५९) इत्युष्णिक् छन्दः । चुरादौ स्नेहयति[2] ८८।।

९२. **वृत्** । रधादिर्वृत्तः । एतदन्तः पुषादिरित्येके[3] । अतोऽग्रे अशमीत्, अतमीत्, अदमीत्, अश्रमीत्, अभ्रमीत्, अक्षमीत्, अलोटीत्, अक्लेदीत्, अकोषीत्, अहर्षीद् इत्याद्युदाजह्रुः ।।

९३. **अनुदात्ता उदात्तेतः** ।

९४. **शमु उपशम** । इतो गृध्यन्ताः (१३६) षट्चत्वारिंशत्[4] सेटः परस्मैपदिनश्च । **शमामष्टानां दीर्घः श्यनि** (७।३।७४)– शाम्यति । अशमत् । **शमोऽदर्शने** (१।५५८) मित्–शमयति रोगम् । दर्शने तु—निशामयति रूपम् । शमिता । शान्त्वा शमित्वा । शान्तः । **पोरदुपधात्** (३।१।९८) –शम्यम् । क्विप् (द्र० ३।२।७६)—प्रशान्, **मो नो धातोः** (८।२।६४), तस्य पूर्वत्रासिद्धत्वान् **नलोपः प्रतिपदिकान्तस्य** (८।२।७) नास्ति । **शमित्यष्टाभ्यो घिनिण्** (तु० ३।२।१४१)–शमी । घञ् (द्र० ३।२।१८,१९) – शमः । गौरादौ (गण०

---

१. 'स्निहेति क्षीरस्वामी' इति उद्घ्रियते पुरुषकारे (पृष्ठ १२२) ।

२. चुरादौ नाय साक्षात् पठ्यते । तत्र 'स्निह स्नेहने, स्मिट इत्येके' (१०।३२) इत्येकीय मत पठ्यते ।

३. धातुवृत्तौ (पृष्ठ ३०४) अनूद्य निराकृतमिदं मतम् ।

४. 'चतुश्चत्वारिंशत्' पाठा० । चिन्त्यमिदम्, षट्चत्वारिंशद् धातूना पाठात् ।

४।१।४१) शमी वृक्षः। शान्तिः। **वा दान्तशान्त** (७।२।२७) इति शान्तः: शमितः। **शकिशम्योर्नित्** (उ० १।११२) शमलम्। **जनिदाच्युप्** (उ० ४।१०४ उज्ज्व०) इति शण्ठः[1]। **शमेः खः**(उ० १।१०२) —शङ्खः। **शमेर्ढः** (उ० १।९९)—शण्ढः ॥८९॥

९[illegible]मु **काङ्क्षायाम्**। ताम्यति। अतमत्। तन्त्वा तमित्वा। तान्तः [illegible] (द्र० ३।३।१८,१९)—तमः[2]। गौरादौ (द्र० गण० ४।१।४१; [illegible]) रात्रिः। **अमितम्योर्दीर्घश्च** (उ० २।१६)—ताम्रम्। **असुन्** ( उ० ९।४९)—तमस्। **ऋमितमिस्तन्भामत इच्च** (द० उ० १।५०) इति तिमिर्मत्स्यः। **अत्यविचमि** (उ० ३।११७) इत्यसच्—तमसा[3] नदी ॥९०॥

९६. **दमु उपशमे**। दाम्यति। अदमत्। दान्त्वा दमित्वा। **न पादमि** (१।३।८९) इति तङ्—दमयते। नन्द्यादौ (गण० ३।१।१३४) कुलदमनः, **संज्ञायाम्** (३।२।४६) अरिन्दमः। **वा दान्तशान्त** (७।१।२७) इति दान्तः, दमितः। व्यवस्थितविभाषया। **दान्तोब्रह्मचारिणि**। **दमेर्डोस्** (द० उ० ९।४३)—दोर्बाहुः। **हसिमृग्रिण्वा** (उ० ३।८६) इति तन्—दन्तः। **दमेरूनसिः** (द० उ० ९।९५)—दमूना वह्निः[4]। घिनिण् (द्र० ३।२।१४१ क्षीरपाठः)—दमी ।९१॥

९७. **श्रमु तपसि खेदे च**। श्राम्यति। अश्रमत्। श्रान्त्वां श्रमित्वा। श्रान्तः। श्रम्यम्। नन्द्यादौ (द्र० गण० ३।१।१३४) श्रमणः। विश्रामः[5], विश्रमोऽपीष्टः ॥९२॥

---

१. क्वचिदुणादिवृत्तौ 'शण्ढ' पदमनेन व्युत्पाद्यते, तच्चिन्त्यम्। शमेर्ढ. (उ० १।९९) इत्यनेन तस्य सिद्धत्वात्। दशपाद्याम् (१०।१५) जनिदाच्यु-सूत्रे शङ्ख पदमपि व्युत्पाद्यते, तदपि चिन्त्यम्, तस्य शमेः ख (उ० १।१०२) इत्यनेन सिद्धत्वात्।

२. 'तमोऽल्पदेशः' पाठा०।

३. 'तमसाख्या' पाठा०।

४. 'अग्निः' पाठा०।

५. पाणिनीयास्तु 'अनाचमिकमिवमीनामिति वक्तव्यम्' (७।३।३४) इत्यत्र विश्रमेरप्रतिषेधात् 'विश्रम' इत्येव न्याय्यं मन्यन्ते (द्र० काशिका ७।३।३४)। क्षीरस्वामी त्वत्र चान्द्रमतमाश्रित्य (द्र० चान्द्रवृत्ति ६।१।४२) पाणिनिसम्मतो विश्रमशब्दोऽपीष्ट इत्याह।

**९८. भ्रमु अनवस्थाने**। अनवस्थानं देशान्तरगमनम्। **वा भ्राश** (३।१।७०) इति भ्राम्यति भ्रमति। अभ्रमत्। भ्रान्त्वा भ्रमित्वा। **भ्रमेश्चडूः** (उ० २।६८)—भ्रूः। भ्वादौ **भ्रमु चलने** (।५८६)—भ्रमति भ्रम्यति ॥९३॥

**९९. क्षमूष् सहने**। क्षाम्यति। अक्षमत्। क्षन्ता क्षमिता (द्र० ७।२।४४)। क्षान्त्वा क्षमित्वा। भ्वादौ (१।२९९) क्षमते, अक्षमिष्ट। षित्त्वात् (द्र० ३।३।१०४) क्षमा। बाहुलकात्[1] क्षान्तिः। अत एव **क्षमू सहन** इति **सभ्याः**[2] ॥९४॥

**१००. क्लमु ग्लानौ**। क्लाम्यति क्लामति। **वा भ्राश** (३।१।७०) इति **ष्ठिवुक्लम्वाचमां शिति** (७।३।७३) इति दीर्घः। अक्लमत ॥९५॥

**१०१. मदी हर्षे**। माद्यति अमदत्। मदिता। मत्तः। हर्षग्लपनयोर्मित् (द्र० १।५५२)—मदयति, अन्यत्र - उन्मादयति। **मदोऽनुपसर्गे** (३।३।६७) ऽप्—मदः। **प्रमदसंमदौ हर्षे** (३।३।६८)। **गदमद** (३।१।१००) इति यत्—मद्यम्। **उग्रंपश्य** (३।२।३७) इतीरंमदो मेघज्योतिः। **अलङ्कृञ्** (३।२।१३६) इतीष्णुच्—उन्मदिष्णुः। **इषितिमिमदि** (द० उ० ८।२६ कपाठः) इति किरच्—मदिरा। **कृधूमदिभ्यः कित्** (उ० ३।७३)—मत्सरः। **ऋतन्यञ्जि** (उ० ४।२) इति मत्स्यः। मत्सी गौरादिः (द्र० गण० ४।१।४१)। **जनिदाच्यु** (उ० ४।१०४) इति मत्सः, मच्छ इत्येके[3]। चुरादौ **मद तृप्तिशोधने** (१०।१५१)—मादयते ॥९६॥

---

१. "कृत्यल्युटो बहुलम्" (३।३।११३) इति बहुलग्रहणेन षित्त्वेऽपि क्तिन् भवतीति भावः। लिबिशेन त्वत्र भ्रान्त्या "बहुलमतेन्निदर्शनम्" (१०।३२४) इति गणसूत्रस्य संख्या निर्दिष्टा।

२. धातुवृत्तौ (पृष्ठ ३०६) त्वित्थं स्वामिपाठ उद्ध्रियते—'तथा च स्वामी—केचिदत्रापि क्षमूष् इति षितं पठन्ति, तदसत्। क्षमू सहन इति सभ्या'। अत्र त्वन्यथा पाठ उपलभ्यते।

३. 'मत्स्य' मत्स इत्येके' पाठा०। पञ्चपाद्युणादिवृत्तिषु 'मत्स्य' इत्येव व्युत्पाद्यते। मत्स्यशब्दस्य पूर्वत्र (उ० ४।२) व्युत्पादनादत्र 'मत्स' इत्येवशुद्धः पाठः। एके नाम्ना चात्र दशपादीवृत्तिः स्मर्यते, तत्र (१०।१५) हि 'माद्यतीति मच्छः मत्तः पुरुषः' इति व्युत्पाद्यते।

१०२. **वृत्** । शमादिरन्तर्गणः ।

१०३ः **असु क्षेपणे** । अस्यति । **अस्यतेस्थुक्** (७।४।१७)—निरास्थत् । **अस्यतिवक्तिख्यातिभ्योऽङ्** (३।१।५२) इति कर्म कर्तरि आत्मनेपदे ऽप्यङ्—उपास्थेतां कुण्डे स्वयमेव । **उपसर्गादस्यत्यूह्योर्वा वचनम्** ((१।३।२९ वा०) तङ्—निरस्यते, निरस्यति । **नेर्गद** (८। ४।१७) **इति** प्रण्यस्यते । अस्त्वा असित्वा । अस्तः । अस्यम्[1] । **शृस्वृस्निहि** (उ० १।१०) इत्युः—असवः । **असेरुरन्** (उ० १।४२)—असुरः । **सुञ्यसेर्ऋन्** (२। ६७ उज्ज्वल) स्वसा । **असिसञ्जिभ्यां क्थिन्** (उ० ३।१५४)—अस्थि । **अस्यतितृषोः क्रियान्तरे कालेषु** (३। २।५७) इति णमुल्—द्व्यहात्यासम् अजाः पाययति । **इन्** (द० उ० १।४६)—असिः ॥९७॥

**१०४. यसु यत्ने । यसोऽनुपसर्गात् संयसश्च** (३।१।७१,७२) इति वा श्यन्—यस्यति यसति, संयस्यति । अयसत् । यस्त्वा, यसित्वा । आयस्तः । **न पादमि** (१।३।८९) इति तङ्—आयासयते ॥९८॥

**१०५. जसु मोक्षणे** । जस्यति । अजसत् । जस्त्वा, जसित्वा । **नमिकम्पि** (३।२।१६७) इति रः—अजस्रम् । चुरादौ **जस[2] हिंसायाम्** (१०।११७)—उज्जासयति ॥९९॥

१०६. **तसु उपक्षये** । तस्यति । लोट् सिपि—तस्य । अतसत् । तस्त्वा, तसित्वा । वितस्तिः (द्र० उ० ४।१८०), वितस्ता[3] ॥१००।

**१०७. दस च** । दस्यति । अदसत् । दस्त्वा, दसित्वा । **वा दान्तशान्त** (७।२।२७) इति दस्तः, दसितः । रक् (द्र० उ० २।१३) दस्रौ[4]

---

१. ऋहलोर्ण्यत् (३।१।१२४) इति ण्यति 'आस्यम्' साधु । बाहुलकाद्वा यत् ।

२. चुरादौ 'जसु' इति पठ्यते । 'जस ताडने' इत्यपि चुरादौ (१०।१६४) पठ्यते । यथा क्षीरतरङ्गिण्याः पाठस्तेनेदमपि सम्भाव्यते 'जस ताडने' जसु हिंसायाम्, इत्युभयोरत्र पाठः स्यात् । लेखप्रमादेन 'ताडने जसु' इति मध्यवर्त्ती पाठो नष्टः स्यात् ।

३. सर० कण्ठा० २।२।१३४॥ हैमोणादि २०० ।

४. उभयोरश्विनोर्दस्रनासत्यौ नामनी स्तः, परन्तु साहचर्याद् उभावपि दस्रौ नासत्यौ वोच्येते ।

अश्विनौ । **यजिमनिशुन्धि** (उ० ३।२०) इति युच् - दस्युः ॥१०१॥

१०८. **वसु स्तम्भे** । वस्यति । अवसत् । वस्त्वा, वसित्वा । वस्तश्छागः, वस्तिर मेढ्रोर्ध्वम् (द्र० उ० ४।१८०) ॥१०२॥

१०९. **प्युस**[1] **विभागे** । प्युस्यति । अप्युसत् । प्युसितः । **प्युष** इति **दुर्गः** । **पुस इत्येके**—पुस्तकम्, पुस्तं लेप्यादि कर्म ॥१०३॥

११०. **प्लुष दाहे** । प्लुष्यति । अप्लुषत् । भ्वादौ (१।४६३) प्लोषति, प्लुष्ट्वा,[2] प्लुषित्वा प्लोषित्वा[3] । क्र्यादौ (९।५९) प्लुष्णाति ॥१०४॥

१११. **बिस प्रेरण** । बिस्यति । अबिसत् । के (द्र० ३।१।१३५) बिसम् ॥१०५॥

११२. **कुस श्लेषणे** । कुस्यति । अकुसत् । कुसितः । कुसुमम् (द्र० उ० ४।१०६) । **कुश** इति **दुर्गः**—कुशः, कुशी आयसी (द्र० ४।१।४२), कोशो भाण्डागारादि, कोशी ॥१०६॥

११३. **बुस उत्सर्गे** । उत्सर्गस्त्यागः । बुस्यति । अबुसत् । के (द्र० ३।१।१३५) बुसं तुषः ॥१०७॥

११४. **मुस खण्डने** । मुस्यति । अमुसत् । उणादौ मुस्तः,[4] मुसलम् (द्र० उ० १।१०६)[5] ॥१०८॥

११५. **मसी परिणामे** । परिणामो विकारः । मस्यति । अमसत् । मसित्वा । **श्वीदितो निष्ठायाम्** (७।२।१४) नेट्—मस्तः, मस्तकः । घञ् (द्र० ३।३।१८,१९) - मासः । **मास् इति प्रकृत्यन्तरम्**[6], पूर्ण-

१. ससमार धातुवृत्तौ (पृ० ३०८)

२. ७।२।५६सूत्रेणेड् वा । ३. १।२।२६ सूत्रेण किद् वा ।

४. मुस्ता स्त्रीलिङ्गः इत्यमर (२।४।१६०) मोथा नागरमोथा वा नाम्ना प्रसिद्ध द्रव्यम् । लक्ष्ये त्रिलिङ्ग. इत्यमरटीकाया(२।४।१६०) स्वामी । मुस्ता—सर० कण्ठा० २।२।१३४ हैमोणादौ २०१ ॥

५. 'मुस्तिः' इत्यधिकं क्वचित् ।

६. व्याकरणे सर्व एवादेशाः प्रकृत्यन्तरणि द्रष्टव्यानि । अत्र एतस्मिन् विषये ऽस्माभि स्वीये 'स० व्या० शास्त्र का इतिहास' नाम्नि ग्रन्थे विस्तरेण विचारः कृतः (द्र० भाग ३, परि० , पृष्ठ च० संस्क०) ।

मासा युक्तः कालः (द्र० ४।२।३) —पौर्णमासी । **सितनिगमिम सि** (उ० १।६६) इति तुन्-मस्तु । **बसी च** इति **कण्ठः** ॥१०६॥

१०६. **लुट विलोटने**[1] । लुट्यति, अलुटत् । भ्वादौ (१।२१३) लोटति, अलोटीत् । चुरादौ भासार्थः (१०।१६७) —लोटयति ।११०

११७. **उच समवाये** । समवाय ऐक्यम् । उच्यति । उवोच । औचिचत् । **ओक उचः के** (७।३।६४) । उचितम् । **उचः कुश्च**[2] इत्यसुन्—ओकस्, द्यौरोको येषां ते दिवौकस इति **वृद्धिविषये दिवशब्दोऽदन्तोऽस्तीत्येके**[*] **स्थलजलयोर्वौकसि पररुपम् आहुः**[3] —स्थलोकाः, स्थलौकाः, जलोकाः जलौकाः ॥१११॥

११८. **भृशु भ्रन्शु अधःपतने** । तालव्यान्तश्चत्वारः, आद्य ऋदुपधः । भृश्यति । अभृशत् । भृष्टवा, भर्शित्वा । **न क्त्वा सेट्** (१।२।१८) कित्—भृष्टम् । बरीभृश्यते । के (द्र० ३।१।१३५) भृशम् । भ्रश्यति । अभ्रशत् । भ्रष्ट्वा, भ्रंशित्वा । भ्रष्टः । बाभ्रश्यते । भ्वादौ (१।५०१) भ्रंशते, अभ्रंशिष्ट, भ्रंशिता, बनीभ्रश्यते[4] वाहभ्रट् (द्र० ३।२।७६) ॥११२,११३॥

११९. **वृश वरणे** । वृश्यति । अवृशत् । के (द्र० ३।१।१३५) वृशो यवासः ॥११४॥

१२०. **कृश तनूकरणे** । कृश्यति । अकृशत् । के (द्र० ३।१।१३५) कृशः । **अनुपसर्गात् फुल्लक्षीब** (८।२।५५) इति क्ते कृशः, उपसर्गात् तु प्रकृशितः । **तृषिमृषिकृशेः काश्यपस्य** (१।२।२५) इति वा कित्—कृशित्वा कर्शित्वा **ऋतन्यञ्जि** (उ० ४।२) इति कृशानुः ॥११५॥

---

१. 'विलोडने' पाठा० ।

२. अनुपलब्धमूलम् । तुलनीयम्—'उचयङ्कः क च' हैमोणदि. ९६५। उज्ज्वलदत्तादयस्तु उ ४।२१५ सूत्रवृत्तौ बाहुलकाद् व्युत्पादयन्ति ।

३. क एत इति न ज्ञयाते । न चान्यत्र मतमिद दृश्यते (द्र अमरक्षीरटीक २।१।७) ।

४. ध्वंसत्यादिसाहचर्याद् भौवादिकस्य भ्रंशेरेव नीक्सूत्रे (७।४।८४) ग्रहणम्, तेन दैवाकिकस्य बाभ्रश्यत इत्येव भवतीति भाव. (द्र० धातुवृत्ति पृष्ठ ३०९) ।

१२१. **ञितृष पिपासायाम्** । तृष्यनि । अतृषत् । तृषित्वा । **तृषि-मृषि** (१।२।२५) इति तर्षित्वा । **ञीतः क्तः** (३।२।१८७)—तृषितः । तर्षः । **अस्यतितृषोः** (३।४।५७) इति णमुल्—द्व्यहतर्षं गाः पाययति । **स्वपितृषोर्नजिङ्** (३।२।१७२)—तृष्णक् । क्विपि (द्र० ३।२।१७८) तृट् । **तृषिशुषिरसिभ्यः कित्** (उ० ३।१२)—तृष्णा ॥ ११६॥

१२२. हृष **तुष्टौ** । हृष्यति । अहृषत् । हृषितः । भ्वादौ **हृषु अलीके** (१।४६८) हर्षति, अहर्षीत्, हृष्टः । हृषेर्लोमसु (७।२।२९) इति वेट्—संहृष्टानि लोमानि, संहृषितानि । **विस्मितप्रतीघातयोश्च**[1] (७।२।२९ वा०)—हृष्टश्चैत्रः हृषितः, हृष्टा दन्ताः हृषिताः । **नन्दी** अस्याप्युदित्वमाह[2] ॥११७॥

१२३. **रुष रोष** । रुष्यति । अरुषत् । **तीषसहलुभरुषरिषः** (तु० ७।२।४८) इति वेट्—रोष्टा रोषिता । **रुष्यमत्वर** (७।२।२८) इति रुष्टः रुषितः । भ्वादौ **रुष हिंसायाम्** (द्र० १।४५८)—रोषति ।११८

१२४. **डिप क्षेपे** । डिप्यति । अडिपत् । तुदादौ (६।७६) डिपति । चुरादौ **डिप स्तिप क्षेपे** (१०।१२१)—डेपयति ॥११९॥

१२५. **स्तूप समुच्छ्राये** । स्तूप्यति । अस्तूपत् । तुष्टूपयिषति । चुरादौ (१।१२२) स्तूपयति । स्तूपः । **स्तुप** इति **दुर्गः**—स्तुप्यति ।१२०

१२६. **कुप क्रोधे** । कुप्यति । अकुपत् । पचादौ[3] कोपः । **क्रुधमण्डार्थेभ्यश्च** (३।१।१५१) इति युच्—कोपनः ॥१२१॥

१२७. **गुप व्याकुलत्वे** । गुप्यति । अगुदत् । **राजसूयसूर्य** (३।१।११५) इति कुप्यं सुवर्णरजताभ्यामन्यद् धनम्, गोप्यम् अन्यत् । भ्वादौ **गुप गोपने** (१।६९६)—जुगुप्सते, **गुपू रक्षणे** (१।२८०) गोपायति । चुरादौ भासार्थः (१०।१९७) गोपायति ॥१२२॥

---

१. क्षीरतरङ्गिण्यां १।४६६ सूत्रव्याख्याने 'विस्मित प्रतिवातयोश्च' इत्य-पाठः (द्र०पृष्ठ १०२, पं०१५) ।

२. उद्धृत धातुवृत्तौ (पृष्ठ ३०९) ।

३. पचादिगणे (३।१।१३४) कोपशब्दः साक्षान्न पठ्यते ।

**१२८. युप रुप लुप विमोहने।** युप्यति, अयुपत्। **रलोव्युपधाद्** (१।२।२६) इति युपित्वा योपित्वा, युयुपिषति युयोपिषति। रुप्यति, अरुपत्। रोपः शरः। रूप्यम्। लुप्यति, अलुपत्। तुदादौ **लुप्लृ छेदने** (६।१३५)—लुम्पति ॥१२३—१२५॥

**१२९. लुभ गार्द्ध्ये।** गार्द्ध्यम् अभिकाङ्क्षा। लुभ्यति। अलुभत्। **तीषु[1] सह** (तु० ७।२।४८) इति लोब्धा लोभिता। **लुभो विमोहने** (७।२।५४) इट् विलुभिताः केशाः, लुब्धोऽन्यः ॥१२६॥

**१३०. क्षुभ संचलने।** संचलनं रूपान्यथात्वम्। क्षुभ्यति। अक्षुभत्। क्षोभितः। **क्षुब्धस्वान्त** (७।२।१८) इति क्षुब्धो मन्थश्चेत्, क्षुभितोऽन्यः। **क्षुभिताम्भोधिवर्णना[2]**। क्र्यादौ (९।५२) क्षुभ्नाति। भ्वादौ (१।४९९) क्षोभते ॥१२७॥

**१३१. णभ तुभ हिंसायाम्।** प्रणभ्यति। अनभत्। भ्वादौ (१।५००) नभते। क्र्यादौ (९।५०) नभ्नाति। **अत्यविचमि** (उ० ३।११७) इत्यसच्‌-नभसम्। अदन्तम्। नभो नञि बभस्तेः (द्र० धा० सू० ३।१९)। नहे॒र ३।१९) नभिः (तु० द० उ० १।५४)। तुभ्यति। अतुभत् ॥१२८,१२९॥

**१३२. क्लिदू आर्द्रभावे।** क्लिद्यति। अक्लिदत्। क्लेत्ता, क्लेदिता, क्लिन्नः। **चरिचलि**(६।१।१२ वा०) इत्यादि द्वे च चिक्लिदः ॥१३०॥

**१३३. ञिमिदा स्नेहने। मिदे॒र्गुणः** (७।३।८२) मेद्यति अमिदत्। ञीतः **क्तः** (३।२।१८७) **आदितश्च** (७।१।१६) इति नेट्—मिन्नः। **विभाषा भावादिकर्मणोः** (७।२।१७)—प्रमेदितः प्रमिन्नः, मेदितमनेन, मिन्नम्—**निष्ठा शीङ्स्विदि** (१।२।१९) इति सेण् निठा न

---

१. 'तीषसह' पाठा०। क्षीरतरङ्गिण्यां 'रुष रिष हिंसायाम्' (१।४५८) व्याख्याने 'तीषसह' इति पाठ उद्ध्रियते (पृष्ठ ९९, प० २४), अन्यत्र सर्वत्र (१।५९०॥ ४।१२३॥६।५७) 'तीषुसह' इत्येव पठ्यते। तेन स्वामिमते 'तीषुसठ' इत्येवपाठ इति निश्चितम्। अतः 'रुष रिष हिंसायाम्' (१।४५८) इत्यत्रापि 'तीषुसह' इत्येव शुद्धः पाठो द्रष्टव्यः।

२. शिशुपालवध २।१०७॥

कित्। अच् (द्र० ३।१।१३४)—मेदाख्यो देशः[1]। असुन् (द्र० उ० ९।४९)—मेदो वसा। मेदिनी। भ्वादौ (१।४९२) मेदते, अमेदिष्ट। चुरादौ **मिद स्नेहने** (चु० १०।७) मेदयति ॥१३१॥

**१३४. ञिक्ष्विदा स्नेहनमोहनयोः**। क्ष्विद्यति। अक्ष्विदत्। क्ष्विण्णः। प्रक्ष्विण्णः प्रक्ष्वेदितः। क्ष्विण्णम् अनेन, क्ष्वेदितम् (द्र० ७।२।१७॥, १।२।१९)। भ्वादौ (१।७०५) अव्यक्तशब्दे[2] क्ष्वेदति ॥१३२॥

**१३५. ऋधु वृद्धौ**। ऋध्यति। आर्धत्, मा ऋधत्। आनृधुः। **सनीवन्तर्ध** (७।२।४७) इति वेट्—अर्दिधिषति ईर्त्सति, **आप्ज्ञप्यृधामीत्** (७।४।५५)—अर्धयति, आर्दिधत्। **ऋदुपधाच्च** (३।१।११०) इति क्यप्—ऋध्यः। घञ् (द्र० ३।३।१८,१९)—अर्धः। ऋद्ध्वा अर्धित्वा, **न क्त्वा सेट्** (१।२।१८), ऋद्धः। स्वादौ। (५।२८) ऋध्नोति ॥१३३॥

**१३६. गृधु अभिकाङ्क्षायाम्**। गृध्यति। अगृधत्। जिघृत्सति। **सिपि धातोरुर्वा** (८।२।७४)—अजर्घाः अजर्घत्, यङ्लुगन्ताल्लङ्, अजर्गर्धीत् लुङि। **त्रसिगृधि** (३।२।१४०) इति क्नुः—गृध्नुः। **जुचङ्क्रम्यदन्द्रम्यसृगृधिज्वल** (३।२।१५०) इति युच्—गर्धनः। **सुसूधागृधिभ्यः क्रन्** (द० उ० ८।४२)—गृध्रः। गृद्ध्वा गर्धित्वा। गर्धः। गृद्धः। चुरादौ[3] **गृधिवञ्च्योः प्रलम्भने** (१।३।६७) तङ्—गर्धयते ॥१३४॥

---

१. भ्वादिसूत्रव्याख्याने (४९२) 'मेदाख्यो म्लेच्छ.' इत्युक्तं स्वामिना। तत्रस्था टिप्पण्यप्यत्र द्रष्टव्या (पृष्ठ १०६)।

२ क्षीरस्वामी भ्वादौ 'ञिक्ष्विदा स्नेहनमोहनयो'(४९३) इत्यपि पठति, परन्तु 'ञिक्ष्विदा अव्यक्ते शब्दे' (१।७०५) इति सूत्रव्याख्याने, इह च न तं निर्दिशति, तेन 'ज्ञायते भ्वादौ ञिक्ष्विदा स्नहेनमोहनयोः' इति पठन्नपि न तमभिमनुते। अत एवान्ये व्याख्यातारस्तत्स्थाने 'ञिष्विदा' इति पठन्ति।

३. क्षीरतरङ्गिण्यां नायं चुरादौ क्वचित् पठ्यते। अत्र लिबिशेन हैमधातुपारायणदर्शनाय ४।४४ संख्या निर्दिशिता। ३।४४ इति युक्ता सख्या ज्ञेया, जुहोत्यादिगणस्यादावन्तर्भावात्। तत्र 'केचित्' पदेन क्षीरतरङ्गिण्या इहस्थो ग्रन्थः स्मर्यते।

१३७. **उवात्ता उवात्तेतः ।**

१३८. **वृत्** । पुषादयो वर्तिताः[1]

**श्रीमद्भट्टक्षीरस्वाम्युत्प्रेक्षितधातुवृत्तौ**
**क्षीरतरङ्गिण्यां दिवादिगणः**
**सम्पूर्णः ।।**[2]

---

१. पुषादयोवर्तिताः, न तु दिवादयः । दिवादिराकृतिगण इत्यभिप्रायः । तेन 'ज्या वयोहानौ' इत्यस्य कर्तरि 'जीयते' इति रूपं गोपथब्राह्मणे १।३।१४ दृश्यते ।

२. इति क्षीरस्वाम्युत्प्रेक्षितायां धातुवृत्तौ क्षीरतरङ्गिण्यां दिवादयः समाप्तः ।।

# ॥ अथ स्वादिगणः ॥

१. **षुञ् अभिषवे** । अभिषवः क्लेदनं, संधानाख्यम् । इतः कृञन्ताः (५।७) सप्तानिटः । **स्वादिभ्यः श्नुः** (३।१।७३)—सुनोति, सुनुते; अभिषुणोति, अभ्यषुणोत् । **उपसर्गात् सुनोति** (८।३।६५) इति षत्वे प्राप्ते **स्थादिष्वभ्यासेन** (८।३।६४) इति नियमान्नास्ति—अभिसुषाव अभिसुषुवे । **सुनोतेः स्यसनोः** (८।३।११७)—अभिसोष्यति, अभिसुसूषति । सुन्वः सुनुवः, सुन्मः सुनुमः—**लोपश्चास्यान्यतरस्यां म्वोः** (६।४।१०७) । **स्तुसुधूञ्भ्यः** (७।२।७२) इति सिचीडागमः—असावीत् । **सुञो यज्ञसंयोगे** (३।२।१३२) शता[1]— सुन्वन् । **संज्ञाया समज** (३।३।९९) इति सुत्या । **राजसूयसूर्य** (३।१।११४) इति राजसूयः । **आसुयुवपि** (३।१।१२६) इति ण्यत्—आसाव्यम् । **सोमे सुञः** (३।२।९०) क्विप्—सोमसुत् । **सुयजोर्ङ्वनिप्** (३।२।१०३)—सुत्वा । **वनो र च** (४।१।७) सुत्वरी । **अर्तिस्तुसु** (उ० १।१४०) इति मन्—सोमः[2] । **सुसूधागृधिभ्यः क्रन्** (द० उ० ८।४२) सुरा । **सुयुरुवृञो युच्** (उ० २।७४) सवनः । **सुञो दीर्घश्च** (उ० ३।१३) सूना वधस्थानम् । **कुसुयुभ्यश्च** (दश० उ० ७।५) इति सूपः ।।१।।

२. **षिञ् बन्धने** । सिनोति, सिनुते । सिषाय । ण्वुल् (द्र० ३।१।१३३)—सायकः । **परिनिविभ्यः सेव** (८।३।७०) इति षत्वम्—विषयः । क्ते—प्रसितः । **अञ्जिघृषिभ्यः क्तः** (उ० ३।८९) सितः । **दाधेट्सि** (३।२।१५९) इति रुः—सेरुः । **सितनिगमि** (उ० १।६९) इति तुन्—सेतुः । **सुसिचिभ्यां दीर्घश्च** (तु० उ० २।२५)—सीरम् । **इण्सिदीङुष्यविभ्यो नक्**(तु० दश० उ० ३।२)—सिनो बद्धः । **कृवृजृसि** (दश० उ० ५।४२) इति नः—सेना ।।२।।

३. **शिञ् निशाने** । निशानं तनूकरणम् । शिनोति, शिनुते शेता ।३

---

१. ,शतृ' इत्यस्य प्रथमान्तं पदम् । 'शत्रा' पाठा० ।

२. इतोऽग्रे–'सुञोरिरिति दीर्घश्च—सूरीः' इत्यधिक क्वचित् । अत्र सुञो रिन् दीर्घश्च (दश० उ० १।३३)—सूरिः' इति शुद्धः पाठः स्यात् । अत्रास्मदीया दशपाद्युणादिवृत्तेष्टिप्पणी द्रष्टव्या (पृष्ठ २१ टि० २) ।

**४. डुमिञ् प्रक्षेपणे**। मिनोति, मिनुते। **मीनातिमिनोति** (६।१।५०) इत्यात्त्वम्—माता, मास्यति, ल्यपि च[1] (६।१।५०) इति प्रमाय। **सनि मीमा** (७।४।५४) इति **गामादाग्रहणेष्वविशेषात्** (द्र० सीरदेव १०८, परि० शे० ११५) मित्सति, मित्सते। मित्रिमम्। **कृवापाजि** (उ० १।१) इत्युण् मायुः पित्तम्। **भृमृशीतृचरित्सरितनिमिमस्जिभ्य उः** (दश० उ० १।९२) इत्युः—मयुः किन्नरः। बहुलवचनाद् (द्र० ३।३।१) आत्त्वं न। वातप्रमीः (द्र० उ० ४।१)। **नप्तृनेष्टृ** (२।९२) इति जामाता। [**सु**]**सिचिभ्याम्** (तु० उ० २।२५)—मीरा[2] ॥४॥

**५. चिञ् चयने**[3]। चिनोति, चिनुते। **नेर्गद** (८।४।१७) इति प्रणिचिनोति। **विभाषा चेः** (७।३।५८) इति सल्ँलिटोर्वा कुत्वम्—चिकीषति चिचीषति, चिकाय चिचाय। **चिस्फुरोर्णौ** (६।१।५४) आत्त्वम्—उच्चापयति। चुरादौ (१०।७९) मित्त्वात् चपयति[4]। **क्रतौ कुण्डपाय्यसंचाय्यौ, अग्नौ परिचाय्योपचाय्यसमूह्याः, चित्याग्निचित्ये च** (३।१।१३०-१३२)। क्तिन् (द्र० ३।३।९४) चितिः। **अग्नौ चेः** (३।२।९१) क्विप्—अग्निचित्। **कर्मण्यग्न्याख्यायाम्** (३।२।९२)—श्येन इव चीयते—श्येनचित्। **हस्तादाने चेरस्तेये** (३।३।४०) घञ्—पुष्पप्रचायः। **निवासचितिशरीरोपसमाधानेष्वादेश्च कः** (३।३।४१)—निकायः, **आकायमग्निं चिन्वीत**[5], कायः, गोमयनिकायः। **संघे चानौत्तराधर्ये** (३।३।४२)—चैक्खिलिनिकायः[6]। चयोऽन्यत्र। **ग्रहवृदृ** (३।३।५८) इत्यप्—निश्चयः। **सुसिचिभ्यां दीर्घश्च** (तु० उ० २।२५)—चीरम्। **अमिचिमिदि** (उ० ४।१६४) इति क्त्रः—चित्रम् ॥५॥

---

१. इम स्वतन्त्रं सूत्रं विज्ञाय इतोऽग्रे लिबिशेन ६।१।४१ सूत्रसङ्ख्या निर्दिष्टा। ६।१।४१ निर्दिष्टं 'ल्यपि च' इति सूत्रं तु वेञः ल्यपि सम्प्रसारणाभाव शास्ति। न च तस्यात्र किञ्चित् प्रयोजनम्, इत्यहो लिबिशस्याज्ञानम्। वस्तुतः 'मीनातिमीनोति' इति सूत्रस्यैवाय भागो ल्यप्यात्त्वनिदर्शनार्थः पृथङ् निर्दिष्टः।

२. द्र० 'मीरा देशसीमा' इति दश० उ० वृत्तिः ८।४३ कपाठः, हैमोणादिवृत्तिः ३९२ च। ३. 'चये' पाठा०।

४. 'चिञ् चये (१०।८१) इति धातुसूत्रतरङ्गिणी द्रष्टव्या।

५. अनुपलब्धमूलमिदम्। ६. अज्ञातार्थं पदम्।

६. **स्तृञ् आच्छादने**[1]। स्तृणोति[2], स्तृणुते। **गुणोर्तिसंयोगाद्योः** (७।४।२९)—आस्तर्यते। विस्तृतः। क्र्यादौ **स्तृञ्** (९।१३)—आस्तृणाति, आस्तीर्यते, आस्तीर्णः ॥६॥

७. **कृञ् हिंसायाम्**। कृणोति, कृणुते। आर्धधातुके करोतिवत् (८।११)—चकार, चक्रे ॥७॥

८. **अनुदात्ताः**।

९. **वृञ् वरणे**[3], १०. **धूञ्**[4] **कम्पने**, ११. **उदात्तौ**। वृणोति, वृणुते। प्रावरिता प्रावरीता, **वृतो वा** (७।२।३८) इतीटो वा दीर्घः। **सिचि परस्मैपदेषु** (तु० ७।२।४०) इतीट्—प्रावारीत्, प्रावारिष्टाम्। **लिङ्सिचोरात्मनेपदेषु** (७।२।४२) वा—प्रावरिषाताम्, प्रावृषाताम्, वृषीष्ट वरिषीष्ट, **न लिङि** (७।२।३९) इति दीर्घो नास्ति। **इट् सनि वा** (७।२।४१)—वुवूर्षति विवरिषति विवरीषति। **अवद्यपण्यवर्या** (३।१।१०१) इत्यनिरोधे[5] वर्यः, वार्योऽन्यः। **एतिस्तुशासु** (३।१।१०९) इति क्यप्—वृत्यम्। **ण्यदपीष्यते**—वार्यम्। **संज्ञायां भृतॄ** (३।२।४६) इति पतिवरा कन्या। **ग्रहवृदृ** (३।३।५८) इत्यप्—वरः। **नौ वृ धान्ये** (३।३।४८) घञ्—नीवारः। **वृणोतेराच्छादने** (३।३।५४)—प्रवारः। **अण्डन् कृसृभृवृञः** (उ० १।१२९)—वरण्डः। **जॄवृञ ऊथन्** (उ० २।५ श्वेत० A B. पाठः)—वरूथो रथगुप्तिः। **सुयुरुवृञो युच्** (उ० २।७४)—वरणः। **अजिवृरीभ्यो निच्च** (उ० ३।३८)—वर्णुर्नाम नदः। **कृगृशृवृञ्चतिभ्यः ष्वरच्** (दश० उ० ८।४७)—वर्वरः कुञ्चिताः केशाः। **सृवृभृशुषिमुषिभ्यः कित्** (दश० उ० ३।१९)—वृकः। **वृञश्चित्** (उ० ३।१०७)—वरत्रा चर्मरज्जुः। **जनिदाच्च्युः** (उ० ४।१०४) इति वृशो वाशिका। **वसिवपिवदिराजि** (दश० उ० १।५३) इतीञ्—वारि। ण्यन्तात् क्विपि वाः—**वारां निधिः**[6]। धूञ् कम्पने[7]। धूञ् इतीहामुं **शिवस्वामी** दीर्घमाह—धूनोति, धूनुते। **स्वरति-**

---

१. 'छादने' पाठ०। २. 'आस्तृणोति' पाठा०।

३. 'अनिरोधे' पाठा०। ४ अत्र विषये अग्रिमा टिप्पणी ७ द्रष्टव्या।

५. 'अनिरोधने' पाठा०। ६. कुत्रत्योऽस्य प्रयोग इति न ज्ञायते।

७. 'अत्र कः स्वामिसम्मतः पाठ इत्यत्र विप्रवदन्ते उद्धर्तारः। तथा हि सायणः- 'अत्र स्वामी तु ह्रस्वान्तममुं पठित्वा प्रयोगवशाद् दीर्घान्तमप्याह।

**सूति** (७।२।४४) इति वेट्—विधोता विधविता । विधूतः । **धूञ्प्रीञोर्नुक्** (७.३।३७वा०)—विधूनयति । **धुञ्** इति **चन्द्रः**[1] (तु० धातु० ५।६)—धुनोति, विधुतः । **अर्तिलूधूसूखनसहचर इत्रः** (३।२।१४८) इति धवित्रम् । **इषियुधि** (उ० १।१४५) इति मक्—धूमः । **कृधूमदिभ्यः कित्** (उ० ३।७३)—धूसरः । क्र्यादौ (६।१६) धुनाति, तुदादौ **धू विधूनने** (६।९६)—धुवति ॥९॥

१२. **टुदु उपतापे** । इतश्चत्वारोऽनिटः । दुनोति । दोता । दवथुः (द्र० ३।३।८९) । भौवादिकेन ग्रहणानि, **दु द्रु गतौ** (१।६७५)—दवति ॥१०॥

१३. **हि गतौ वृद्धौ च** । **हिनुमीना** (८।४।१५) णत्वम्—प्रहिणोति । **हेरचङि** (७।३।५६) इति कुत्वम्—प्रजिघाय । **कमिमनि** (उ० १।७३) इति तुन्—हेतुः । मक् (द्र० उ० १।१४७)—हिमम् । **मनिन्** (दश० उ० ६।७३)—हेम । **ऊतियूति** (३।३।९७) इति हेतिरायुधम् ॥११॥

१४. **पृ प्रीतौ** । पृणोति । पर्ता । पुपूर्षति, **इट् सनि वा** (७।२।४१) इति नास्त्युपदेशाधिकारात्[2] (द्र० ७।२।१०) ॥१२॥

---

शिवस्वामिकश्यपौ तु दीर्घान्तमाहतुः' (धातुवृत्ति पृष्ठ ३१६) इति । प्रक्रियाकौमुदीटीकायां विट्ठलस्त्वाह—क्षीरस्वामी दीर्घमाह, अन्ये ह्रस्वम्' (पाठान्तरे 'शिवस्वामिनाम निर्दिष्टम्) (भाग २, पृष्ठ २५४) । अत्र धुञ् कम्पने इति ह्रस्वान्तपाठ एव युक्ततरः, उत्तरत्र शिवस्वामिमतेन दीर्घान्तपाठस्योक्तत्वात् क्र्यादौ (६।१६) 'स्वादौ धूञ्धुञौ धूनोति धुनोति' इत्युभयं पठिष्यति क्षीरस्वामी, एव तुदादावपि (६।९६) । अयं च चान्द्रपाठं स्वाकृत्योक्तमिति द्रष्टव्यम् । सायणस्तु धुञ् इति पठन् अन्ते 'स्वादय उभयतोभाषाः वृवर्जमनुदात्ताः । तस्यानुदात्तमध्ये पाठ ऋकारान्तोभयतोभाषानुरोधेन'—इत्याह (धातुवृत्ति पृष्ठ ३१७) ।

१. मुद्रिते चान्द्रधातुपाठे तु 'धूञ् कम्पने' इति दीर्घान्तः पठ्यते । सायणस्तु 'उभयमपीति चान्द्राः इति सुधाकरः' इत्याह (धा० वृ० पृष्ठ ३१७) । अत्र चान्द्रधातुपाठो भ्रष्ट इति प्रतीयते । 'धूञ् कम्पने' इतोऽग्रे मुद्रितग्रन्थे 'विभाषितेट्त्वात्' ।

२. उपदेशे दीर्घ-ऋकारान्तादिति भावः । अयं तु सनि दीर्घः ।

**१५. स्मृ प्रीतिबलनयोः ।** बलनं जीवनम्[१] । स्मृणोति । सस्मार । **स्पृ**[२] **इत्येके** । ते तु छान्दसप्रायौ[३] ॥१३॥

**१६. अनुदात्ताः** । नोदात्तेत[४] एकाच्त्वात् ।

**१७. आप्लृ व्याप्तौ ।** चत्वारोऽनिटः । आप्नोति । आपत् (द्र० ३।१।५५) । आप्ता । **आप्ज्ञप्यृधामीत्** (तु० ७।४।५५)—ईप्सति । **उदके नुम्भौ च** (उ०४।२१०) इत्यम्भः । **ल्यपि लघुपूर्वात्, विभाषाऽऽपः** (६।४।५६,५७) इति णेर्वा लोपः– प्राप्य प्रापय्य । **गुरोश्च हलः** (३।३।१०३) इत्यङि प्राप्ते **क्तिन् आबादिभ्यः** (३।३।९४ वा ) आप्तिः ॥१४॥

**१८. शक्लृ शक्तौ ।** शक्नोति, शक्नुवन्ति । अन्यद् दिवादौ (४।७८) उक्तम् । सनिमीमा (७।४।५४) इति शिक्षति । अशकत् । पुषादित्वाद् (दिवादौ ७३—९२) अङि सिद्धे लृदित्त्वम् आत्मनेपदार्थे[५] कर्मव्यतिहारे[६]—व्यत्यशकत । **शकधृषज्ञा** (३।४।६५) इति तुमुन्—शक्तो घटं कर्तुम् । शकितः ॥१५॥

---

१. 'प्रीतिचलनयोरित्येके' इति धातुप्रदीपे (पृष्ठ १०३) मैत्रेयः । 'प्रीतिचलनयोरित्यन्ये । चलनं जीवनमिति स्वामी' इति धातुवृत्तौ (पृष्ठ ३१९) पाठः । धातुवृत्यनुसारं 'प्रीतिचलनयोः । चलनं जीवनम्' इत्येव स्वामिनः शुद्धः पाठः स्यात् ।

२. किल्विषस्पृत् इति ऋग्वेदे (१०।७१।१०)इति श्रूयते । तत्राह सायणः —'किल्विषं स्पृणोति चलयति नाशयति इति किल्विषस्पृत् ।'

३. 'ते तु छान्दसप्रायाः' तौ तु छान्दसप्रायौ' इति वा युक्तः पाठः । 'इमौ पृणोतिश्च त्रयश्छान्दसा' इति स्वामिकाश्यपौ' इति धातुवृत्तिः (पृष्ठ ३१९) ।

४. 'न तूदात्तेतः' पाठा० । अत्र पृ० ६, पं० १-२ स्मृतः श्लोको द्रष्टव्यः ।

५. लृकार अनुदात्त, तस्येत्वमात्मनेपदार्थमिति भावः । वस्तुतः चिन्त्यमिदम् । इह हि लृदित्वाभावे सिच् स्यात् । नह्यस्मात् सौवादिकात् दैवादिकस्थपुषादित्वादङ् स्यात् ।

६. इतोऽग्रे लिबिशः ३।१।८७ सूत्रसंख्यां निर्दिश्य कर्मवत्कर्मणा तुल्यक्रियः' इति सूत्रं द्रष्टव्यमिति संकेतितवान् । कर्मवत् सूत्रं तु कर्मकर्तरि प्रवर्तते । इह तु कर्मव्यतिहारस्य विषयः । अतोऽत्रात्मनेपदप्रदर्शनाय 'कर्तरि कर्मव्यतिहारे' (१।३।१४) इत्यस्य संख्या निदर्शनीया ।

१६. **राध षाध संसिद्धौ** । संसिद्धिः फलसम्पत्तिः । **राधीक्ष्योर्यस्य विप्रश्नः** (१।४।३९)—चैत्राय राध्नोति । **राधो हिंसायाम्** (६।४।१२३) एत्वाभ्यासलोपौ—अपरेधुः । **राधो हिंसायां सनीस् वक्तव्यात्** (द्र० ७।४।५४ वा०) प्रतिरित्सति । **क्तिन् आबादिभ्यः** (३।३।९४ वा०)—राद्धिः । दिवादौ **राधोऽकर्मकाद् वृद्धावेव** (४।७१)—राध्यति । साध्नोति । सिषात्सति । **अषोपदेश इत्येके**—सिसात्सति । नन्द्यादौ (द्र० ३।१।१३४ वा०) ण्यन्तात् साधनः । **कृवापाजि** (उ० १।१) इत्युण्—साधुः । दिवादौ साध्यति[1] ॥१६,१७॥

२०. **अनुदात्ता उदात्तेतः** ।

२१. **अशू व्याप्तौ** । अश्नुते । अष्टा, अशिता । **अश्नोतेश्च** (७।४।७२) इति नुट्—व्यानशे[2] । **स्मिपूङ्रञ्ज्वशां सनि** (तु० ७।२।७४) इतीट्—अशिशिषते । **अटयर्त्यशूर्णोतीनां** (३।१।२२ वा०) यङ्—अशाश्यते ।[3] **कृवापाजि** (उ० १।१) इत्याशु । **शावशेराप्तौ** (उ० १।४४) उरन्—श्वशुरः । **अशूप्रुषि**(उ० १।१५१) इति क्वन्—अश्वः । **अशे रश च** (उ० २।७५) इति युच्—रशना । **अशे रश् च** (दश० उ० १।१५ ङ्पाठः) इति मिः—रश्मिः । **अशिपणाय्यो रुडायलकौ च** (उ० ४।१३३)—राशिः । **अर्तिसृधृधमि** (उ० २।१०२) इत्यनिः—अशनिः । **मनिन्** (दश० उ० ६।७३) अश्मा । **अशेर्देवने**[4] (उ० ३।६५) सः—अक्षः । **अशेः सरन्**(उ० ३।७०) अक्षरम् । **अशेर्निद्**(उ० ३।१५६) इति सिः—अक्षि । **अशेर्देवने युट् च** (दश० उ० ६।५१ ङ्पाठः) यशः । क्र्यादौ **अश भोजने** (६।५२) अश्नाति ॥१८॥

२२. **ष्टिघ आस्कन्दने** । स्तिघ्नुते[5] ॥१९॥

२३. **उदात्तावनुदात्तेतौ** ।

२४. **तिक तिग च** । इतश्चम्वन्ता (५।३१) नव सेट. परस्मैपदि-

---

१. नहि क्षीरतरङ्गिण्यां साधधातुर्दिवादौ पठ्यते । काशकृत्स्नधातुपाठे (३।२३, पृष्ठ १३७) तु 'राध साध समिद्धौ' इति दिवादौ पठ्यते । तदनुसारं चन्द्रकातन्त्रकारावपि दिवादौ पठतः (चा० ५।२२) ।

२. 'अनशे' पाठा० ।

३. धातुप्रदीपोऽत्र द्रष्टव्यः ।

४. 'वने' 'धने' पाठान्तरे ।

५. ता अतितिष्टिघिषन्, अतिष्टिघं नाशक्नोत् (मै० सं० १।६।३) ।

नश्च । चकाराद् आस्कन्दने ।[1] तिक्नोति, तिग्नोति । के (द्र० ३।१।१३५) तिकः ॥२०,२१॥

२५. **षघ हिंसायाम्** । सघ्नोति । सिसघिषति । सिषाघयिषति । **दुर्ग**स्याषोपदेशो[2]ऽयम्—सिसाघयिषति । **तिक तिघ चषघ**[3] **हिंसाया-मित्येके**[4]—तिघ्नोति चषघ्नोति[3] ॥२२॥

२६. **ञिधृषा प्रागल्भ्ये** । धृष्णोति । धृष्टः, प्रधृष्टः प्रधर्षित धृष्टमनेन, धर्षितम्, **निष्ठा शीङ्स्विदि** (१।२।१९) इति कित्त्वं नास्ति । **त्रसिगृधिधृषिक्षिपेः क्नुः** (३।२।१४)—धृष्णु । **भाषायां शासियुधि** (३।३।१३० वा०) इति युच्—दुर्धर्षणः । **धृषेर्धिष च संज्ञायाम्** (उ० २।८२) इति क्युः—धिषणा धीः । **शकधृषज्ञा** (३।४।६५) इति तुमुन्—धृष्णोति भोक्तुम् । **ऋत्विग्दधृग्** (३।२।५९) इति दधृक् । चुरादौ **धृष अप्रसहने** (१०।२३९)—धर्षयति ॥२३॥

२७. **दन्भु दम्भे** । दभ्नोति । **श्रन्थिग्रन्थिदन्भिस्वञ्जीनाम्** (द्र० १।२।६ काशिका) किति नलोपः—देभुः । **सनीवन्तर्ध** (७।२।४९) इति वेट् दिदम्भिषति, अनिट् पक्षे—**दम्भ इच्च** (तु० ७।४।५६)—धिप्सति धीप्सति, **हलन्ताच्च** (१।२।१०) इति कित्त्वे हल्जातिराश्रीयते । दब्ध्वा दम्भित्वा । दब्धः ॥२४॥

२८. **ऋधु वृद्धौ** । ऋध्नोति । दिवादौ (४।१३५) ऋध्यति । तत्रैव ग्रहणान्युक्तानि ॥२४॥

---

१. यथा तु काशकृत्स्नकातन्त्रचान्द्रहैमशाकटायनधातुपाठेषु पाठस्तथा तिक तिग धात्वोर्हिंसार्थ, न तु स्कन्दनार्थ. । प्रतीयते कस्यचित् प्राचीनश्लोकबद्धधातु-पाठस्यानुकरणेन मध्ये चकारः पठित. स्यात् 'ष्टिघ आस्कन्दने तिक, तिग च षघ हिंसायाम्' । इद रहस्यमविदित्वैव कैश्चिद् वृत्तिकारैश्चकाराद् आस्कन्द-नार्थो गृहीत. । अपरैश्च चकारः षघ धातुना सयोज्य चषघ धातु. स्वीकृतः । द्र० इहैव उत्तर धातुसूत्र (२५) व्याख्या ।

२. दुर्ग कातन्त्रधातुपाठव्याख्याता कातन्त्रधातुपाठे तु षघ इत्येव पठ्यते । स्वयमपि ऋक्षि चिरि (३३) इत्युत्तरसूत्रव्याख्याने दुर्गनाम्ना 'षघ' इति षोपदेशमेव पठिष्यति ।

३. 'चखघ' 'चखघ्नोति' पाठा० । अय च षकारस्यैव खकारोच्चारण-जन्योऽपपाठः ।

४. अस्यैव पृष्ठस्य प्रथमा टिप्पणी द्रष्टव्या ।

**२९. छन्दसि ।** आगणान्ताच्छन्दोऽधिकारः[1] ।

**३०. अह व्याप्तौ ।** अह्नोति ॥२६॥

**३१. दघ घातने ।** दघ्नोति ॥२७॥

**३२. चमु भक्षणे ।** आचम्नोति । भ्वादौ ( १ । ३१५ ) आचामति ॥२८॥

**३३. ऋक्षि चिरि जिरि दाश दृ हिंसायाम् ।** ऋङ्क्ष्णोति[2] आनृङ्क्ष[3] । **ऋणोति क्षिणोति इत्येके ।** चिरिणोति, जिरिणोति । **एकाचां च चिरेर्जिरेः** (द्र० १।१ पृ० ५ पं० ३) इति नानुबन्धिता । दाश्नोति । दाशः । दृणोति । **दुर्ग[2]स्तु तिक तिघ[3] षघ[4] ऋक्ष क्षिरि चिरि जिरि**

---

१. उद्धृतमिदं पुरुषकारे (पृष्ठ २४) । छन्दसि इति सूत्रस्य इद व्याख्यानं 'दध घातने' (३१) इत्युत्तरसूत्रानन्तर मुद्रित जर्मनसंस्करणे । स च लेखकप्रमादज. । अस्माभिस्त्वयं यथास्थान प्रापितः ।

२. ऋक्ष्णोति, आनर्क्ष' इति लिबिशपाठः । ऋक्षि-धातोरिदित्त्वान्नुमा भाव्यम् । पुरुषकारस्तु स्वामिनाम्ना शुद्धमेव सनुमं पाठमुदाजहार । तथा हि —"क्षीरस्वामी तु ऋक्षि इति पठित्वा ऋङ्क्ष्णोति इति आनृङ्क्ष इति चोदाहृत्य ऋणोति क्षिणोति इत्येके" इत्याह (पुरुष० पृष्ठ २४) ।

३. दुर्गः कातन्त्रधातुपाठव्याख्याता । अस्मदीये कातन्त्रधातुपाठस्य हस्तलेखे 'तिघ' स्थाने 'तिग' पठचते । सायणोऽपि । धातुवृत्तौ दुर्गनाम्ना 'तिग' इत्येव पठति (पृष्ठ ३२२) । षघ धातोरुत्तरमस्मद्धस्तलेखे कश्चित् पाठस्त्रुटितः । सायणस्तु 'षघ रि क्षि चिरि' इत्येव पठति (पृष्ठ ३२२) । 'दाश' स्थाने कातन्त्रधातुपाठे 'दास' इति पठचते, 'द्रु' स्थाने च 'द्रुह' । सायणस्तु दुङ्' पठित्वा 'दुनुते' इत्युदाजहार (पृष्ठ ३२२) । हिसायाम्' इत्यस्य स्थाने कातन्त्रपाठे 'जिघासायाम्' पाठः । काशकृत्स्नधातुपाठे तु 'तिक तिग षिध तिक्षु तीक्षु चिरि जिरि दास द्रुहि जिघासायाम्' इति पठचते (पृष्ठ १५४) ।

इद चात्रावधेयम्—पाणियीये धातुपाठे छान्दसत्वेन स्मृता धातवः काशकृत्स्नव्याख्याने विना छन्दोनिर्देशं पठिताः । तमनुसृत्यैव च लौकिकमात्रविषये कातन्त्रेऽपि निर्दिष्टाः । तदनुसारमेव च चान्द्रेऽपि 'ऋक्ष चिरि जिरि हिंसायाम् (५।२२) पठचन्ते ।

४. 'चषध' पाठा० ।

**दाश द्रु हिंसायाम्**[1] मित्याह । छान्दसा अमी जिघर्त्यादिवन्नियत विषयाः[2] ॥२९-३३॥

**भट्टक्षीरस्वाम्युत्प्रेक्षितधातुवृत्तौ**
**क्षीर—तरङ्गिण्यां**
**स्वादिगणः**
**सम्पूर्णः**[3] ।

---

१. द्रष्टव्य पृष्ठ २४२ टिप्पणी १ ।

२. तदुक्त पतञ्जलिना—घरतिरस्मा अविशेषेणोपदिष्टः । स घृतं घृणा घर्म इत्येवं विषय. । महा० ७।१।९६ ।

३. इति क्षीरस्वाम्युत्प्रेक्षितधातुवृत्तौ क्षीरतरङ्गिण्यां स्वादिर्गणः समाप्तः ।

# ॥ अथ तुदादिगणः ॥

१. **तुद व्यथने** । इतः कृषान्ताः (६।६) षडनिट उभयपदिनश्च । **तुदादिभ्यः शः** (३।१।७७), **सार्वधातुकमपित्** (१।२।४) इति ङित्त्वम् — तुदति, तुदते । तोत्ता । प्रतोदः, तोदः । **आच्छीनद्योर्नुम्** (७।१।८०) वा—तुदती, तुदन्ती । **विध्वरुषोस्तुदः** (३।२।३५) खश्—विधुन्तुदः, अरुन्तुदः । **वातशुनीतिल** (३।२।२८ वा०) इति तिलन्तुदः । क्ते—तुन्नः (द्र० ८।२।४२) । **दाम्नीशस** (३।२।१८२) ष्ट्रन्—तोत्रम् । **पातृतुदि** (उ० २।७) इति थक्—तुत्थम् अञ्जनम्, धातुविशेषश्च ॥१॥

२. **णुद प्रेरणे** । प्रणुदति प्रणुदते[1] । नोत्ता । **नुदविदोन्दत्रा** (८।२।५६) इति वा निष्ठानत्वं—नुत्तः, नुन्नः । **ग्लानुदिभ्यां डौ** (उ० २।६४) —नौः ॥२॥

३. **दिश अतिसर्जने** । अतिसर्जनं त्यागः । दिशति, दिशते । क्तिन् (द्र० ३।३।९४)—दिष्टिर्वितस्तिः । **ऋत्विग्दधृग्** (३।२।५९) इति क्विन्—दिक् । **नाम्न्यादिशिग्रहोः** (३।४।५८) णमुल्—नामादेशमामन्त्रयते । दिष्टं दैवम् ॥३॥

४. **भ्रस्ज पाके** । **ग्रहिज्यावयि** (६।१।१६) इति सम्प्रसारणम्—भृज्जति, भृज्जते । **भ्रस्जो रोपधयोरमन्यतरस्याम्** (६।४।४७)—भ्रष्टा, भर्ष्टा, प्रसारणविषये नेष्यते, **भृष्टलुञ्चितलिङ्गात्**[2] —भृज्ज्यात् । बभ्रज्ज बभर्ज, **वृश्चतिपृच्छतिभृज्जतीनाम् अविशेषः**[3] । **सनीवन्तर्ध** (७।२।४९) इति वेट्—बिभर्जिषति बिभ्रज्जिषति, बिभर्क्षति बिभ्रक्षति । **व्रश्चभ्रस्ज** (८।२।३६) इति षः— भृष्टः, भृष्टिः ।

---

१. अत्र धातुवृत्तौ (पृष्ठ ३२३) स्वामिनाम्ना उद्धृतः पाठोऽनुसन्धेयः ।

२. काशिकायां (२।१।३१) राजदन्तादिगणे 'मृष्टलुञ्चितम्' पठ्यते । वर्धमानस्तु 'भृष्टलुञ्चितम्' इति पठित्वा लक्ष्यमपि निर्दिदेश (गणरत्नमहो० पृष्ठ ६५) ।

३. अत्र 'ग्रहिवृश्चतिपृच्छतिभृज्जतीनामविशेषः' इति भाष्यवचनम् (६।१।१७) अनुसंधेयम् । लिपिकेनेदमबुध्वा 'वृश्चतिपृच्छति भृज्जतीनाम्' इतोऽग्रे ६।१।१६ सूत्रसंख्या निर्दिष्टा ।

**पथिम्रदिभ्रस्जां संप्रसारणं सलोपश्च** (उ० १।२८) भृगुः न्यङ्क्वादिः ।[1] **भ्रस्जिभूसूयुधूङ्भ्यः कित्** (तु० उ० २।८०)—भृज्जनम् । ल्युटि (द्र० ३।३।११५) भ्रज्जनम्, भर्जनम् । **भ्रस्जिगमि** (उ० ४।१६०) इति ष्ट्रन्—भ्राष्ट्रम् ॥४॥

५. **क्षिप प्रेरणे** । क्षिपति, क्षिपते । **अभिप्रत्यतिभ्यः क्षिपः** (१।३।८०) परस्मैपदम्—अभिक्षिपति, प्रतिक्षिपति, अतिक्षिपति । **संपृच** (३।२।१४२) इति परिक्षेपी । **निन्दहिंस** (३।२।१४६) इति परिक्षेपकः । **त्रसिगृधिधृषिक्षिपेः क्नुः** (३।२।१४०) क्षिप्णुः । भिदादौ (गण० ३।३।१०४) क्षिपा । रक् (द्र० उ० २।१३)—क्षिप्रम् । **क्षिपेरनिः किच्च** (तु० उ० २।१०७)—क्षिपणिः, क्षिपणी वा । दिवादौ (४।१३) क्षिप्यति ॥५॥

६. **कृष विलेखने** । कृषति, कृषते । **अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्** (६।१।५९) अम्—कर्क्ष्यति क्रक्ष्यति । **स्पृशमृशकृषतृपदृपः सिज् वा** (३।१।४४ वा०)—अकृक्षत् अक्राक्षीत्, अकार्क्षीत् । भ्वादौ (१।७१७) कर्षति । तत्रैव ग्रहणान्युक्तानि । **कृश तनूकरणे** तु दिवादिः (४।१२०) तालव्यान्तः ॥६॥

७ **अनुदात्ताः स्वरितेतः** ।

८. **ऋषी गतौ**, ९. **उदात्त उदात्तेत्** । ऋषति । **उपसर्गाद् ऋति धातौ** (६।१।९१) वृद्धिरेकादेशः—उपार्षति । अर्षिता । **स्नुव्रश्चिकृत्यृषिभ्यः कित्** (उ० ३।६६)—ऋक्षः । इक्[2]—ऋषि. । क्तिन् (द्र० ३।३।९४)—ऋष्टिः । **ऋषिवृषिभ्यां कित्** (उ० ३।१२३) ऋषभः । **श्वीदितो निष्ठायाम्** (७।२।१४)—ऋष्टः ॥७॥

१०. **जुषी प्रीतिसेवनयोः** । इतश्चत्वारः सेट आत्मनेपदिनश्च । जुषते । जोषिता । जोषित्वा जुषित्वा (द्र० १।२।२६) । ईदित्वात् (द्र० ७।२।१४) जुष्टः । **एतिस्तुशास्वृ** (३।१।१०९) इति क्यप्—जुष्यः । सह जुषत इति सजूः ॥८॥

---

१. न्यङ्क्वादिगणे (७।३।५६) भृगुशब्दपाठात् कुत्वमित्यभिप्रायः ।

२ अत्र 'इक् कृष्यादिभ्यः' (३।३।१०८ वा०) इति वार्तिकेन 'इक्' प्रत्यय इति स्वाम्यभिप्राय. । लिबिशेन त्वैतद्वार्तिकमबुद्ध्वा 'इगुपधात् कित्' इति उणादिसूत्रनिदर्शनाय (उ० ४।११९) सख्या निर्दिष्टा । उणादौ न इक् प्रत्ययः साक्षान्निर्दिष्टः । तत्रत्वनुवर्त्यमानस्य इनः कित्त्वमात्र विधीयते ।

११. **ओविजी भयचलनयोः** । उद्विजते । **विज इड्** (१।२।२) इतीडादिः प्रत्ययः कित्—उद्विजिता । **करणे हलश्च** (३।३।१२१) इति घञ्—वेगः । विग्नः । ण्यन्ताद् उद्वेजितः ॥९॥

१२. **ओलजी ओलस्जी व्रीडे** । लजते । लजिता । लजित, लग्नस्तु **लग्नम्लिष्ट** (७।३।१८) इति सक्ते साधुः, लगितोऽन्यः । ईदित्त्वं तर्ह्यनर्थकम्, तस्माल्लगेः (१५५३) एतत् निपातनम् । अत एव **ओनजीति चन्द्रः**[1]—नग्न । लज्जते । लज्जिता । अनयोस्तुदादौ प्रयोजनाभावाद् भ्वादौ युक्तः पाठः[2] ॥१०,११॥

१३. **उदात्ता अनुदात्तेतः** ।

१४. **ओव्रश्चू छेदने** । इतः स्फुलान्ताः (५।९४) त्रिशतं सेटः परस्मैपदिनश्च । **ग्रहिज्यावयि**(६।१।१६)इति सम्प्रसारणम् वृश्चति । व्रष्टा व्रश्चिता (द्र० ७।२।३५) । मूलवृक् । वृक्ण, **षत्वे निष्ठादेश सिद्धो वक्तव्यः** (८।२।६ वा०) **जृव्रश्चयोः क्त्वि** (७।२।५५) इतीट् व्रश्चित्वा । **व्रश्चिकृषोः किकिन्** (तु०उ०२।४०)-वृश्चिक । **स्नुव्रश्चि** (उ० ३।६६) इति क्सः—वृक्षः ॥१२॥

१५. **व्यच संभवे** । विचति (द्र० ६।१।१६) । **व्यचे कुटादित्वमनसि** (१।२।१ वा०)—विचिता । नेह—उरुव्यचाः ॥१३॥

१६. **व्यज व्याजीकरणे** । व्यजति । '**व्याजीकरणे**' लिङ्गाद् घञि कुत्वाभावः -व्याजः ॥१४॥

१७. **उछि उञ्छे** । उञ्छ उच्चयः । उञ्छति । उञ्छिता ॥१५॥

१८. **उछी विवासे** । विवासोऽतिक्रमः । उच्छति । व्युष्टा रात्रिः ॥१६॥

---

१. मुद्रिते चान्द्रधातुपाठे तु 'ओलजी' इत्येव पठ्यते (६।१००) । सायणोऽपि धातुवृत्तौ चान्द्रमते तवर्गान्त्वमादि (ओनजी) मन्यते (धातु ३२६) । क्षीरस्वामी नग्ननग्निकाशब्दव्याख्याने 'ओणजी' इति पठति (द्र० अमरटीका ३।१।३९॥२।६।९) ,

२. चिन्त्योऽयं पाठः । भ्वादौ पाठे शप पित्त्वादनुदात्तत्वे तास्यनुदात्तेन्ङिद् (६।१।१८६) इति लसार्वधातुकानुदात्तत्वे धातुस्वरः स्यात् । इह पाठे तु विकरणस्वरेण मध्योदात्तत्वं भवति । अत्र धातुवृत्ति (पृष्ठ ३२६) अनुसन्धेया ।

**१९. ऋछ इन्द्रियप्रलयमूर्तिभावयोः ।** इन्द्रियाणां प्रलये=मोहे, मूर्तिभावे च । ऋच्छति, **समो गम्यृछि** (१।३।२९) इति तङ् [न] समृच्छते । **इजादेर्गुरुमतोऽनृछः** (तु० ३।१।३६) इत्याम्—आनर्छ ॥१७

**२०. मिछ उत्क्लेशे ।** उत्क्लेशो बाधनम् । मिच्छति । **पिछ इति द्रमिडाः**—पिच्छाः आचामः ॥१८॥

**२१. जर्ज झर्झ चर्छ परिभाषणे ।** जर्जति । जर्जरः, झर्झरः । **चर्च** इति च **दुर्गः**[1] ॥१९-२१॥

**२२. त्वच संवरणे ।** संवरणम् आच्छादनम् । त्वचति । क्विपि (द्र० ३।२।१८७) त्वक् । अचि (द्र० ३।१।१३४) त्वचः ॥२२॥

**२३. ऋच स्तुतौ ।** ऋचति । क्विप् (द्र० ३।२।१७८)—ऋक् । आनर्च, आनृचुः । **अर्चिशुचि** (उ० २।१०८) इतीसिः—अर्चिः ॥२३।

**२४. उब्ज आर्जवे ।** आर्जवं स्पष्टता[2] । उब्जति । उब्जिजिषति, **नन्द्राः संयोगादयः** (६।१।३) इत्यत्र वक्तव्याद्[3] बो न द्विरुच्यते । समुद्गादिसिद्धत्वाद् बोपधोऽयम्[4], उपध्मानीयोपधत्वे जश्त्वस्यासिद्धत्वं स्यात् । **भुजन्युब्जौ पाण्युपतापयोः** (७।३।६१) । **उब्जेर्बले बलोपश्च** (उ० ४।१९२) इत्यसुन्—ओजस् ॥२४॥

**२५. उद्झ[5] उत्सर्गे ।** उज्झति । दोपधोऽयम्, लाक्षणिकं चुत्वम् ।

---

१: 'जर्च जर्छ जर्भ झर्ज परिभाषणे—जर्चति, जर्भति जर्छति, जर्झति । जर्जरः । झर्झति । झर्झर । चर्चेति दुर्गः' । इति पाठा० ।

२. 'स्पष्टता' क्वचिन्नास्ति ।

३. 'बकारस्याप्यय प्रतिषेधो वक्तव्य.' इति काशिकास्थवार्तिकादित्यर्थः ।

४. अय भाव.—अभ्युद्गः समुद्गः इत्यादिसिद्धये केचिद् दोपध मन्यन्ते । तत्र अभ्युद्ग. समुद्ग इत्यादयस्तु द्व्युपसर्गाद् गमेर्डप्रत्यये सपत्स्यन्ते । तत. बकारोपधोऽय धातुरित्यर्थः । उब्जेर्बले बलोपश्च इति उणादिसूत्रम् (४।१९२) अपि बोपधत्वे प्रमाणम् । अपरे उपध्मानीयोपध स्वीकुर्वन्ति, तन्मते दोषमाह—उपध्मानीयोपधत्वे इति । अत्र हयवरट्-सूत्रस्थ, 'शर्षु जश्भावषत्वे' इति वार्तिकं तद्भाष्य चावलोकनीयम् ।

५. यथा तूत्तरवचनम्—'दोपधोयं, लाक्षणिक चुत्वम्' तथा तु धातुसूत्रे 'उज्झ' इत्येव मूलपाठ इति प्रतीयते ।

उज्जिझिषति । ण्यति[1]—**भिद्योद्ध्यौ नदे** (३।१।११५) । क्विपि(द्र० ३।२।१७८) उत् ॥२५॥

२६. **लुभ विमोहने** । विमोहनं व्याकुलीकरणम् । लुभति । **तीषुसह** (तु० ७।२।४८) इति लोब्धा लोभिता । **लुभो विमोहने** (७।२।५४) इट्—विलुभिता केशाः । दिवादौ **लुभ गार्द्ध्ये** (४।१२६)—लुभ्यति, लुब्ध. ॥२६॥

२७. **ऋह कत्थनयुद्धहिंसादानेषु** । ऋहति । अर्हयति । **रिह** इति **द्रमिडाः**[2]—रिहति, रेहयति ॥२७॥

२८. **ऋफ ऋन्फ हिंसायाम्** । ऋफति, ऋम्फति, **शे ऋन्फादीनामुपसंख्यानाद्** (द्र० ७।१।५९ वा०) **अनिदिताम्** (६।४।२४) इति नलोपे कृते नुम्, **तृन्फादीनाम्** (द्र० ७।१।५९) **इत्येके**[3] ॥२८,२९॥

२९. **तृफ तृन्फ तृप्तौ** । तृफति तर्फित्वा । तृम्फति, **नोपधात् थफान्ताद् वा** (१।२।२३) इति वा कित्त्वम्—तृफित्वा तृम्फित्वा । **तृप तृन्प इत्येके**[4] ॥३०,३१॥

३०. **तुप तुन्प तुफ तुन्फ हिंसायाम्** । तुपति, तुम्पति, तुफति तुम्फति । भ्वादौ **तुन्प तुन्फ** पाठो (द्र० १।२८८) व्यर्थः[5] । **प्रात् तुम्पतौ गवि कर्तरि** (६।१।१५८) सुट्—प्रस्तुम्पति गौः ॥३२-३५॥

३१. **दृफ दृन्फ उत्क्लशे** ।[6] [दृपति दृम्फति[ ॥३६,३६॥

३२. **गुफ गुन्फ ग्रन्थे** । गुफति, गोफित्वा गुफित्वा । गुम्फति ।

---

१. 'क्यपि' इति शुद्ध पाठो द्रष्टव्य ।

२. उद्धृत धातुवृत्तौ (पृष्ठ ३२९) ।

३. अयं काशिकाया पाठ । भाष्यपुस्तकेपु क्वचिन् 'तृम्पादीना' क्वचिच्च 'तृम्फादीना' इत्युभयथा दृश्यते । ऋम्फादीनामिति स्वाम्युक्तः पाठस्तु न क्वचिदुपलभ्यते ।

४. प्रक्रियाकौमुद्या (भाग २ पृष्ठ २६५) तु 'तथा चाह क्षीरतरङ्गिणीकार'—तृम्प तुम्प चेत्येके' इति पठ्यते ।

५. नाय व्यर्थ, भ्वादित्वाच्छपि तास्यनुदात्तेन् (६।१।१८६) इति लसार्वधातुकानुदात्तत्वे धातुस्वरो भवति, इह पाठात्तु विकरणस्वर. (द्र० क्षीरत० ६।१२; पृष्ठ २४५, टि० २) ।

६. क्वचित् सूत्र नास्ति ।

**नोपधात् थफान्ताद् वा** (१।२।२३)—गुफित्वा गुम्फित्वा। घञ् (द्र० ३।३।१८,१९)—गुन्फो बन्धः ॥३८,३९॥

३३. **उभ उन्भ पूरणे**। उभति। उभौ[1] (द्र० ३।१।१३५)। उम्भति। उम्भिता। उम्भित्वा ॥४०,४१॥

३४. **शुभ शुन्भ शोभार्थे**। अत एव निपातनाच् शोभा साधुः[2]। शुभति। शुशोभ। शुभम्। अशोभीत्। भ्वादौ (१।४६८) शोभते, शुशुभे, अशुभत्। रक् (द्र० उ० २।१३) शुभ्रम्। शुम्भति, शुशुम्भ, तृन्फादि (द्र० १।१।५९ वा०)। भ्वादौ **शुन्भ भाषणे हिंसायां च** (१।२९२) इत्यर्थभेदात् पाठः[3]। तत्र षोपदेशः, सुम्भति सुम्भनाद्यर्थं **इत्येके**[4] ॥४२, ४३॥

३५. **दृभी ग्रन्थे**। दृभति। दृब्धः। **अन्दूदृन्भू** (उ० १।९३) इति दृन्भूः सर्पः ॥४४॥

३६. **चृती हिंसाग्रन्थनयोः**। चृतति, चृत्तः। **सेऽसिचि कृत** (७।२।५७) इति वेट्—चर्तिष्यति चर्त्स्यति। ईदित्त्वं **यस्य विभाषा** (७।२।१५) इति निष्ठायाम् इट्प्रतिषेधानित्यत्वार्थम्—पतित[5], यङ्लुगर्थं वा—चरीचृतः[6]। क्विप् (द्र० ३।२।१७८)—चृत्। चर्त्यम् (द्र० ३।१।११०) ॥४५॥

३७. **विध विधाने**[7]। विधति। **असुन्** (द०उ०९।४९) वेधाः ।४६।

---

१. इगुपधज्ञाप्रीकिरः कः (३।१।१३५) इति कः। नित्यद्विवचनोऽयम्। द्र० महा० १।१।२७।

२. 'शोभेति निपातनात्' (काव्या० ५।२।४१) इति वामनः।

३. न केवलमर्थभेदः, अपि तु स्वरभेदोऽपि भवति शपि। पूर्वा (६।१२। पृष्ठ ३४६) टिप्पणी २ द्रष्टव्या।

४. पूर्वत्र क्षीरतरङ्गिण्या मतमिद गुप्तनाम्नोद्धृतम् (१।२९२, पृष्ठ ६८, पं० १६)

५. द्वितीया श्रितातीतपतित (२।१।२४) इति तिपातनादिड् इति काशिका (७।२।१५)। मैत्रेयस्तु धावुधातः 'धावितः' इत्युदाहृतवान् (धातुप्रदीय पृ० १०८)

६. स्मृत धातुवृत्तौ (पृष्ठ ३३०)। ७. 'विध वेधने' इत्येवाकरस्थः पाठः। पाठान्तर तु प्रामादिकमन्धपरम्परायातमिति मल्लिनाथः नैषध टीका ३।१२७।

**३८. जुन गतौ**[1] । जुनति । **जुड** इति **दुर्गः** ॥४७॥

**३९. मृड सुखने** । मृडति । मृडः । **मृडमृद** (१।२।७) इति क्त्वा कित्—मृडित्वा ॥४८॥

४०. **पृड च** । पृडति । पर्डित्वा ॥४९॥

४१. **पृण प्रीणने** । पृणति । के (द्र० ३।१।१३५) पृणः । **लोकस्य पृणे**(६।३।७०वा०), लोकं पृणतीति मुम्—लोकम्पृणः॥५०।

४२. **मृण हिंसायाम्** । मृणति, मृणालम्(द्र० उ० १।११८) ।५१

४३. **तुण कौटिल्ये** । तुणति । तुन्दम्[2] ॥५२॥

४४. **पुण कर्मणि शब्दे च**[3] । पुणति पुण्यम् । के (द्र० ३।१।१३५) निपुण. ॥५३॥

४५. **मुण प्रतिज्ञाने** । मुणति ॥५४॥

४६. **कुण शब्दोपकरणयोः** । कुणति । **इगुपधात् कित्** (उ० ४।११०)—कुणिः कुपाणिः । **क्वादिभ्यः कित्** (उ० १।११५)—कुण्डम् । उणादौ कुणिन्दः (द्र० उ० ४।८४), कुणालम्[4], कुणप[5] । कोणः ॥५५॥

४७. **शुन गतौ** । शुनति । शुनकः । श्वा—क्वुन्(द्र० उ० २।३२) शुनश्च सीरं च—शुनासीरः॥५६॥

---

१: स्मृतं धातुवृत्तौ पृष्ठ ३३०) ।

२. अब्दादयश्च (उ० ४।९८)इति निपातनात् ददनौ प्रत्ययौ । उज्ज्वलदत्तस्त्वेतत्सूत्रवृत्तौ 'तुन्देर्नुम् च, तुन्द.' इत्याह । तच्चिन्त्यम् । नहि 'तुन्दिः' धातुः क्वचित् पठ्यते । यद्वाऽत्र 'तुदेः' इति पाठः स्यात् । तथाप्ययुक्तता तदवस्थैव । तुदेर्नुमि दे दनि वा प्रत्यये 'तुन्द्द' इति लक्ष्यविरुद्धं प्राप्नोति । झरो झरि सवर्णे (८।४।६५) इति लोपेऽपि पक्षे दकारद्वयं प्राप्नोत्येव, न चेष्यते ।

३. सार्वत्रिकः पाठः ।

४. इतोऽग्रे लिबिशेन पञ्चपाद्युणादे ३।७६ सूत्रसङ्ख्या निर्दिष्टा । तस्मिश्च सूत्रे क्वण-धातोः सम्प्रसारणं कालश्च प्रत्ययो विधीयते, न कुण-धातोः । सरस्वतीकण्ठाभरणे (२।३।१०१)कुणेरेव कालन् विधीयते ।

५. अत्रापि लिबिशेन उणादेः ३।१४३ सूत्रसंख्या निर्दिष्टा । अस्मिन्नपि

४८. **द्रुण हिंसागतिकौटिल्येषु** । द्रुणति । के (द्र० ३।१।१३५) द्रुणः । घञ् (द्र०३।३।१८) —द्रोणः, द्रोणी ॥५७॥

४९. **घुण[1] घूर्ण भ्रमणे** । घुणति, घुणो दारुक्रिमिः । घोणा । घूर्णतिः । घूर्णती घूर्णन्ती (द्र० ७।१।८०) । भ्वादौ (१।२९५) घोणते, घूर्णते ॥५८,५९॥

५०. **सुर ऐश्वर्यदीप्त्योः** । सुरति । सुरः । षोपदेशोऽयमिति **दुर्गः** —सुषोर ॥६०॥

५१. **कुर शब्दे** । कुरति । कोरकम् । कुरः करन्[1]—कुररः । कुर्यात् (द्र० ७।२।७९) । कुरुः ॥६१॥

५२. **क्षुर खुर विलेखने** । विलेखनं छेदः । क्षुरति । क्षुरः । खुरति । खुरः ॥६२,६३॥

५३. **मुर संवेष्टने** । मुरति । मुरः, मुरा ओषधिविशेषः । मुर्मुरः ॥६४॥

५४. **घुर भीमार्थशब्दयोः** । घुरति । घञ् (द्र० ३।३।१९)— घोरः । घुर्घुरः ॥६५॥

५५. **पुर अग्रगमने** । पुरति । पुरम् । क्विप् (द्र० ३।२।१७८) —पूः । पुरुषः । पुरु बहु ॥६६॥

५६. **बृहु[2] उद्यमे** । उद्यम उद्धरणम् । बृहति । बर्हिता । बर्ढा । उद्बर्हः । बर्हणम् । बर्हः । **प्रभौ परिवृढः**[3] (७।२।२१) । भ्वादौ **बृह वृद्धौ** (१।४८५) बर्हति ॥६७॥

---

सूत्रे क्वणेरेव संप्रसारणं कपश्च प्रत्ययो विधीयते, न कुणे. । सरस्वतीकण्ठाभरणे (२।२।११२) तु कुणेरेव कुणपो निपात्यते ।

१. द्र० सर० कण्ठा० २।३।३९॥ हैमोणादि ३९९ ।

२. अन्ये तु वकारादि पठन्ति । धातुवृत्ति पृष्ठ ३३१ ।

३. अत्र भ्वादौ (४८५, पृष्ठ १०४) चोभयत्र पवर्गादि पठित्वा 'प्रभौ परिवृढः' सूत्रेण दन्त्योष्ठ्यवान् 'परिवृढ' शब्दो व्युत्पाद्यते । तत्कथमिति न जानीमः । किमस्मिन् सूत्रेऽपि पवर्गीय एव पाठः स्वामिसम्मत. ?

५७. **तृहू तृन्हू स्तृहू स्तृन्हू हिंसायाम्**[1] । तृहति । तर्हिता, तर्ढा । तर्हणम् । रुधादौ **तृहि हिसि हिंसायाम्** (७।२४) तृणेढि, तृण्ढः, तृंहन्ति । तृंहति । तृंहिता, तृण्ढा । स्तृहति, स्तृंहति । षोपदेशाविति **दुर्गः** ॥६८-७१॥

५८. **इषु इच्छायाम्** । [2]**इषुगमियमां छः** (७।३।७७) –इच्छति । **तीषुसह** (तु० ७।२।४८)इति वेट्–एष्टा एषिता । इष्यत इतीट्, **इषे त्वोर्जे त्वा** (माध्य० सं० १।१) । **विन्दुरिच्छुः** (३।२।१६९) । इष आश्वयुजः, इड् अन्नम् अस्यास्त्यत्र वा, **अर्शआद्यच्** (५।२।१२७) । **इश्यशिभ्यां तकन्** (उ० ३।१४८)– इष्टका । **क्सुश्चेषेः** (द० उ० १।१५४)–इक्षुः । **इच्छा** (३।३।१०१) साधुः । **श्रुयजीषिस्तुभ्यः करणे** (तु० ३।३।९५ वा०)—इष्टिः । इष्टः । दिवादौ **इष गतौ** (४।१७)–अन्विष्यति, इषुः । क्र्यादौ **इष आभीक्ष्ण्ये** (९।५७) इष्णाति ॥७२॥

५९. **मिष स्पर्धायाम्** । मिषति । मेषिता मेषोऽचि (द्र० ३।१।१३४), के (द्र० ३।१।१३५) आमिषम् । घञ् (द्र० ३।१।१८, १९) —निमेषः ॥७३॥

६० **किल श्वैत्यक्रीडनयोः** । किलति । केलिः । के (द्र० ३।१।१३५) किलकिला रवः, अव्यक्तानुकरणं वा । किलासं[3] सिध्मम् ॥७४॥

६१. **तिल स्नेहने** । तिलति । के (द्र० ३।१।१३५) तिलः । चुरादौ (१०।६१) तेलयति ॥७५॥

६२. **चिल वसने** । चिलति । पचादौ (गण० ३।१।१२४) चेलः चेलम्, **चेलट्**[4] (गण० ३।१।१३४), गर्हिता ब्राह्मणी –ब्राह्मणिचेली,

१. 'क्षीरस्वामी तु– तृहू तृन्हू ष्टृहू ष्टृन्हू हिसार्थाः' इत्येवं पुरुषकारे (पृष्ठ १२१) उद्ध्रियते । तत्र षोपदेशपाठश्चिन्त्यः ।

२. 'इष' इत्येवार्षपाठः । द्र० पुरुषकार, पृष्ठ १०० ।

३. द्र० सरस्वतीकण्ठाभरण २।३।१७७; हैमोणादि ५७५ ।

४. स्त्रीत्वनिदर्शनाय पचादौ पठितं टित्पाठं निर्दिशति । इह लिबिशेन ६।३।४३ सूत्रसख्या निर्दिष्टा, सा चिन्त्या । एषा सूत्रसंख्या तु 'घरूपकल्प' इत्युत्तरं निर्देष्टव्या सतीह निर्दिष्टा ।

**घरूपकल्प** (६।३।४३) इति ह्रस्वः, **चेलखेटकटुककाण्डं गर्हायाम्** (६।२।१२६) इत्युत्तरपदाद्युदात्तत्वम्[1] ।।७६।।

६३. **चल विलसने** । चलति । चलती, चलन्ती । **चल कम्पने** ज्वलादिः (१।५६६)—चलः, चालः । **शप्श्यनोर्नित्यम्** (७।१।८१) नुम्—चलन्ती । **कम्पने चलिः** (१।५४६) मित्—चलयति लताम् । चुरादौ **चल भृतौ** (१०।६२)—चालयति ।।७७।।

६४. **विल संवरणे** । दन्त्योष्ठ्यादिः । विलति । आविलम्[2] वेला ।।७८।।

६५. **इल स्वप्नक्षेपणयोः**[3] । इलति इला भूः । एला । एलयति ।।७९।।

६६. **बिल भेदने** । बिलति । बिलातः । आबिलम् । बिल्मम्[2] । बिल्वम् ।।८०।।

६७. **णिल गहने** । प्रणिलति ।।८१।।

६८. **हिल हावकरणे**[4] । हिलति । हेला[5] । **मिल श्लेषण** इति **दुर्गः**—मिलति[3], मेलः ।।८२।।

६९. **शिल षिल उञ्छे**[7] । शिलति । शिलम्[7] । शिला । सिलम् । सेलु श्लेष्मातकः ।।८३,८४।।

---

१. 'उत्तरपदान्तोदात्तत्वम्' पाठान्तरं, तच्चिन्त्य, सूत्रार्थविरोधात् ।

२. 'आवेलम्' हस्तलेखपाठः । ३. 'स्वप्नप्रक्षेपणयोः' पाठा० ।

४. 'भावक्षरणे' पाठा० । ५. भिदादावस्य पाठः कल्प्यः ।

६. पूर्वत्र 'मील' धातुव्याख्याने (१।३४५) 'लौकिकान्मिले मिलति, मेलनम्' इत्युक्त स्वामिना । तदिहान्वेष्यम् । दीपजन (७।४।३) सूत्रे मील-धातु पठता पाणिनिना मिल-धातुर्न स्वीक्रियत इति ज्ञाप्यते । अन्यथा मीलतेरमिमीलत् मिलतेरमीमिलत् इति रूपद्वय स्यादेव, किमुपधाह्रस्वविकल्पेन । दुर्गोपजीव्ये काशकृत्स्न-धातुपाठेऽपि 'मिल श्लेषणे' (पृष्ठ १६७) पठ्यते ।

७. उञ्छशिलवृत्त्योर्भेदः 'ऋतमुञ्छशिल ज्ञेयम्' इति मनुश्लोकस्य (४।५) व्याख्यायामित्थं प्रदर्श्यते—अङ्गुष्ठाङ्गुलिभ्यामेकैकस्य कणस्य सग्रह उञ्छः, मञ्जर्यात्मकानेकधान्योच्चयनशिलः । अत्र तु उञ्छशब्देन 'उच्चयः' इत्यभिप्रेतः (द्र० ६।१७) । सचोभयोर्वृत्त्योः समानः ।

७०. **लिख[1] अक्षरविन्यासे** । लिखति । आलेख्यम् । पचादौ (गण० ३।१।१३४) लेखः । घञ्—लेखः, विलेखः । भिदादौ (गण० ३।३।१०४) लेखा ॥८५॥

७१. **कुट कौटिल्ये** । कुटति । **गाङ्कुटादिभ्योऽञ्णिन्ङित्** (१।२।१)—कुटिता । उत्कुटः । कुटो घटः । कोटरः । कुटरः । कोटि. । कुटीरम् । **उषिकुटि** (उ० ३।१४२) इति कपन्—कुटपोऽन्नमानम् । **इगुपधात् किः** (तु० उ० ४।१२०) कुटिः । **कुटिकुषिभ्यां क्मलन्** (उ० ४।१८७)—कुट्मलम् । कुटिलः । कथं कुटित्वा ? **न क्त्वा सेट्** (१।२।१८) इति हि कित्त्वं बाधितम्, न ङित्त्वम् ॥८६॥

७२. **पुट संश्लेषणे** । पुटति । पुटः, पुटी । घञ्—पोटा नपुंसकम् । पोटकः । चुरादौ **पुट संचूर्णने** (१०।६७), तथा भासार्थः (१०।१६७)—पोटयति । **लुट विलोडन[2]** इति **दुर्गः**—लुटति । लुटिता । लुटित्वा । **लुठ संश्लेषण इत्येके[3]** ॥८७ ।

७३. **कुच संकोचने** । संकुचति, अर्थे संग्रहणात् तदुपसर्गत्वम्[3] । संकुचिता । कुचित्वा । कुचौ । भ्वादौ संपर्चनादौ (१।६००) संकोचति ॥८८॥

७४. **गुज शब्दे** । गुजति, गुजिता । भ्वादौ (१।१२३ एकीयमते) गोजति, गोजिता ॥८९॥

७५. **गुड रक्षायाम्** । गुडति । गुडा हस्तिसंनाहः । गुडः स्वादुद्रव्यम् । भूगोलः[4], गोलकं[5] युग्मम्, गुलिका[5] मौक्तिकविशेषः ॥९०॥

---

१. लिख धातुं कुटादिष्वेके मन्यन्ते । तदाह हेमहंसगणिः—'लिखत् अक्षरविन्यासे कुटादिरयम् । तेन तृजादिषु ङित्त्वाद् गुणाभावे लिखिता लिखित लिखनीयम् । अकुटादेस्तु लेखिता लेखितुम् लेखनीय स्यात् । न्यायसंग्रह, पृष्ठ १३७। केचन पाणिनीयास्तु 'गाङ्कुटादि' सूत्रे (१।२।१) कुटस्य आदिः कुटादिः, कुट आदिर्येषां ते कुटादयः इत्युभयथा विगृहीत्वा लिखिता लिखितुम् लिखनीयम् इत्यादीनां साधुत्वं ब्रुवन्ति ।

२. 'लोटने' पाठा० । कातन्त्रधातुपाठे 'पुट लुट संश्लेपणे' इति पाठः, काशकृत्स्ने 'षुट लुठ सश्लेषणे' (पृष्ठ १६७) ।

३. एतत्पृष्ठस्था द्वितीया टिप्पणी द्रष्टव्या ।

४. द्रष्टव्यं (६।१०४) धातुसूत्रव्याख्यानम् ।

५. डलयोरेकत्वस्मरणात् । अत्र ५३ पृष्ठस्था टि० १ द्रष्टव्या ।

७६. **डिप क्षेपे**[1]। डिपति, डिपिता। दिवादौ (४।१२४) डिप्यति, डेपिता। चुरादौ (१०।१२१) डेपयति ॥९१॥

७७. **छुर छेदने**। छुरति। आच्छुरितम्। छुर्यात्, र्वोः **न भकुर्छुराम्** (तु० ८।२।७९) इति दीर्घो नास्ति–छुरिका ॥९२॥

७८. **स्फुट विकसने**। स्फुटति, स्फुटिता। अस्फुटीत्। स्फुटः। भ्वादौ **स्फुटिर् विशरणे** (१।२२६)—स्फोटति, स्फोटिता, अस्फुटत्, अस्फोटीत्। स्फोटः ॥९३॥

७९. **मुट आक्षेपप्रमर्दनयोः**। मुटति। मुटिता। भ्वादौ (१।२२१) दुर्गमते) मोटति, विमोटितकराङ्गुलिः। चुरादौ (१०।६६ दुर्गमते) मोटयति ॥९४॥

८०. **त्रुट छेदने**। **वा भ्राशभ्लाश** (३।१।७०) इति श्यन् वा—त्रुट्यति त्रुटति। त्रुटिता। त्रोटयति ॥९५॥

८१. **तुट कलहकर्मणि**। तुटति, तुटिता। इक्[2] (द्र० ३।३।१०८ वा०)—तुटिः। तोटकम् ॥९६॥

८२. **चुट छुट छेदने**। चुटति। उच्चोटनम्। छुटति। छोटिका ॥ ९७,९८॥

८३. **जुड बन्धे**। जुडति। जुडिता। **जुड गतौ** (६।३८ दुर्गमते) —जुडति, जोडिता ॥९९॥

८४. **कड घसने**।[3] घसनं भक्षणम्। कडति। कडयते। कलमः[4]। कडङ्गरो बुसम्। कलिः। कलहः। कडत्रम्, कलत्रम् भार्या नितम्बश्च। कडित्रं द्यूतं लेखनचर्म च। **कुटादौ फलाभावात् यूथभ्रष्टोऽयम्**[5] ॥१००॥

---

१. 'प्रक्षेपे' पाठा०।

२. 'इक् कृष्यादिभ्य.' इति वार्त्तिकेन इति भाव.। लिबिशेन वार्त्तिकमबुध्वा 'इगुपधात् कित्' इत्युणादिसूत्रस्य ४।११९ सख्या निर्दिष्टा।

३. काशकृत्स्ने धातुपाठे तु 'कड मदे, कुड घसने' इति पठ्यते (५।९६, ९७; पृष्ठ १६८,१६९)।

४. उणादौ (४।८४) कलधातो. कलमो व्युत्पाद्यते। हैमोणादौ तु कडेरेव (द्र० ३४७)। अत्र उत्तरेषु च केषुचित् शब्देषु डलयोरभेदात लत्वं बोध्यम।

५. तुदादौ पाटस्तु स्वरार्थ. सम्भवति, परन्तु कुटादावस्य पाटश्चिन्त्य

८५. **कुड बाल्ये** । कुडति कुडः । कुडङ्गः ॥१०१॥

८६. **कुड घनत्वे** । घनत्वं सान्द्रता । कुडति ॥१०२॥

८७. **गुड प्रतिघाते**[1] । गुडति । अयोगुडः । **घुट** इति **दुर्गः**—घुटिका गुल्फास्थि[2] ॥१०३॥

८८. तुड **तोडने** । तोडनं भेदः पृथक्करणं वा । तुडति । तोडः, तोडनम्, तुडिः ॥१०४॥

८९. **स्थुड थुड संवरणे** । स्थुडति । स्थुलः पटकुटिः । थुडति ॥ १०५,१०६॥

९०. **दुड हुड निमज्जने** । दुडति । दोडः, दोला । हुडति । होडिः, हुडः, हुडु । **क्रुड इत्येके**[3] ॥१०७,१०८॥

९१. **वुड भ्रुड संवरणे** । व्रुडति, भ्रुडति ॥१०९,११०॥

९२ **स्फर स्फुर स्फल स्फुल चलने** । स्फरति । स्फरः । स्फारः । **स्फायि** (उ० २।१३) इति स्फाये रक् । स्फुरति । स्फुरः स्फोटकः । स्फलति । आस्फालः, आस्फालना । **स्फुरतिस्फुलत्योर्निर्निविभ्यः** (८।३।७६) षत्वं वा—निःस्फुरति, निःष्फुरति । **चिस्फुरोर्णौ** (६।१।५४) वात्त्वम्—विस्फारयति, विस्फोरयति । स्फुरितम् । **स्फुरिस्फुल्योर्घञि** (तु० ६।१।४७) वात्त्वम्—स्फारः स्फोरः, स्फालः स्फोलः । **इत्थं चोभौ प्रमादादाम्नातौ**[4] ॥१११ – ११४॥

---

प्रयोजन एव । काशकृत्स्ने धातुपाठे 'कुड बाल्ये' इति पठ्यते (५।९८; पृष्ठ १६९) काशकृत्स्नो भ्वादावपि (१।२१३; पृष्ठ २७) । इम पठति । तदनुयायी कातन्त्रकारस्तु केवल भ्वादावेव पठति, न तुदादौ । स्वाम्यपि 'कडि मदे' (१।२५१) सूत्रव्याख्याने 'कड इति दुर्गः' इत्येवं स्मरति ।

१. अन्यत्र क्षीरतरङ्गिण्या 'प्रायेण प्रतीघाते' इति पठ्यते ।

२. इतोऽग्रे 'मन्त्रसिद्धौ प्रतिबन्धः' इत्यधिकः पाठः क्वचित् ।

३. काशकृत्स्ने धातुपाठे 'क्रुड घसने' इति पठ्यते (द्र० पृष्ठ २५५, टि० ३)

४. वस्तुतो नोभौ प्रमादाम्नातौ । अपि तु स्फारस्फोरयोः स्फालस्फोलयोश्च स्वतन्त्रे पृथक् प्रकृती इति बोधनायैव कंचित् प्राचीनमतमाश्रित्योभयथा

९३. **स्फुल संचये च** । स्फुलति स्फुलिङ्गः ।।

९४. **उदात्ता उदात्तेतः** ।

९५. **गुरी उद्यमे** । ९६. **उदात्तोऽनुदात्तेत्** । गुरते, गुरिता, गूर्णः । **अपगुरो णमुलि** (६।१।५३)वात्त्वम् –अपगारम् अपगारम्, अपगोरम्, अपगोरम् । चुरादौ (१०।१४२) आगूरयते गूरेः ।।११५।।

९७. **णू स्तवे** । इतश्चत्वारः सेटः । प्रणुवति । नुविता । नूतः **श्र्युकः किति**(७।२।११)इतीण् नास्ति, **अन्ये** नुवित **इत्याहुः**, ङित्त्वेन कित्त्वस्य निवर्तनाद् । एव धूत–धुवितादयः ।।११६।।

९८. **धू विधूनने** । धुवति । स्वादौ(५।१०) धूनोति धुनोति[1] । क्र्यादौ (९।१६) धुनाति ।।११७।।

९९. **गू पुरीषोत्सर्गे** । गुवति, गुविता । **तिथपृष्ठगूथ** (उ० २।१२) इति गूथम् । भ्वादौ (१।६७९) गवति[2] ।।११८।।

१००. **ध्रु[3] गतिस्थैर्ययोः** । ध्रुवति । अचि (द्र० ३।१।१३४) ध्रुवः । ध्रुविता । ध्रुतः ध्रुवितः । भ्वादौ (१।६७४) स्थैर्ये—ध्रुवति ।।११९।।

१०१. **उदात्ताः** ।

१०२. **कुङ् शब्दे** । इतः सप्तानिटः । कुवते । कुता । **कूङ् इत्येके**[4] – आकुविता, आकूतम् ।।१२०।।

१०३. **वृत्** । कुटादयो वर्तिताः ।

---

पठितौ । सूत्रपाठे तु आत्त्वं विकल्प्यैकस्मादेव धातो रूपद्वय निष्पादितम् । रलयोरभेदत्वमाश्रित्य स्फुरस्फुलयोरप्येकतरेणैव कार्य सिद्धयति । जैनशाकटायनश्च 'स्फल चपले स्फुल संचये च' (धातुसूत्र ९६७, ९६८) रलयोरभेद मत्वाऽदुपधमुकारोपधं चोभयथा पठति ।

१: स्वादौ पक्षान्तरे 'धुञ्' इत्यपि पठति स्वामी ।

२. भ्वादौ ङित्त्वाद् 'गवते' इति युक्तम् । क्वचिन्नास्ति ।

३. अत्राह धातुवृत्तिकारः—'स्वाम्यादयः ध्रुव इति वकारान्तं धातु पठन्ति' इति (पृष्ठ ३३६) । न चात्र तथा पाठ उपलभ्यते ।

४. सस्मार धातुवृत्तिकारः (पृष्ठ ३३६) ।

१०४. **पृङ् व्यायामे** । व्यायाम उद्योगः । व्याप्रियते, वृत्तौ[1] विग्रहणात् । व्यापृतः । व्यापारः ॥११९॥

१०५. **मृङ् प्राणत्यागे** । म्रियते । **म्रियतेर्लुङ्लिङोश्च** (१।३।६१) इति तङ्—अमृत, मृषीष्ट । अत एव **वा ङित्त्वं पेठुः**[2] । ममार । मरिष्यति । मारः । मारकः । अभिमरस् तैक्ष्ण्ये[3] । मर्म । मर्मरः, पचादौ (द्र० ३।१।१३४) अमरः । **भुजिमृङ्भ्यां युक्त्युकौ च** (तु० उ० ३।२१)—मृत्युः । **भृमृशी** (उ० १।७) इत्युः—मरुः । **मृग्रोरुतिः** (उ० १।९४)—मरुत् । **मृकणिभ्यामीचिः** (उ० ४।७०)—मरीचिः । मरूको निर्दशनः करी[4] । **हसिमृगृ** (उ० ३।८६) इति तन् मर्तः, स्वार्थे यः (द्र० ५।४।३६वा०) मर्त्यः ॥१२०॥

१०६. **रि पि गतौ** । रियति, पियति । पिकः कोकिलः । ॥१२१, १२२॥

१०७. **धि धारणे** । धियति । धेता ॥१२३॥

१०८. **क्षि निवासगत्योः** । क्षियति । क्षेता । **क्षय्यजय्यौ शक्यार्थे** (६।१।८१)—क्षय्यः, क्षेयोऽन्यः । **निष्ठायामण्यदर्थे** (६।४।६०) दीर्घः, **क्षियो दीर्घात्** (८।२।४६) नत्वम्—क्षीणः । **वाक्रोशदैन्ययोः** (६।४।६१)—क्षीणायुर्जाल्मः; क्षितायुः, क्षीणस्तपस्वी, क्षितः । **अर्तिस्तुसु** (उ० १।१४०) इति मन्—क्षेमम् । **ष्ट्रन्** (उ० ४।१५८) क्षेत्रम् । क्षितिः । **एरच्**(३।३।५६) क्षयो गृहम् । भिदादौ (गण ३।३।१०४) क्षिया । स्वादौ (५।३३ एकीयमते) क्षिणोति । भ्वादौ (१।१४९) क्षयति ॥१२४॥

१०९. **अनुदात्ताः** ।

---

१. वृत्तौ धात्वर्थ इत्यर्थः । द्र० ६।७३ धातुसूत्रव्याख्यानम् (पृष्ठ २५४)।

२. के वाङित्त्वं पेठुरिति न ज्ञायते । एतेन येषां धातूनां प्रत्ययविशेषे परस्मैपदमात्मनेपदं वा विधीयते । तत्र द्वौ स्वतन्त्रौ धातू ऊहितव्यौ । अस्य ङित्त्वप्रयोजनायात्र माधवीया धातुवृत्तिर्द्रष्टव्या (पृष्ठ ३३७) ।

३. ये जनपदे शूरास्त्यक्तात्मानो हस्तिनं व्यालं वा द्रव्यहेतोः प्रतियोधयेयुस्ते तीक्ष्णाः । कौटल्य अर्थशास्त्र १।१२॥ अत्र ३।३।५३ क्षीरस्वामिनोऽमरटीका द्रष्टव्या । ४. तुलनीयम्—'मरूको मयूरो मृगो निदर्शनेभस्तृण त्र' इति हैमोणादिवृत्तिः(५८) ।

**११०. षू प्रेरणे** । सुवति । **उपसर्गात् सुनोतिसुवति** (८।३।६५) इति षत्वम् अभिषुवति । सविता । सोषूयते । सुसूषति, **स्तौतिण्योरेव षणि** (८।३।६१) इति नियमात् षत्वं नास्ति ।।१२७।।

**१११. कॄ विक्षेपे** । किरति । **किरतेर्हर्षजीविका** (१।३।२१ वा०) इति तङ्, **अपाच्चतुष्पाच्छकुनिष्वालेखने** (६।१।१४२) सुट्—अपस्किरते वृषभो हृष्टः, अपस्किरते कुक्कुटो भक्षार्थी, अपस्किरते श्वाश्रयार्थी । **किरतेर्लवने** (तु० ६।१।१४०) सुट्—उपस्कारं[1] मद्रका लुनन्ति । **हिंसायां प्रतेश्च** (६।१।१४१)—उपस्कारस्ते[2] जाल्म भूयात्, प्रतिस्कारः । मरणमस्त्विवति । **प्रतिचस्करे नखैः** (शिशुपालवध १।४७) । **किरश्च पञ्चभ्यः** (७।२।७५) सनीट्, **अस्येटो वृतो वा** (७।२।३८) **इति दीर्घो नेष्यते**[3] (द्र० ७।२।७५ काशिका)—विचिकरिषति, पक्षे विचिकीर्षति[4] । **इगुपध** (३।१।१३५) इति कः - किरः सूकरः, किरिश्च (द्र० उ० ४।१४३) । **विष्किरः शकुनिर्विकिरो वा** (६।१।१५०) । **कॄपॄवृजि** (उ० २।८१) इति क्युः—किरणः । **कॄशॄशलि** (उ० ३।१२२) इत्यभः करभः । **कॄवॄतॄदारिभ्य उनन्** (द० उ० ५।५२)—करुणः, करुणा कृपा । **कॄतॄभ्यामीषन्** (उ० ४।२६)—करीषः शुष्कगोमयम् । **कॄशॄपॄकटि** (उ० ४।३०) इतीरन्-करीरम् अङ्कुरः । **कॄगॄभ्यां किः** (तु० उ० ४।१४२)—किरिः । **कॄगॄकृपिभ्यः कीटन्** (तु० उ० ४।१८५) किरीटम् । **कॄवॄजॄसि** (तु० उ० ५।४२) इति नः—कर्णः श्रोत्रम् । **कॄग्रोरुच्च** (द्र० उ० १।१०९)—कुरुर्देशः । **कॄगॄशॄपॄवृञ्चतिभ्यः ष्वरच्** (द० उ० ८।४७ कपाठः)—कर्वरः । **कॄ धान्ये** (३।३।३०) इति घञ्—उत्कारो धान्यस्य, निकारः,

---

१. 'अपस्कारम्' पाठा० ।   २. 'अपस्कारस्ते' पाठा० ।

३. भागवृत्तौ त्वस्यापि दीर्घविकल्प उक्तः । द्र० अस्मदीये भागवृत्तिसंकलने ७।२।७५ सूत्रम्) । तेन दीर्घपक्षे 'विचिकरीषति' भविष्यति ।

४. किरश्च पञ्चभ्यः (७।२।७५) इति तु कॄ गॄ धात्वोः 'इट् सनि वा' (७।२।४१) इति विकल्पे प्राप्ते नित्यमिटं विधत्ते । तदाह वृत्तिकृत्—किरतिगिरत्योरिट् सनि वेति विकल्पः प्राप्तः (७।२।७५) इति । तेनात्र पक्षे इडभावप्रदर्शनं चिन्त्यम् । सम्भाव्यते दीर्घपक्ष निदर्शनाय 'विचिरीषति' इत्यस्य स्थाने लेखक-प्रमादादपपाठः संजातः स्यात् ।

अन्यत्रोत्करः, निकरः। **वर्चस्केऽवस्करः** (६।१।१४८), अवकरोऽन्यः ॥ १२८॥

११२. **गॄ निगरणे**। निगरणं गिलनम्। गिरति, गिलति—**अचि विभाषा** (८।२।२१) इति लः। **ग्रो यङि** (८।२।२०) इति निजेगिल्यते। गरिता[1]। जिगरिषति जिगीर्षति[2], **अवाद् ग्रः** (१।३।५१) तङ्—अवगिरते। अवजिगरिषते। **वॄतो वा** (७।२।३८) नास्ति[3]। **समः प्रतिज्ञाने** (१।३।५२) तङ्—संगिरते। **निगरणचलनार्थेभ्यश्च** (१।३।८७)—निगारयति। पचादौ (गण ३।१।१३४) गरः। अजगरः, श्वपचचक्रधरवद् अकाराद्[4] अनुपपदात्, कर्मोपपदे विप्रतिषेधेन (द्र० १।४।२) इत्यण् (द्र० ३।२।१) प्राप्तः। **उन्न्योर्ग्रः** (३।३।२९)—उद्गारः, निगारः। अप् (द्र० ३।३।५७)—गरः, गलः। बाहुलकाद्[5] घञ्—निगार, निगालः। न गारः—अगारम्। **मृग्रोरुतिः** (उ० १।९४)—गरुत् पक्षः। गर्मुत् (द्र० उ० १।९५) तृणम्। **हसिमृगृ** (उ० ३।८७) इति तन्—गर्तः। **कॄगॄभ्यां किः** (तु० उ० ४। १४२)—गिरिः। **मुदिग्रोर्गग्गौ** (उ० १।१२८)—गर्गः। **अर्तिगॄभ्यां मन्** (उ० ३।१५२)—गर्भः। **शेवायह्व** (उ० १।१५४) इति ग्रीवा ॥१२९॥

११३. **उदात्ताः**।

११४. **दृङ् आदरे**, ११५ **धृङ् स्थाने**। ११६. **अनुदात्तौ**। आदर इत्याग्रहणाद्—आद्रियते। आदर्ता। आदिदरिषते। **एतिस्तुशासु** (३।१।१०९) इति क्यप् आदृत्यम्। [6]दृतिर्भस्त्रा। ण्यन्तात्

---

१. वॄतो वा (७।२।३८) इति इटो वा दीर्घो भवति। तेन गरिता गरीता इत्युभयं साधु।

२. द्र० पूर्वपृष्ठस्था ४र्था टिप्पणी।

३. द्र० पूर्वपृष्ठस्था ४ टिप्पणी।

४. अच्प्रत्ययादित्यर्थः।

५. 'कृत्यल्युटो बहुलम्' (३।३।११३) इति बहुलग्रहणात् 'वासरूपोऽस्त्रियाम्' (३।१।९३) इति नियमादप्राप्तो घञपि भवति इति भावः। लिबिश इममर्थमबुध्वा बहुलमेतन्निदर्शनम् इति धातुसूत्रनिदर्शनाय १०।३९२ सख्यां निर्दिष्टवान्।

६. द्र० उ० ४।१८४।

**पूः सर्वयोर्दारिसहोः** (३।२।४१) खच्—पुरन्दरः। **ग्रहवृदृ** (३।३।५८) **इत्यप्**—आदरः। **दरिदलिभ्यां भः** (तु० उ० ३।१५१)—दर्भः। ध्रियते। धर्ता दिधरिषते। अन्यानि भ्वादौ (६८४ सूत्रे) ग्रहणानि; धरते ॥१३०, १३१॥

११७. **प्रछ ज्ञीप्सायाम्**। ज्ञीप्सा[1] जिज्ञासा। इतः षद्लृपर्यन्ताः (६।१३०) पञ्चदशानिटः परस्मैपदिनश्च। **ग्रहिज्यावयि**(६।१।१६) इति सम्प्रसारणम्—पृच्छति। **समो गम्यृच्छिप्रच्छि** (१।३।२९ का०) इति तङ्—संपृच्छते। **आङि नुप्रच्छ्योः** (१।३।२१ वा०) तङ्—आपृच्छते। पिपृच्छिषति—**रुदविद** (१।२ ८) इति कित्। पृष्ट्वा। **क्विब्वचि** (३।२।१७८ वा०) इति शब्दप्राट्, प्राड्विवाको निर्णेता। न्यङ्क्वादित्वात् (द्र० ७।३।५३) कुत्वम्[2]। **यजयाचयत** (३।३।९०) इति नङ्—प्रश्नः, **छ्वोः शूडनुनासिके च** (६।४)१९) **प्रछेरनङि**[3] इति सम्प्रसारणाभावः ॥१३२॥

११८. **वृत्**। किरादयः पञ्च वर्तिताः।

**११९सृज विसर्गे**। सृजति। स्रष्टा, **व्रश्चभ्रस्ज** (८।२।३६) इति षः। **सृजियुजिधूञां कर्मवद्भावः श्यंश्च** (तु० ३।१।८७ वा०)—सृज्यति रज्जु स्वयमेव। **विभाषा सृजिदृशोः** (७।२।६५) थलीट्—ससर्जिथ, सस्रष्ठ। **सृजिदृशोर्झल्यमकिति** (६।१।५८) इत्यमि कृते **वदव्रज** (७।२।३) इति वृद्धिः—अस्राक्षीत्। उणादौ (द्र० उ० १।१५)रज्जुः ॥१३३॥

१२०. **टुमस्जो शुद्धौ**। शुद्धया स्नानं व्रुडनं च लक्ष्यते। मज्जति। **मस्जिनशोर्झलि**(७।१।६०)इति नुम्—मङ्क्ता। **जान्तनशां विभाषा**

---

१. 'ज्ञातुमिच्छा' पाठा०।

२. प्राड्विवाके 'विचिर' धातोरणि कुत्वं न प्राप्नोति। तदर्थं न्यङ्क्वादित्वादित्युक्तम्। भानुजिदीक्षितेन त्वमरटीकाया (२।८।५) विवेचनं विवाकः (घञ्) तत अर्शआदिभ्योऽच् (५।२।१२७) इति मत्वर्छे अच्प्रत्यय इत्युक्तम्।

४. कस्य तन्त्रस्येदं सूत्रमिति नैव परिज्ञातमस्माभिः। पाणिनीयास्तु 'प्रश्ने चासन्नकाले'(३।२।११७)इति निपातनात् संप्रसारणाभावमाहुः। द्र० काशिका ६।१।१६॥

(६।४।३२) क्त्वायां नुम्[1]—मङ्क्त्वा मक्त्वा। **ओदितश्च** (८।२।४५) इति नत्वम्—मग्नः। मज्जथुः (द्र० ३।३।८९)। **गुरोश्च हलः** (३।३।१०३)—मज्जा मज्जनम्। **श्वनुक्षन्** (उ० १।१५९) इति मज्जाऽस्थिसारः। **भृमृशीतॄ** (तु० १।७) इत्युः—मद्गुः, न्यङ्क्वादित्वात् (गण० ७।३।५३) कुत्वम्। **मस्जेर्नुम् च** (उ० १४।७७) इत्यूषन्—मञ्जूषा पेटा[2]॥१३४॥

**१२१. रुजो भङ्गे**। रुजति। रुग्णः। **पदरुज** (३।३।१६) इति कर्तरि घञ्—रोगः। भिदादौ (गण० ३।३।१०४) रुजा। रुक्। **उदि कूले रुजिवहोः** (३।२।३१) खश्—कूलमुद्रुजः। **नहिवृति**[3] (६।३।११६) इति दीर्घः—वीरुक्। रुक्मं रुचेः (द्र० १।४६४)॥१३५॥

**१२२. भुजो कौटिल्ये**। निर्भुजति। भुग्नः। भोगः सर्पकायः[4]। के (३।३।५८ वा०) [भुजः।] भुजेन कौटिल्येन गच्छतीति भुजगः[5] भुजङ्गः। रुधादौ **भुज पालनाभ्यवहारयोः** (७।२२)—भुनक्ति, भुङ्क्ते। १३६॥

**१२३. छुप संस्पर्शे**। छुपति, छोप्ता॥१३७॥

**१२४. रुश रिश हिंसायाम्**। रुशति। अरुक्षत्। रिशति। तालव्यान्तौ, प्रस्तावाद्। भ्वादौ (१।४५८) मूर्धन्यान्तौ—रोषति। रेषति। दिवादौ **रुष रोषे** (४।१२३)—रुष्यति॥१२८-१३९॥

---

१. नैतत् सूत्रं क्त्वाया नुमो विकल्पं विधत्तेऽपि तु नकारस्य विभाषा लोपम्।

२. मारवाड़ीभाषाया 'पेटी' इत्युच्यते।

३. काशिकादौ 'नहिवृति' सूत्रे 'रुचि' पठ्यते। क्षीरस्तु 'रुजि' पाठं मन्यते।

४. भाष्यकारस्तु 'अथवा भोगशब्दः शरीरवाच्यपि दृश्यते। तद्यथा—'अहिरिव भोगैः पर्येति बाहुम्' (ऋ० ६।७५।१४) इति। अहिरिव शरीरैरिति गम्यते' इति (५।१।९) वदन् शरीरसाधारणो भोगशब्द इति मन्यते।

५. 'भुजगः' इत्यत्र 'अन्येष्वपि दृश्यते' (३।२।४८ वा०) इति डः। 'भुजङ्गः' इत्यत्र खच्प्रकरणे गमेः सुप्युपसङ्ख्यानम् (३।२।३८ वा०) इति खच्, 'खच्च डिद्वा' (३।३।३८ वा०) इति डित्त्वे रूपम। तदभावे 'भुजङ्गमः' इत्यपि भवति।

१२५. **लिश गतौ** । लिशति । लेष्टा । भ्वादौ **लिश अल्पीभावे**[1] लेशति, लेशः ॥१४०॥

१२६. **स्पृश संस्पर्शे**। स्पृशति, स्प्रष्टा, स्पर्ष्टा– **अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्** (६।१।५९) अमागमः । **स्पृशमृशकृषतृपदृपः सिज् वा** (३।१।४४ वा०)– अस्पृक्षत्, अस्प्राक्षीत्, अस्पार्क्षीत् । **पदरुज** (३।३।१६) इति कर्तरि घञ् –स्पर्श उपतप्ता[2] । **स्पृशोऽनुदके क्विन्** (३।२।५८), **क्विन्प्रत्ययस्य कुः** (८।२।६२) इति कुत्वम्, अन्यथा **व्रश्चादि** (८।२।३६) सूत्रेण, छशां ष इति षत्वं स्यात्, ततश्चान्तर्यात् षस्य खः, खस्य **वावसाने** (८।४।५६) इति चर्त्वेन कः, पक्षे जश्त्वेन ग.,इति **ग्रन्थोऽयुक्तः**[3]—पादस्पृक् उदकस्पर्शः । **स्पृशेः श्वण्शुनौ पृ च** (उ० ५।२७) पार्श्वम्, पर्शुः । **तिथपृष्ठ** (उ० २।१२) इति पृष्ठम् ॥१४१॥

१२७. **विछ गतौ** । **गुपूधूपविछ** (तु० ३।१।२८) इत्यायः— विच्छायति । **विछेस्तुदादिपाठः सार्वधातुकेऽप्यायानित्यत्वे लिङ्गम्**[4] पणतिवत् विच्छति, विच्छती विच्छन्ती, तथा च **शपि नित्यमिति भाष्यम्**(३।१।३१)**आर्याः** शे विकल्पम्[5], **द्रमिडास्तु** पाठबलाद् आय-

---

१. नायं भ्वादौ पठ्यते । दिवादौ (६६) तु पठ्यते । तस्य 'लिश्यते' इति भवति । दिवादिव्याख्याने (६६) तु तुदादेरेव निर्देशः क्रियते, न भ्वादे. । तस्मादपपाठोऽयम् ।

२. 'स्पृश उपतापे' (३।३।१६ वा०) इति वार्त्तिके तद्व्याख्याने च 'उपताप' शब्दः प्रयुज्यते ।

३. कस्य ग्रन्थस्य, कथ च प्रत्याख्यान क्रियत इति न ज्ञायते । षत्वात् पूर्वं कुत्वप्रवृत्तावप्यान्तरतम्यात् 'ख' एव प्राप्नोति, षत्वेऽपि च । तथा सति को भेद इति न ज्ञायते । वयं तु मन्यामहे शकारस्य षत्वे, तस्य झलां जशोऽन्ते' (८।२।३९) इति डत्वे, तस्य कुत्वे गकारे वावसाने (८।४।५६) इति प्रक्रियया भाव्यम्, अन्यथा पूर्वं कुत्वेन खत्वे कृते जश्त्वप्रसंगे कुत्वमसिद्धं स्यात् पूर्वत्रासिद्धमिति नियमात् ।

४. विच्छेस्तुदादिपाठो न केवलं नुम्विकल्पार्थ एव, अपि तु विकरणस्वरार्थोऽपि । आयस्य नित्यत्वे उभयमपि न स्यात् तेन युक्त एव स्वामिग्रन्थः । अत्र पुरुषकारोऽपि द्रष्टव्यः (पृष्ठ ५५) ।

५. नुम इति शेष. ।

व्यवायेऽपि कार्यमाहुः[1]—विच्छायन्ती विच्छायती, यथा जुगुप्सत इति सन्—व्यवायेऽपि तङ्। **यजयाच** (३।३।९०) इति नङ्—विश्नोऽन्तरायः। चुरादौ भामार्थः (१०।१९७)—विच्छयति ॥१४२॥

१२८. **विश प्रवेशने**। विशति, वेष्टा। **नेर्विशः** (१।३।१७) तङ्—निविशते। **अभिनिविशश्च** (१।४।४७) इति कर्म-ग्राममभिनिविशते। **विभाषा गमहनविदविशाम्** (७।२।६८) क्वसौ वेट्—विविशिवान् विविश्वान्। **पदरुज** (३।३।१६) इति कर्तरि घञ्—वेशो वेश्यावाटः। नेपथ्ये व्याप्त्यर्थे वेशः[2]। **विशिपतिपदि** (३।४।५६) इति णमुल्—गेहानुप्रवेशम् आस्ते, गेहं गेहमनुप्रवेशमास्ते, गेहमनुप्रवेशम् अनुप्रवेशम्। **अशूप्रुषि** (उ० १।१५१)। इति क्वन्—विश्वम्। **विटपविष्टप** (उ० ३।१४५) इतिविष्टपं लोकः, विशिपम्। **जॄविशिभ्यां झच्** (उ० ३।१२६)—वेशन्तः पल्वलम्। **वेः शालच्** (५।२।२८) इति विशाल-विशङ्कटौ ॥१४३॥

१२९. **मृश आमर्शने**। आमर्शनं स्पर्शः। परामृशाति, आमर्शन इत्युक्तेः सोपसर्गः। विम्रष्टा, विमर्ष्टा। **स्पृशमृश** (३।१।४७ वा०) इत्यमृक्षत् आम्राक्षीत् अमार्क्षीत् ॥१४४॥

१३०. **णुद प्रेरणे**। नुदति। **तुन्दशोकयोः परिमृजापनुदोः** (३।२।५) कः—शोकापनुदः पुत्रः। नुदिस्तुदेरनन्तरं पठितः (६।२) स्वरितेत्, तस्मादिह परस्मैपदिमध्ये न पाठ्यः[3] ॥१४५॥

१३१. **शद्‌लृ शातने**। **पाघ्राध्मा** (७।३।७८) इति शीयादेशः—शीयते, **शदेः शितः** (१।३।६०) तङ्। शत्स्यति। **शदेरगतौ तः** (७।३।४२) णिचि—फलानि शातयति। अशदत् (द्र० ३।१।५५)॥१४६

१३२. **षद्‌लृ विशरणगत्यवसादनेषु**[4]। सीदति सदे, सीदादेशः

---

१. शविकरणम्, तत्कार्यं च नुमो विकल्पः।

२. अत्र 'वेषः' इति शुद्धः पाठो द्रष्टव्यः (तु० अमर २।६।९९)। लिबिशेन नाय दोषो बुद्ध।

३. कर्त्रभिप्राये क्रियाफलेऽपि परस्मैपदार्थ इह पाठ इति सायणः। धातु० पृष्ठ ३४४। अत्र धातुवृत्तेः ३२३ पृष्ठस्थः (६।२) पाठोऽप्यनुसंधेयः।

४. 'अवसादन' इत्येव क्षीरस्वमिनः पाठ इति पुरुषकार उक्तम् (पृ ८३)।

(द्र० ७।३।७८) । सीदती, सीदन्ती । सिषत्सति । असदत् । सत्ता । एतयोर्भ्वादौ पठितयोः (१।५६५, ५६४) द्विःपाठे फलं नोत्पश्यामः । विकरणस्वरे विशेष इति वाभ्यूह्यम्[1] ॥४७॥

१३३. **अनुदात्ता उदात्तेतः** ।

१३४. **मुच्लृ मोक्षणे** । इतः पञ्चानिट उभयपदिनश्च । **शे मुचादीनां** (७।१।५९) नुम् – मुञ्चति, मुञ्चते । अमुचत्, अमुक्त । मोक्ता । **मुचोऽकर्मकस्य गुणो वा** (७।४।५७) इति सन्यभ्यासलोपो वा—मोक्षते वत्सः स्वयमेव, मुमुक्षते । **इगुपधात् किः** (तु० उ० ४। १२०)—मुचिः । नमुचिः—**नभ्राण्नपाद्** (६।३।७५) इति नञ् प्रकृत्या । **सिविमुचेष्टे रू च** (तु० उ० ४।१६३) —मूत्रम् । **वृतॄवदि** (उ० ३।६२) इति सः—मोक्ष. ॥१४८॥

१३५. **लुप्लृ छदने** । लुम्पति, लुम्पते । अलुपत्,अलुप्त । **लुपसदचर** (३।१।२४) इति यङ् – लोलुप्यते ॥१४९॥

१३६. **विद्लृ लाभे** । विन्दति, विन्दते । अविदत्, अवित्त । **उषविदजागुरन्यतरस्याम्** (तु० ३।१।३८) आम्—विवेद विदांचकार । आमि ज्ञानार्थस्य ग्रहणं विद इत्यदन्तनिर्देशात् । अस्य तु विवेद **विभाषा गमहनविद** (७।२।६८) इति वेट् - विविद्वान्, विविदिवान् । **अनुपसर्गाल् लिम्पविन्द** (३।१।१३७) **इति** शः—विन्दः, गोविन्दः, अरविन्दः । **वित्तो भोगप्रत्यययोः** (८।२।५८)—वित्तं धनम्, केशैर्वित्तः[2] । अन्यत्र विन्नं लब्धम् । **यावति विन्दजीवोः** (३।४।३०) णमुल् – यावद् वेदमधीते ॥१५०॥

१३७. **लिप उपदेहे** । उपदेहो वृद्धिः । लिम्पति, लिम्पते । **लिपिसिचिह्वश्च** (३।१।५३) इत्यङ्—अलिपत् । **आत्मनेपदेष्वन्यतरस्याम्** (३।१।५४) – अलिप्त अलिपत । **अनुपसर्गाल्लिम्प** (३।१।१३८) इति शः—लिम्पः । **नौ लिम्पेः** (३।१।१३८ वा०)—निलिम्पा देवाः ॥१५१॥

---

१. उभयत्र पाठस्य स्वरभेद एव प्रयोजनम् । अपि चेह पाठे नुम्विकल्पोऽपि (द्र० ७।१।८०) भवति ।

२. 'क्लेशैर्वित्तः' पाठा० ।

१३८. **षिच क्षरणे**। सिञ्चति, सिञ्चते। **उपर्गात् सुनोति** (८।३।६५) इति षः अभिषिञ्चति। **स्थादिष्वभ्यासेन चाभ्यासस्य** (८।३।६४)—अभिषिषेच, अभ्यषिञ्चत्। असिचत्, असिक्त, असिचत। **दाम्नी** (३।२।८२) इति ष्ट्रन्—सेक्त्रम्। **सिचेः संज्ञायां कन् नुं हौ च** (द० उ० ६।१०६)—सिंहः। **सिचो यङि** (८।३।११२) न षत्वम्—अभिसेसिच्यते। **ण्यन्तस्योपसंख्यानम्**[1]—असीसिचत्[1] ॥१५२

१३९. **अनुदात्ताः स्वरितेतः**।

१४०. **कृती छेदने**। इतस्त्रयः सेटः परस्मैपदिनश्च। कृन्तति। कर्तिता। **सेऽसिचि** (७।२।५७) इति कर्त्स्यति, कर्तिष्यति। कृत्तः, ईदित्त्वं यङ्लुगर्थं[2]—चरीकृत्तः। निरुपपदात् क्विप् (द्र० ३।२।७६)[3]—कृत्। कर्तरी छेदनी। कृत्तिश्चर्म। **कृतेश्छः क्रू च** (उ० २।२१)—कृच्छ्रम्[4] क्रूरः। **कृत्यशूभ्यां क्स्नः** (उ० ३।१७)—कृत्स्नम्। **कृतिभिदि** (उ० ३।१४७) इति तिकन्—कृत्तिकाः। रुधादौ **कृती वेष्टने** (७।१२)—कृणत्ति ॥१५३॥

१४१. **खिद परितापे**[5]। खिन्दति भिदादौ (गण० ३।३।१०४) खिदा। रुधादौ **खिद दैन्ये** (७।१६)—खिन्ते। खिद्यत इति कर्मकर्तरि[6] दिवादौ (४।६१ दुर्गमते) वा ऽभ्यूह्यः ॥१५४॥

---

१. नैतद्वचनं क्वचिद् दृष्टम्। धातुवृत्तौ (पृष्ठ ३४६) स्मृतमिदम्।

२. सकारादौ प्रत्यय इड्विकल्पनात् (द्र० ७।२।५७) यस्य विभाषा (७।२।१५) इतीट्प्रतिषेधः सिद्ध एव, किमीदित्त्वेन। तदनर्थकं सत् यङ्लुकि इट्प्रतिषोधार्थमिति भावः।

३. लिबिशेनात्र '३।२।१७८' संख्या निर्दिष्टा, सा चिन्त्या।

४. लौगाक्षिगृह्य (५।१)व्याख्यायां देवपालः कृच्छ्रशब्दसाधकं चारायणिसूत्रमुदाजहार——"तथा च चारायणिसूत्रम्—'पुरुकृते च्छछ्यो.'। पुच्छम् कृच्छ्रम्।" विशेषोऽस्मदीये 'सं० व्या० शास्त्र का इतिहास' ग्रन्थे ((भाग १, पृष्ठ ११३; च० संस्क०)द्रष्टव्यः।

५. 'परितापे परितापनक्रियायामिति क्षीरस्वामी' इति पुरुषकारोद्धृतः पाठः (पृष्ठ ८५)। इह तु तथा नोपलभ्यते।

६. पद गतौ सूत्रव्याख्यानान्ते (पृ० २२०) 'खिद दैन्य इति दुर्गः' इत्यस्य व्याख्यायां 'खिद्यत इति कर्मकर्त्तरि तु वामनः' इत्युक्तवान् स्वामी। तत्रस्था टिप्पणी (१) अत्राप्यनुसन्धेया।

१४२. **पिश अवयवे पिशति।** हृपिशिरुहि (द० उ० १।४७) इतीन्—पेशिर्मासंलेशः पिशुनः, पिशितम्, पेशलः ॥१५५॥

१४३. **उदात्ता उदात्तेतः।**

१४४. **वृत्।** मुचादयो वर्तिताः[1]।

**भट्टक्षीरस्वाम्युत्प्रेक्षितधातुवृत्तौ क्षीरतरङ्गिण्यां तुदादयः सम्पूर्णाः**[2] ॥



१. न तु तुदादय इत्यर्थः। एतेन तुदादीनामाकृतिगणत्वं बोध्यम्।

२. 'तुदादिर्गणः समाप्तः' पाठा०।

# ॥ अथ रुधादिगणः ॥

१. **रुधिर् आवरणे** । आवरणं व्याप्तिः । इतः सप्तानिट उभयपदिनश्च । **रुधादिभ्यः श्नम्** (३।१।७८)—रुणद्धि । अनुस्वारीभूतो णत्वमतिक्रामति—[1]रुन्द्धे, **श्नसोरल्लोपः** (६।४।१११) । **इरितो वा** (३।१।५७)—अरुधत् अरौत्सीत्, अरुद्ध । **सिपि धातो रुर्वा** (८।२।७४)—अरुणत् त्वम्, अरुण. । **न रुधः** (३।१।६४) इति कर्मकर्तरि चिण् नास्ति—अरुद्ध गौः स्वयमेव । रोद्धा । संपृचादौ (द्र० ३।२।१४२) अनुरोधी । **सप्तम्यां चोपपीडरुधकर्षः** (३।४।४९)—व्रज उपरुध्य, व्रजोपरोधं गाः पाययति । **इषितिमिमदि** (द० उ० ८।२६ कपाठः) किरच्—रुधिरम् ॥१॥

२. **भिदिर् विदारणे** । भिनत्ति, भिन्ते । अभिदत् अभैत्सीत् अभित्त । भेत्ता । **भित्तं शकलम्** (८।२।५९), भिन्नमन्यत् । **भिद्योद्ध्यौ नदे** (३।१।११५) । काष्ठभित् । **विदिभिदिछिदेः कुरच्** (३।२।१६२)—भिदुरं पविः । भित्तिः । **कृतिभिदिलतिभ्यः कित्** (उ० ३।१४७)—भित्तिका । **कॄगॄशॄपॄकुटि** (उ० ४।१४३) इतीः—भिदिर्वज्रम् । कर्मकर्तरि केलिमः (द्र० ३।१।९६ का०) भिदेलिमं काष्ठम् । रक् (द्र० उ० २।१३)—भिद्रम् । **इषितिमि** (द० उ० ८।२६ कपाठः) इति किरच्—भिदिरम् । भिदादौ (३।३।१०४ गणसूत्र) **भिदा विदारणे** ॥२॥

३. **छिदिर् द्वैधीकरणे** । अद्वैधस्य पृथक्त्वे । छिनत्ति, छिन्ते । अच्छिदत् अच्छैत्सीत्, अच्छित्त । छिदुरम्, रज्जुच्छित् । रक् (द्र० उ० १।२३)—छिद्रम् । छिदिः पर्शुः । छिदिरः, छित्वरः । भिदादौ (३।३।१०४ गणसूत्रम्) **छिदा द्वैधीभावे**, विच्छित्तिरन्यत्र ॥३॥

४. **रिचिर् विरेचने** । विरेचनं निःसारणम् । रिणक्ति, रिङ्क्ते । अरिचत् अरैक्षीत्, अरिक्त । रिक्तः । रिक्थं धनम् । रेक्णस् । चुरादौ

---

१. श्नमोऽकारलोपे, नस्यानुस्वारे, अनुस्वारस्य ययि परसवर्णः (८।४।५८) इति परसवर्णेन नकारः । स च पूर्वत्रासिद्धम् (८।२।१) इति न्यायेन 'अट्कुपु' (८।४।२) इत्यनेन णत्वे कर्त्तव्येऽसिद्ध इति कृत्वा णत्वं न भवतीति भावः ।

**रिच वियोजनसंपर्चनयो** (१०।२१०)– रेचयति ।।४।।

५. **विचिर् पृथग्भावे** । विनक्ति, विङ्क्ते । अविचत्, अवैक्षीत् अविक्त । विवेकः । जुहोत्यादौ (३।१३पाठा०) वेवेक्ति, विविक्ते ।।५।।

६. **क्षुदिर् संपेषे** । क्षुणत्ति, क्षुन्ते । क्षोत्ता । अक्षुदत् अक्षौत्सीत्, अक्षुत्त । क्षुण्णः । रक् । (द्र० उ० १।१३)–क्षुद्रः ।।६।।

७. **युजिर् योगे** । युनक्ति, युङ्क्ते, अयुजत् अयौक्षीत्, अयुक्त । **प्रोपाभ्यां युजेरयज्ञपात्रेषु** (१।३।६४) तङ्–प्रयुङ्क्ते, उपयुङ्क्ते । नेह– **द्वन्द्वं यज्ञपात्राणि प्रयुनक्ति**[1] । दिवादौ **युज समाधौ** (४।६७) – युज्यते । अस्यैव[2] ग्रहणानि ।।७।।

८. **अनुदात्ताः स्वरितेतः** ।

९. **उछृदिर् दीप्तिदेवनयोः**, १०. **उतृदिर् हिंसानादरयोः** । ११. **उदात्तौ स्वरितेतौ** । छृणत्ति छृन्ते । अच्छृदत् अच्छर्दीत्, अच्छर्दिष्ट । चङि– अचच्छर्दत्, अचिच्छृदत । **उर्ऋत्** (७।४।७) इति वा ऋकारः । **सेऽसिचि कृति**(तु०७।२।५७)इति वेट्–छर्दिष्यति छर्त्स्यति । **उदितो वा** (७।२।५६)–छृत्त्वा, छर्दित्वा । छृण्णः । **अर्चिशुचि** (उ० २।१०८) इतीसिः– छर्दिस् । चुरादौ **छर्द वमने** (१०।४७)– छर्दयति । तृणत्ति तृन्ते । अतृदत्, अतर्दीत् । तर्त्स्यति, तर्दिष्यति । तृत्त्वा तर्दित्वा । तृण्णः । वितर्दिका वेदिः ।।८,९।।

१२. **कृती वेष्टने** । १३. **उदात्त उदात्तेत्** । कृणत्ति । कर्तित्वा । कर्त्स्यति कर्तिष्यति । कृत्तः । **ईदित्त्वं यङ्लुगर्थम्**[3]–चरीकृत्तः । **कृतेराद्यन्तविपर्ययश्च** (उ० १।१६)–तर्कुः । तुदादौ **कृती छेदने** (६।१४०)– कृन्तति, कृत्तिः ।।१०।।

१४. **ञिइन्धी दीप्तौ** । १५. **उदात्तोऽनुदात्तेत्** । इन्द्धे, **श्नान्नलोपः** (६।४।२३) । इद्धम् **भ्राष्ट्राग्न्योरिन्धेः** (६।३।७० वा०) मुम्–भ्राष्ट्रमिन्धः, अग्निमिन्धः । अग्निमिन्धे–अग्नीत् । **अवोदैध** (६।४।२९) इत्येध· इध्मः । एधस्त्वेधेः (१।२) असुनि (द्र० उ०

---

१. अनुपलब्धमूलमिदम् । २. 'तत्रैव' युक्तः पाठः स्यात् ।

३. एतद्विषये नृती धातौ (पृष्ठ २०९ टि० १) तौदादिके कृती धातौ (पृष्ठ २६६ टि० २) च टिप्पणं द्रष्टव्यम् ।

४।१८६)। **वाविन्धे** (उ० २।२६) रक् —वीध्रं विमलम्, नीध्रं पटलप्रान्तः ॥११॥

१६. **खिद दैन्ये**। १७. **विद विचारणे**। १८. **अनुदात्तावनुदात्तेतौ**। खिन्ते। दिवादौ (४।६१ दुर्गमते) खिद्यते। तुदादौ (६।१४१) खिन्दति। विन्ते। **नुदविदोन्दत्रा**(८।२।५६)इति वा निष्ठानत्वम् —वित्तः विन्नः ॥१२, १३॥

१९. **शिष्लृ विशेषणे**। विशेषणं गुणान्तरोत्पादनम्। इतश्चत्वारोऽनिटः परस्मैपदिनश्च। विशिनष्टि। व्यशिषत्। कर्मणि तङि वसः(द्र०३।१।४५)—व्यशिक्षत। विशिष्यते। चुरादौ **शिष असर्वोपयोगे** (१०।२११)—शेषयति। शिष्यत इति शेषः ॥१४॥

२० **पिष्लृ संचूर्णने**। चौरस्य पिनष्टि, **जासिनिप्रहण** (२।३।५६) इति षष्ठी। अपिषत्, अपिष्ट, अपिक्षत। पेष्टा। **शुष्कचूर्णरूक्षेषु पिषः** (३।४।३८) णमुल् —शुष्कपेषं[1] पिनष्टि। उणादौ (द्र० दश० उ० वृत्ति ३।३४) पिनाकपिण्याकौ ॥१५॥

२१. **भन्जो आमर्दने**। भनक्ति। भङ्क्ता। अभाङ्क्षीत्। **भञ्जेश्च चिणि** (६।४।३३) —अभाजि, अभञ्जि। **जपजभ** (७।४।८६) इत्यभ्यासस्यानुस्वारः—बम्भज्यते। **जान्तनशां विभाषा** (६।४।३२) इति वा नुम् —भक्त्वा भङ्क्त्वा। **भञ्जभासमिदो घुरच्** (३।२।१६१) —भङ्गुरः। घञ् (द्र० ३।३।१९)भज्यतेऽनेनेति भङ्गस्तरङ्गः। क्ते—भग्नः। भङ्गिः ॥१६॥

२२. **भुज पालनाभ्यवहारयोः**। अभ्यवहारो भोजनम्। भुनक्ति भुवम्। **भुजोऽनवने** (१।३।६६) तङ् —भुङ्क्तेऽन्नम्। भोक्ता। **गतिबुद्धिप्रत्यवसानार्थ** (१।४।५२) इति कर्मसंज्ञा—भोजयति चैत्रं सक्तून्। **भोज्यं भक्ष्ये** (७।३।६९) साधु, भोग्यमन्यत्र[2]। भोजोऽचि (द्र० ३।१।१३४) **भुजन्युब्जौ पाण्युपतापयोः** (७।३।६१), अन्यत्र भोगः सुखम्। **विश्वभोजः**, भुज्युर्गन्धर्वः[3]। **रुचिभुजिभ्यां किष्यन्**

१. 'तिलपेषम्, तैलपेषम्' पाठान्तरे। २. 'भोग्यः' पाठा०।

३. अत्र लिबिशेन हैमोणादिसूत्रसंख्या ८०२ तुलनाय निर्दिष्टा। सत्यपि भुज्युपदे नायमर्थस्तत्र निर्दिष्यते। भुज्युः पदं तु पञ्चपाद्यां (३।२१) दशपाद्यां (१।२३५) उभयत्र साध्यते।

(उ० ४।१७६) —भुजिष्यो दासः। तुदादौ **भुजो कौटिल्ये**(६।१२२) — निर्भुजति ॥१७॥

२३. **अनुदात्ता उदात्तेतः।**

२४. **तृहि हिसि हिंसायाम्।** इतोऽष्टौ सेटः परस्मैपदिनश्च। **तृणह इम्** (७।३।९२) —तृणेढि तृण्ढः, तृंहन्ति। तृण्ढि। **तृहेः क्नो हलोपश्च** (उ० ५।८) तृणम्। हिनस्ति। हिन्धि, **धि च** (८।२ २५) इति सलोपः। **तिप्यनस्तेः**(८।२।७३) अहिनद् भवान्। **सिपि धातो रुर्वा**(८।२।७४)—अहिनत् त्वम्, अहिनस्त्वम्। **निन्दहिंस**(३।२।१४६) इति हिंसकः। **नमिकम्पि** (३।२।१६७) इति रः—हिंस्रः। हिंसा। हिंसीरो(द्र० उ० ५।१८ गलाकर्षणशृङ्खला[1] ॥१८,१९॥

२५. **उन्दी क्लेदने।** उनत्ति। उन्दिदिषति। घञि—**अवोदैध** (६।४।२९) इत्यवोदः क्लेदनम्। **नुदविदोन्दत्रा** (८।२ ५६)—इति वा नत्वम्— समुन्नम् समुत्तम्। **उन्देरिच्चादेः**(उ० १।१२)—इन्दुः। रक् (द्र० उ० २।१३)—उद्रः। उन्दुर खनकः[2]। उदकम्। **उन्देर्नलोपश्च** २।७६) इति युच्—ओदनम्। उत्सः प्रस्रवणम् ॥२०॥

२६. **अञ्जू व्यक्तिम्रक्षणगतिषु।** व्यक्तिः प्रकटता, म्रक्षणं

---

१. महाभाष्ये द्वि: कृत्वा सिंहशब्दो हिंसेर्वर्णव्यत्ययेन निष्पादितः (द्र० हयवरट् सूत्रे, तथा ३।१।१२३)। तथैव च निरुक्तेऽप्युक्तम् हिंसेर्वा स्याद् विपरीतस्य ३।१८॥ उणादौ (५।६२) तु सिचेर्व्युत्पादितः। उभयमप्यर्थप्रदर्शनपरं निर्वचनम्। वस्तुतस्तु सिंहशब्दो सिंहतेरेव निष्पद्यते। सिंहिश्च काशकृत्स्नधातुपाठे कण्ठरवेण पठ्यते (द्र० १।३१६; पृष्ठ ४८) सिंहः—वनराज इति च तत्र व्याख्यायते(पृष्ठ ४९)। तस्मान्नात्र केनचिन्मूर्खेण हिंस इति भूतपूर्वशब्दस्य स्थाने वर्णव्यत्ययेन सिंह इत्युक्त, तदेव च भाषायां प्रसिद्धीभूतमिति कल्पनीयम्। वस्तुतस्तु सर्वत्रैव वैयाकरणा आगमादेशादिना मूलभूता प्रकृति (या तेषां काले प्रयोगाल्लुप्ताऽभूत्) स्मारयन्ति इत्यन्यत्रास्माभिर्विस्तरेणोक्तम् (सं० व्या० शास्त्र का इतिहास, भाग ३, पृष्ठ २२-२६)।

२. मूषक इत्यर्थः। द्र० अमरकोष २।५।११, १२। तत्र 'उन्दुरुः' इत्युकारान्तोऽपि पठ्यते। द्र० हैमोणादि ४२३। उन्दुर इत्यस्यापभ्रंशः 'ऊन्दर' 'ऊन्दरा' इति मारवाड़ीभाषायां प्रयुज्यते।

घृतादिसेकः । अनक्ति । अङ्क्ता, अञ्जिता । **स्मिङ्पूङ्रञ्ज्वशां सनि** (तु० ७।२।७४) —अञ्जिजिषति । अञ्जेर्ण्यति आज्यम् इष्यते (द्र० ३।१।१०९ भाष्यम्) । अक्तः । **ऋतन्यञ्जि** (४।२) इत्यलिच्— अञ्जलिः । अञ्जिष्ठुस्तिलादि । अङ्क्त्वा, अक्त्वा, अञ्जित्वा ॥२०॥

२७. **तञ्जू संकोचने** । तनक्ति । तङ्क्त्वा, तक्त्वा, तञ्जित्वा । तक्तः । **तञ्चू** इति **द्रमिडाः**—तक्त्वा, तञ्चित्वा ॥२२॥

२८. **ओविजी भयचलनयोः** । विनक्ति । उद्विग्नः । उद्विजते तुदादौ (६।११) ॥२३॥

२९. **वृजी वर्जने** । वृणक्ति । अवृणक् । अपवृक्तः । वर्गः । वृजिनं पापम् । **वृची वरण** इति **दौर्गाः**—वर्कः । अदादौ (२।२० दुर्गमते) वृक्ते ॥२४॥

३०. **पृची संपर्के** । पृणक्ति । सम्पृक्त, । घञ् (द्र० ३।३।१९) सम्पर्कः, मधुपर्कः । अदादौ (२।२१)पृक्ते । चुरादौ **युज पृची संयर्चने** (१०।२०२) वा णिच् —संपर्चयति संपर्चति[1] ॥२५॥

**भट्टक्षीरस्वाम्युत्पेक्षितधातुवृत्तौ**
**क्षीरतरङ्गिण्यां**
**रुधादिगणः**
**सम्पूर्णः**[2] ।

---

१. अत्र 'वृत्' इति न पठ्यते । धातुवृत्तौ सायणः वृत्करण पठित्वा ऽऽह—"धातुपारायणे तु गणसमाप्तिर्नेष्यते । तेन लुनति पुनति इति सिद्ध्यति" (पृष्ठ ३५४) ।

२. 'इति क्षीरस्वाम्युत्प्रेक्षितक्षीरतरङ्गिण्यां धातुवृत्तौ रुधादिगणः सम्पूर्णः' पाठा० ।

३५ # ॥ अथ तनादिगणः ॥

१. **तनु विस्तारे**। इतः षट् सेट उभयपदिनश्च । **तनादिकृञ्भ्य उः** (३।१।७९)तनोति तनुते, तन्वः तनुवः, तन्मः तनुमः । **तनोतेर्यकि** (६।४।४४) इति तायते, तन्यते । अतनीत् अतानीत् (द्र० ७।२।७)। **तनादिभ्यस्तथासोः** (२।४।७९) सिज्लुग्वा—अतत, अतथाः, **वनतितनोत्यादीनाम्** (६।४।३७)इत्यनुनासिकलोपः; अतनिष्ट, अतनिष्ठाः ' **नहिवृति** (६।३।११६) इति क्वौ दीर्घ. परीतत् । तत्वा, तनित्वा । ततः, विततः । **सनीवन्तर्ध**(७।२।४९) इति वेट् —तितनिषति, अनिट्पक्षे—**तनोतेर्विभाषा**—(६।४।१७) दीर्घः—तितांसति तितंसति । **तनोतेर्णः** (द्र० ३।१।१४० वा०)—अवतानः । घञि (३।३।१८,१९) वितानो यज्ञः, सन्तानः, एकतानः । **भृमृशी** (उ० १।७) इत्युः—तनुः। **कृशिचमितनि**(उ० १।८०) इत्यूः—तनूः । **सितनिगमि**(उ० १।६९) —इति तुन्—तन्तुः । तुक् । तोकमपत्यम्[1] । **सानसिवर्णसि**[2] (उ० ४। १०७) इति तण्डुलम्[2] । **तन्यृषिभ्यां क्सरच्** (तु० उ० ३।७५) — तसरः सूत्रवेष्टनम्[3] । त्रसरस्तु पट्टसूत्रम्[3] । **तनिमृङ्भ्यां किच्च** (उ० ३।८८) ततम् । तातः(द्र० उ० ३।९०) पिता । **तनेः कयन्**(तु० द्र० उ०४।९९)—तनयः । **ष्ट्रन्**(दश० उ० ८।७९)—तन्त्रम् । **न क्तिचि दीर्घश्च** (६।४।३९)—तन्तिः । तन्त्री. । क्तिनि (३।३।९४)—ततिः पङ्क्तिः । **तनोतेर्डउः सन्वच्च**—(उ० ५।५२)—तितउः परिपवनम्[4] । **तनेरनश्च वः** (तु० उ० २।६३)—त्वक् । **वा ल्यपि** (६।४। ३८) इत्यनुनासिकलोपः प्रतत्य प्रतन्य ॥१॥

२. **षणु दाने** । सनोति, सनुते । सात्वा सनित्वा । सायते सन्यते । असनीत्, असानीत् । असात असनिष्ट; असाथाः असनिष्ठाः । **सनो-**

१. तुलनीयम्—हैमधातुपारायण ८।१॥

२. 'वृञ् लुटि (उ० ५।९) इत्युलच्, तण्डुलम्' इति पाठा० ।

३. अत्रोभयत्रार्थनिर्देशे विपर्यासः सजात इति प्रतीयते । अमरकोशे 'त्रसरः सूत्रवेष्टनम्' (३।२।२४) इति पठ्यते । हैमोणादिवृत्तौ 'तसरः कौशेयवस्त्रम्' इति निर्दिश्यते । अयमेव 'तसरः' सम्प्रति 'टसर' इति भाषायां प्रयुज्यते । अत्र दशपाद्युणादिवृत्तिः ८।५५ अवलोकनीया । ४. 'तितूस् चालनी' पाठा० ।

**वन्तर्ध** (७।२।४९) इति सिसनिषति सिषासति। सनोतेरनुनासिकलोप आत्वं च (द्र० ६।४।४२)—सातः। **न क्तिचि दीर्घश्च** (६।४।३९)—सन्तिः। **लोपश्चास्यान्यतरस्याम्**(६।४।४५)—सतिः। **ऊतियूति** (३।३।९७) सातिर्दानम्। ञुण् (द्र० उ० १।३)—सानुः॥२॥

३. **क्षणु हिंसायाम्**। क्षणोति, क्षणुते। क्षत्वा क्षणित्वा। **ह्म्यन्तक्षण** (७।२।५)इति वृद्धिर्नास्ति अक्षणीत्। क्षतः, क्षतिः। **क्षिणु** इति **दुर्गः**—क्षिणोति, क्षितः, क्षितिः॥३॥

४. **ऋणु गतौ**। ऋणोति, ऋणुते॥४॥

५. **तृणु अदने**। तृणोति, तृणुते। तृत्वा तृणित्वा। **तृणु अर्दने इति नन्दी**॥५॥

६. **घृणु दीप्तौ**। घृणोति, घृणुते। घृत्वा घृणित्वा। घृणि, घृणा, घृतम्॥६॥

७. **उदात्ताः स्वरितेतः**। **एते सार्वधातुके संदिग्धगुणाः**[1]—**अर्णोति, तर्णोति, घर्णोति**।

८. **वनु याचने**। ९. **मनु अवबोधने**। १०. **उदात्तावनुदात्तेतौ**। वनुते। ववने। वत्वा, वनित्वा। वत। **ग्लास्नावनुवमां च**(१।५५६) इति मित्त्वं वा—वनयति वानयति। अत्रानुपसर्गाद्(१।५५५)इत्यनुवृत्तेः, सोपसर्गात् नित्यम्—प्रवनयतीति प्राग् (१।५५६) उक्तम्। वनिता। वण्डः(द्र० उ० १।११४)। वनिष्ठुः[2]। भ्वादौ **वनु च नोच्यते** (१।५४१)—वनति। मनुते। मत्वा मनित्वा। मतम्। अमत अमनिष्ट, अमथाः अमनिष्ठाः। दिवादौ **मन ज्ञाने** (४।६६)—मन्यते।७

११. **डुकृञ् करणे**। १२. **अनुदात्तः**। करोति। कुरुते, करोतेः (द्र० ६।४।११०) इत्युत्त्वम्, **तनादिकृञ्भ्य उः**(३।१।७९)इति पृथक् कृञो ग्रहणादन्यत् तनादिकार्यं नास्ति[3]। **अनुपराभ्यां कृञः** (१।३।

---

१. उद्धृत प्रक्रियाकौमुद्यां (पृष्ठ २७८) धातुवृत्तौ (पृष्ठ ३५७) च। काशकृत्स्नधातुपाठीयकन्नडटीकायामेषां गुणाभाव उदाह्रियते। यथा—क्षिणोति, ऋणोति, तृणोति, घृणोति, चिणोति, छिणोति, घिणोति। पृष्ठ १७७।

२. इतोऽग्रे, दुःपात्रम्' इत्यधिकं क्वचित्।

३. कतमदन्यत् तनादिकार्यं करोतेर्न भवतीति न व्यक्तीकृत क्षीरस्वामिना। महाभाष्यकृतां त्वत्र सर्वमन्यत्तनादिकार्यमुपन्यस्य विशेषाभाव उक्तः (द्र० ३।

७९) न तङ्—अनुकरोति, पराकरोति । गन्धमादौ (द्र० १।३।३२) तङ्—श्येनो वर्तिकामपकुरुते[1] । अधेः प्रसहने (१।३।३३)—तं ह्यधिचक्रे । वेः शब्दकर्मणः (१।३।३४)—श्वा विकुरुते स्वरम्[2] । अकर्मकाच्च (१।३।३५)—विकुर्वते दान्ताः । संपर्युपेभ्यः करोतौ भूषणे, समवाये च (तु० ६।१।१३७, १३८)—सुट् संस्कुरुते, परिष्कुरुते, उपस्कुरुते । नित्यं करोतेः (६।४।१०८) इति म्वोर्विकरणलोपः—कुर्वः कुर्मः । कृसृभृवृ (७।२।१३) इति लिटि नेट्—चकर्थ, चकृव, चकृम । ऋद्धनोः स्ये (७।२।७०) इट्—करिष्यति । ये च (७।४।१०९) इति विकरणलोपः—कुर्यात्, न भकुर्छुराम् (८।२।७९) इति दीर्घो नास्ति । हृक्रोरन्यतरस्याम् (१।४।५३) कर्मसंज्ञा—घटं कारयति चैत्रं चैत्रेण वा । तिरोऽन्तर्धौ, विभाषा कृञि (१।३।७१,७२) गतिसंज्ञा, तिरसः (द्र० ८।३।४२) गतौ सत्वम्—तिरस्कृत्य, तिरः कृत्वा । कृभ्वस्तियोगे (५।४।५०) च्विः—शुक्लीकरोति । मिथ्योपपदात्, कृञोऽभ्यासे (१।३।७१) तङ्—पदं मिथ्या कारयते । कृत्रिमम् (द्र० ३।३।८८) । विभाषा कृवृषोः (३।१।१२०) इति क्यप्, कार्यम् । अतः कृकमि (८।३।४६) इति सत्वम्—अयस्कारः । कृञो हेतुताच्छील्यानुलोम्येषु

---

१।७९) । तस्माद् भाष्यकृन्मते कृञ्ग्रहणं व्यर्थमेव । जैनेन्द्रमहावृत्तिकृता तूक्तम्—'तनादिभ्यस्तथासोः (जै० १।४।४८) इति विभाषया सेरुम्न (सिचो लुङ् न) भवति । अकृत, अकृथाः । न चानुप्पक्षे (सिचो लुगभावपक्षे) 'प्राद् गोः' (जै० ५।३।४५)—(ह्रस्वादङ्गात् अष्टा० ८।२।२७) इति स (लोपः) सम्भवति । तस्मिन् प्राप्ते उप (सिचो लुकः) आरम्भात् सेः श्रवणं प्रसज्येत इति । इदं चाविचारितरमणीयम् । जैनेन्द्रव्याकरणानुसारमपि 'प्राद् गोः' (जै० ५।३।४५) इत्यस्य 'पूर्वत्रासिद्धम्' (जै० ५।३।२७) इति प्रकरणे विधानात् । तेन प्राद्गोरिति वा ह्रस्वादङ्गात् इति वा सिचः सकारलोपस्यासिद्धत्वात् नहि तत्प्राप्तौ विभाषा सिचो लोप आरभ्यते, येन पक्षे सकारश्रवणं प्रसज्येत । अत एव महाभाष्यकृता इदमपि वैशिष्ट्यं निराकृतम् । वयं त्वनुमिनुमः—कृञो भ्वादावेव पाणिनीयः पाठः, न तनादौ । तथा सत्येव 'तनादिकृञ्भ्य उः' (३।१।७९) सूत्रे पृथक् कृञो ग्रहणमुपपद्यते । भाष्यव्याख्यानादनुमीयते भगवतः पतञ्जलेः प्रागेव कृञः तनादौ प्रक्षेपोऽभूदिति । अत्र कृञ् करणे (१।६३९) सूत्रस्य टिप्पणम् (पृष्ठ १३८, टि० ४) अप्यवलोकनीयम् ।

१. 'अपस्कुरुते' पाठा० ।    २. क्वचित् 'स्वरम्' नास्ति ।

(३।२।२०) टः—विद्या यशस्करी। **दिवाविभा** (३।२।२१) इत्यच्—दिवाकरः। **कर्मणि भृतौ** (३।२।२२)—कर्मकरः। **स्तम्बशकृतोरिन्** (३।२।२४) स्तम्बकरिर्व्रीहिः[1] शकृत्करिर्वत्सः। **मेघर्तिभयेषु कृञः** (३।२।४३) खच् मेघंकरः। **क्षेमप्रियमद्रेऽण् च** (३।२।४४)—क्षेमंकरः, क्षेमकारः। **आढ्यसुभग** (३।२।५६) इति ख्युन्—आढ्यंकरणम्। **कर्तृकर्मणोश्च भूकृञोः** (३।३।१२७) खल्—ईषदाढ्यंकरः, स्वाढ्यंकरः। **सुकर्मपाप** (३।२।८९) इति क्विप्—सुकृत्। **राजनि युधिकृञः** (३।२।९५) क्वनिप्—राजकृत्वा। **सहे च** (३।२।९६)—सहकृत्वा। **अलंकृञ्निराकृञ्** (३।२।१३६) इतीष्णुच्—अलंकरिष्णुः,निराकरिष्णुः। **कृञः श च** (३।३।१००)—क्रिया, कृत्या, कृतिः। **प्रश्नाख्यानयोरिञ् च** (कातन्त्र कृदन्त ६०६, सर० कण्ठा० २।४।१६१)—कां कारिमकार्षीः? इमां कारिमकार्षम्, कारिकाम्। ण्यन्तात् (द्र० ३।३।१००) कारणा। भिदादौ (गण० ३।३।१०४) कारा बन्धने। **कर्मण्याक्रोशे कृञः खमुञ्** (३।४।२५)—चौरंकारमाक्रोशति। **स्वादुमि णमुल्** (३।४।२६)—स्वादुंकारं भुङ्क्ते। **अन्यथैवंकथमित्थंसु सिद्धाप्रयोगश्चेत्** (३।४।२७)—अन्यथाकारम्, एवंकारम्। **यथातथयोरसूयाप्रतिवचने** (३।४।२८)—यथाकारमस्तु किं तवानेन? **तिर्यच्यवर्गे** (३।४।६०) तिर्यक्कृत्य, तिर्यक्कारम्, समाप्येत्यर्थः। **स्वाङ्गे तस्प्रत्यये कृभुवोः**[2] (तु० ३।४।६१)—मुखतः कृत्य, मुखतः कृत्वा, मुखतःकारम्। **नाधार्थप्रत्यये च्व्यर्थे** (३।४।६२)—नानाकृत्य, नानाकारम्, द्विधाकृत्य द्विधाकारम्। भ्वादौ **कृञ् करणे**—(१।६३९)—करति, करते। स्वादौ **कृञ् हिंसायाम्** (५।७)—कृणोति कृणुते। **कृवापाजि** (उ० १।१) इत्युण्—कारुः, कारूः। **कृग्रोरुच्च** (उ० १।२४)—कुरुः, कुरूः। **कृञः कतुः** (उ० १।७६)—क्रतुः। **अण्डन् कृसृभृवृञः** (उ० १।१२९)—करण्डः। **कृहृभ्यामेणुः**[3] (उ० २।१०)—करेणुः, करेणूः। **कृदाधारा** (उ० ३।४०) इति कः—कर्कः। **कृधूमादिभ्यः कित्** (उ० ३।७३) इति सरन्

---

१. 'व्रीहिः' शकृत्करिः' क्वचिन्नास्ति।

२. 'कृभुवोः' सर्वकोशेषु पाठः।

३. 'मेनुः' पाठा०।

—कृसरः । **कृञ उच्च** (४।३३) इतीरन् - कुरीरम् । **कृञ उदीच्यां कारिषु** (तु० उ० ४।१२९) इतीञ्—कारिः । **मनिन्** (दश० उ० ६। ७३) - कर्म । **कृञः पासः** (उ० ५।४५)—कर्पासः[1] । **कृपेः कूः**[2]—कूर्पासः कञ्चुकम्[3] । **करोतेर्द्वे च**(तु०६।१।१२ भाष्यम्)—चक्रम् ।८।

**भट्टक्षीरस्वाम्युत्प्रेक्षितधातुवृत्तौ क्षीरतरङ्गिण्यां तनादिगणः सम्पूर्णः ॥**[4]



१. दशपाद्यां तु 'कृञः पासञ्' (९।१०२) इति 'कार्पासः' पदं साध्यते ।

२. अनेन सूत्रेण 'कूर्प' शब्दः साध्यते । तत कूर्पेऽस्यते इति कूर्पासः । इत्येव पाठेन भाव्यम् । स्वयं ग्रन्थकरोऽमरटीकाया तु 'कूर्पेऽस्यते कूर्पासः स्त्रीणां कञ्चुलिकाख्यः' इत्याह (२।६।११८) । हैमोणादौ (५८३) सरस्वतीकण्ठाभरणे (२।३।१७८) च 'कुर' धातोः पासप्रत्ययो विधीयते ।

३. क्वचिदयं पाठो नास्ति ।

४. 'इति क्षीरस्वाम्युत्प्रेक्षितक्षीरतरङ्गिण्यां धातुवृत्तौ तनादिर्गणः' इति पाठा० ।

# ॥ अथ क्र्यादिगणः ॥

१. **डुक्रीञ् द्रव्यविनिमये** । विनिमयः परिवर्तः । इतः सप्तानिटः । **क्र्यादिभ्यः श्ना** (३।१।८१)—क्रीणाति, क्रीणीते, **ई हल्यघोः** (६।४।११३) । क्रीणन्ति, **श्नाभ्यस्तयोरातः** (६।४।११२) लोपः । **परिव्यवेभ्यः क्रियः** (१।३।१८) तङ्—परिक्रीणीते । **क्रीङ्जीनां णौ** (६।१।४८) इति आत्वम्—क्रापयति । क्रेता । **क्रय्यस्तदर्थे** (६।१।८२), क्रेयोऽन्यः । **कर्मणीनिर्विक्रियः** (तु० ३।२।९३)—सोमविक्रयी[1] । **क्रिय इकन्** (उ० २।४४)—क्रयिकः ॥१॥

२. **प्रीञ् तर्पणे कान्तौ च** । कान्तिरभिलाषः । प्रीणाति,प्रीणीते । **धूञ्प्रीञोर्नुक्** (७।३।३७ वा०)—प्रीणयति । **इगुपधज्ञा** (३।१।१३५) इति कः—प्रियः । दिवादौ **प्रीङ् प्रीतौ** (४।३४)—प्रीयते ॥२

३. **श्रीञ् पाके** । श्रीणाति, श्रीणीते । श्रेता । श्रीतः ॥३॥

४. **मीञ् हिंसायाम्** । मीनाति, मीनीते । **हिनु मीना** (८।४।१५) इति णत्वम्—प्रमीणाति । **सनि मीमा** (७।४।५४) इतीस्—मित्सति । **मीनातिमिनोतिदीङां ल्यपि च** (६।१।५०) इत्यात्त्वम्—प्रमापयति, प्रमाय । **मिमीलियां खल्चोः प्रतिषेधः** (तु० ३।१।५० वा०) —ईषन्मयः प्रमयः । मीतः—उणादौ । **मीनातेरूरः** (द० उ० ८।२८)—मयूरः । ४॥

५. **षिञ् बन्धने** । सिनाति, सिनीते । असैषीत् । **स्तौतिण्योरेव षणि** —(८।३।६१) इति नियमात् सिसीषति । स्वादौ (५।२)सिनोति । अस्यैव ग्रासकर्तृकस्य (द्र० ८।२।४४ वा०) सिनो ग्रासः[2] स्वयमेव ॥५॥

६. **स्कुञ् आप्रवणे** । आप्रवणमुद्धरणम् । सौत्रोऽयम् इत्याचार्याः[3] । **स्तन्भुस्तुन्भुस्कन्भुस्कुन्भुस्कुञ्भ्यः श्नुश्च** (तु० ३।१।८२) —स्कुनाति स्कुनीते, स्कुनोति स्कुनुते । स्कोता ॥६॥

७. **युञ् बन्धने** । युनाति,युनीते । योता । अदादौ **यु मिश्रणे**

---

१. 'मांसविक्रयी' पाठा० । २. 'ग्राम.' क्वचिदपपाठः ।

३. 'आचार्यः' पाठा० । द्र० धातुवृत्तिः (पृष्ठ ३६५) ।

(२।२५)—यौति, यविता। चुरादौ **यु जुगुप्सायाम्** (१०।१५६)—यावयते ॥७॥

८. **अनुदात्ताः।**

९. **क्नूञ् शब्दे।** इतो गॄपर्यन्ता (९।२७) विंशतिः सेटः। क्नूनाति, क्नूनीते, क्नविता ॥८॥

१०. **द्रूञ् हिंसायाम्।** द्रूणाति, द्रूणीते। द्रविता। द्रूतः[1]। स्वादौ (५।३३ दुर्गमते) द्रुणोति ॥९॥

११. **पूञ् पवने।** पवन शुद्धिः। **प्वादीनां ह्रस्वः** (७।३।८०)—पुनाति, पुनीते। **पूञो विनाशे** (८।२।४४ वा०) निष्ठानत्वम्—पूना यवाः, पूतोऽन्यत्र। **निरभ्योः पूल्वोः** (३।३।२८)घञ्—निष्पावो व्रीहिभेदः। भ्वादौ **पूङ् पवने**(१।६९१)—पवते। दिवादौ[2] पूयते। पोत्रम्। पवित्रम्। पुत्रः। पोतः। **नप्तृनेष्टृ** (उ० २।९५) इति पोता ऋत्विक् ॥१०॥

१२. **लूञ् छेदने।** लुनाति, लुनीते। लविता। सनि नेट् (द्र० ७।२।१२)—लुलूषति। अलीलवत्। लिलावयिषति **ओः पुयण्ज्यपरे**(७।४।८०) इत्यभ्यासस्येत्त्वम्। **ल्वादिभ्यश्च** (तु० ८।२।४४) इति—निष्ठानत्वम्—लूनः। **ऋकारल्वादिभ्यः क्तिन् निष्ठावत्** (८।२।४४ वा०)—लूनिः। **अर्तिलूधू** (तु० ३।२।१८४ इत्रन्) इतीत्रन्—लवित्रम्। **आणक लूशिङ्घि** (तु० दश० उ० ३।२७) इति लवाणकः। लूता। **हसिमृग्** (उ० ३।८६) इति तन्-लोतः[3]। **प्रसृल्वः समभिहारे वुन्** (३।१।१४९) लवकः। **नामन्-सामन्** (दश० उ० ६।७९) इति लोम। **निरभ्योः पूल्वोः** (३।३।२८) घञ् अभिलावः ॥११॥

१३. **स्तॄञ् छादने।** स्तृणाति, स्तृणीते। आस्तरिता आस्तरीता—**वॄतो वा**(७।२।३८)इतीटो दीर्घः। **लिङ्सिचोरात्मनेपदेषु**(७।२।४२) वेट्—आस्तरिषीष्ट आस्तीर्षीष्ट, आस्तरिष्ट आस्तीर्ष्ट। **इट् सनि वा** (७।२।४१)—आतिस्तीर्षति आतिस्तरिषति आतिस्तरीषति। **अत् स्मृदृत्वरप्रथ** (७।४।९५) इति चङ्यभ्यासस्यात्त्वम्—अतस्तरत्।

---

१. 'द्रवितः' इत्यपपाठः क्वचित्। द्र० अष्टा ७।२।११॥

२. क्षीरतरङ्गिण्यां दिवादौ न दृश्यते।

३, 'छिन्नलोमा' इत्यधिकः क्वचित्।

आस्तीर्णः । स्तीर्णिः । **प्रे स्त्रोऽयज्ञे**—(३।३।३२) घञ् प्रस्तारः, यज्ञे तु प्रस्तरो हविषाम् । **प्रथने वावशब्दे ।** (३।३।३३)—पटस्य विस्तारः, शब्दे—विस्तरः । **छन्दोनाम्नि च** (३।३।३४)—विष्टारपङ्क्तिः । **वृक्षासनयोर्विष्टरः** (८।३।९३), **अवे तृस्त्रोर्घञ्** (३।३।१२०)—अवस्तारः । स्वादौ स्तृञ् (५।६)—विस्तृणोति । विस्तृतः । स्तरो विस्तरभेदः । स्तरी—(द्र० उ० ३।१५८) मेघः शय्या च—स्तरीमामास्तीर्य ॥१२॥

**१४. कॄञ् हिंसायाम् ।** कृणाति, कृणीते । कीर्णः । कीर्णिः । **कॄञ् इत्येके** ॥१३॥

**१५. वॄञ् वरणे ।** वृणाति, वृणीते । वूर्णः । वूर्णिः । विवरः । **कॄवॄदारिभ्य उनन्** (दश० उ० ५।५२)—वरुणः । **वृञ्** इति **नन्दी** ॥१४॥

**१६. धूञ् कम्पने ।** धुनाति, धुनीते । **स्वरतिसूति** (७।२।४४) इति वेट्—विधोता विधविता । **धूञ्प्रीञोर्नुक्** (७।३।३७ वा०)—विधूनयति । **स्तुसुधूञ्भ्यः परस्मैपदेषु** (७।२।७२)—अधावीत् । धूनः । धूनिः । स्वादौ **धूञ्धुञौ** (५।१० पाठान्तरे) धूनोति, धुनोति । अवधूतः, विधुतः । चुरादौ (१०।२२४) धूनयति । तुदादौ **धू विधूनने** (६।९८)—धुवति ॥१५॥

**१७. शॄञ् हिंसायाम् ।** शृणाति, शृणीत । शीर्यते । शीर्णः । शीर्णिः । **शॄदॄप्रां ह्रस्वो वा** (७।४।१२)—विशशरुः विशश्रुः । **लषपतपद** (३।२।१५४) इत्युकञ्—विशारुकः । **शॄवन्द्योरारुः** (३।२।१७३)—शरारुर्हिंस्रः । उणादौ शरारिराटिः[1] । **किंजरयोः श्रिणः** (उ० १।४)—किंशारुर्धान्यशूकम् । **शॄस्वृस्निहि** (उ० १।१०) इत्युः—शरुर्हिंस्रः[2] । **आङ्परयोः खनिशॄभ्यां डिच्च** (उ० १।३३)—परशुः । **शृणातेर्ह्रस्वश्च** (उ० १।१२६) गश्च नुट् च—शृङ्गम् । शृङ्गारः, (द्र० उ० ३।१३६) शिशिरम् (द्र० उ० १।५३) । शरोऽचि (द्र० ३।१।१३४) । शरणम् । **गण् शकुनौ** (उ० १।१२७)—शार्ङ्गः[3] । **शॄदॄभसोऽदिः** (उ० १।१३०)—शरद् । **कॄगॄशॄदॄभ्यो बः**—(उ० १।

१. द्र० हैम धातुपारायणम् ९।२४॥

२. 'वज्रम्' पाठा० । ३. 'शारङ्गः' इत्यपपाठः क्वचित् ।

११५)—शर्वः । **कॄगॄशॄवॄञ्चतिभ्यः ष्वरच्** (दश० उ० ८।४७)—शर्वरी । **सृशॄभ्याम् च** (तु० दश० उ० ७।६)—शूर्पः । **शिरः करन्** (दश० उ० ८।७०) — शर्करा । **शॄपॄभ्यां किद्** (द० उ० ९।१०)—इतीषन्—शिरीषम् । **मनिन्**(दश० उ० ६।७३) —शर्म । **शॄपॄवॄञां द्वे रुक् चाभ्यासस्य** (उ० ४।१९)—शर्शरीका । **कॄगॄपॄकटि** (उ० ४। ३०) इतीरन्—शरीरम् । असुन् कित् (द्र० उ० ४।१९४) शिरः । **कॄगॄशॄपॄकुटिभिदिछिदिभ्यश्च**—(उ० ४।१४३) इतीन् कित्—शिरिः । **शिरः**[1] **शकुनौ** (तु० दश० १।५६ कपाठः) इण् शारिः, शारिका । **ॠदोरप्** (३।३।५७)—शरः । **शॄ वायुवर्णनिवृतेषु** (३।३ २१ वा०) घञ्—शारो वर्णो वायुश्च । नीशारो हिमानिलापहं वस्त्रम्—**गौरिवाकृतनीशारः प्रायेण शिशिरे कृशः**[2] ॥१६॥

१८. **पॄ पालनपूरणयोः** । पृणाति । **शॄदॄप्रां ह्रस्वो वा** (७।४।१२)—निपपरुः निपप्रुः । **ॠदोरप्** (३।३।५७)—परः । **वा दान्तशान्त** (७।२।२७) इति ण्यन्तात् पूर्णः पूरितः । **न ध्याख्यापॄमूर्छिमदाम्** (८। २।५७)—पूर्तः, पूर्तिः । **पूरी आप्यायने** (४।४३) इत्यस्मात् पूर्ण । **भ्राजभास** (३।२।१७७) इति क्विप्—पूः । **पॄभिदि** (उ० १।२३) इति कुः—पुरु बहु । **पुरः कुषन्** (उ० ४।७४)—पुरुषः । **अर्तिपॄवपि**—(उ० २।११७)इत्युसिः - परुः पर्व । **धापॄवस्यज्यतिभ्यो न** (उ० ३।६)—पर्णम् । **शॄपॄभ्यां कित्** (दश० उ० ९।१०)—पुरीषम् । **पॄकलिभ्याम्** (दश० उ० ९।१५) उषच्—परुषम् । **स्नामदि** (उ० ४। ११३) इति वनिप्—पर्व । जुहोत्यादौ (३।४) पिपर्ति, चुरादौ **पॄ पूरणे** (१०।१५)—पारयति ॥१७॥

१९. **मॄ हिंसायाम्** । मृणाति ॥१८॥

२०. **वॄ**[3] **भॄ भरणे**[3] । वृणाति, भृणाति ॥१९, २०॥

---

१. दशपाद्याः कपाठे 'शरः' पाठः । अन्यत्र श्रः । परन्तु शर्करासाधके दशपादीपाठे 'शिरः करन्' (८।७०) इत्यत्र 'शिरः' इत्येव पठ्यते ।

२. काशिकायां (३।३।२१) उद्धृतमिदं पद्यार्धम् ।

३. अत्र 'वॄ वरणे' इत्यन्येषां पाठः । पुरुषकारस्त्वाह—'वॄ वरणे' वॄञ् वरणे.........तत्र चाद्यं पवर्गतृतीयादि बहवः पठन्ति । बॄ भरण इति स्वामिशाकटायनौ' इति (पृष्ठ ४१) । आद्यमित्यस्यार्थः 'वॄ वरणे' इत्यस्य स्थाने

**२१. भृ भर्जने च**' । भर्जनं पाकः[1] ॥

२२. **दॄ विदारणे** । दृणाति । दीर्णः दीर्णिः । विददरुः विदद्रुः । **अत् स्मृदॄत्वर** (७।४।९५) इति व्यददरत् । **दॄसनिजनि** (उ० १।३) इति ञुण्—दारुः । **कॄगॄशॄदॄभ्यो वः** (उ० १।१५५)—दर्वः । **शॄदॄभसोऽदिः** (उ० १।१३०)—दरदो देशः । **दरद् ईषदर्थेऽव्ययम्** । **तस्य दरेति प्राकृते अपभ्रंशः** । **स एव कविभिर्भ्रान्त्या** प्रयुक्तः—**दरदलितहरिद्रा (विद्धशालभञ्जिका ३।१७) इति** । **कॄवॄतॄदारिभ्य उनन्** (दश० उ० ५।५२)—दारुणः । **वॄदॄभ्यां विन्** (दश० उ० १।२३)—दर्विः । **दृणातेर्ह्रस्वश्च** (तु० उ० ४।१८३) इति तिप्—दृतिः । **उदि दृणातेरलचौ पूर्वपदान्तलोपश्च** (दश० उ० ८।९७ कपाठः)—उदरम् । **फर्फरीकादयश्च** (उ० ४।२०)—दर्दरीकम् । पचादौ (गण० ३।१।१३४) दरट्, दरी । पृषोदरादौ (द्र० ६।३।१०९) दर्दरो वाद्यभाण्डम् । दर्दुरः । घटादौ । **दॄ भये**—(१।५४५) दरति, दरयति । अस्माद् दारयति ॥२१॥

२३. **जॄ वयोहानौ** । जृणाति । जीर्णः जीर्णिः । दिवादौ (४।२०) जीर्यति ॥२२॥

२४. **नॄ नये** । नृणाति । नीर्णः, [नीर्णिः] । घटादौ (१।५४६) नरयति । नरोऽचि (द्र० ३। ।१३४) । **नृनरयोर्वृद्धिश्च** (४।१।७३ गणसूत्र)—नारी ॥२३॥

२५. **कॄ हिंसायाम्** । कृणाति । कीर्णः । तुदादौ **कॄ विक्षेपे** (६।१११)—किरति ॥१४॥

२६. **ॠ गतौ** । ऋणाति । समीर्णः । ईर्यते । अरिरिषति, अरिरीषति, ईर्षिषति ॥२५॥

२७. **गॄ शब्दे** । गृणाति । गीर्णः । गीर्णिः । उज्जगार । अगारीत् ।

---

'वृ वरणे' इति । धातुवृत्तिकारस्तु पुरुषकारवचनमुद्धृत्याह—'तत्राद्यशब्देन ञित् वृणातिरुच्यते । स्वामिशाकटायनावप्येव पठित्वा भरणार्थत्वमाहतुः;' इति (धातुवृत्तौ पृष्ठ ३६८) । क्षीरतरङ्गिण्यां मुद्रितशाकटायनधातुपाठे चोभयत्र' दन्त्योष्ठ्यादिः पाठ एवोपलभ्यते ।

१. उद्धृतमिदं पुरुषकारे (पृष्ठ ३६), तत्र 'पाकः' इत्यस्य स्थाने 'पाकम्' इति पाठः ।

**कॄग्रोरुच्च** (दश० उ० १।१०९) गुरुः । तुदादौ **गॄ निगरणे**(६।११२) गिरति ।।१६।।

२८. **उदात्ताः** ।

२९. **ज्या वयोहानौ** । इतो नवानिट् । **ग्रहिज्यावयि** (६।१।१६) इति सम्प्रसारणम्—जिनाति, सम्प्रसारणस्य दीर्घः (द्र० ६।४।२), **प्वादीनां ह्रस्वः** (७।३।८०) । जीनः । **जीनिरिति दुर्गः, नन्दी** त्वाह —क्तिनि प्राप्ते **ग्लाम्लाज्याहाभ्यो निः** (३।३।९४ वा०)—ज्यानिः, **वीज्याज्वरिभ्यो निर् उणादौ** (उ० ४।४८) । **कविधौ प्रसारिभ्यो डः** (द्र०३।२।३ वा०)—ब्रह्मज्यः । उणादौ नक्(द्र०उ०३।२)—**जिनः** । **ल्यपि च, ज्यश्च** (६।१।४१,४२)—प्रज्याय ।।२७।।

३० **व्ली वरणे** । व्लिनाति । **अर्तिह्रीव्ली** (७।३।३६) इति पुक् —व्लेपयति ।।२८।।

३१. **री गतिरेषणयोः** । रेषणं हिंसा । रिणाति । रीणः । रेपयति । दिवादौ **रीङ् स्रवणे** (४।२८)—रीयते ।।२९।।

३२. **ली श्लेषणे** । लिनाति । लीनः । दिवादौ (४।२९)लीयते । चुरादौ **ली द्रवीकरणे** (१०।२०६)—घृतं विलीनयति ।।३०।।

३३. **वृत्** । ल्वादयः प्वादयश्च वर्तिताः ।।

३४. **ल्वी गतौ** । ल्वीनाति ।।३१।।

३५. **व्री वरणे** । व्रीणाति ।[1] व्रीतः । उणादौ व्रीहिः[2] ।।३२।।

३६. **भ्री भरणे** । भ्रीणाति । भ्रीतः ।।३३।।

३७. **क्षिष् हिंसायाम्** । क्षिणाति । अङ् (द्र० ३।३।१०४)—क्षिया । स्वादौ (५।३३ पाठा०) क्षिणोति, भ्वादौ (१।१४९)क्षयति, तुदादौ (६।१०८) क्षियति ।।३४।।

३८. **ज्ञा अवबोधने** । **ज्ञाजनोर्जा**(७।३।७९)—जानाति,जानीते ।

---

१. एतद्धातुव्याख्याने सायण आह—'स्वामिकाश्यपादयो "अर्तिह्रीव्री" इति पठन्तो व्रेपयतीति पुक प्रतिपन्नाः । (धातुवृत्ति पृष्ठ ३७०) । क्षीरतरङ्गिण्यां त्वत्र नैतादृशः पाठ उपलभ्यते । अत्र तु पूर्व व्ली वरणे (३०) धातावेव व्लेपयतीत्युदाह्रियते ।

२. द्र० हैमोणादि ७१० ।

**अनुपसर्गाज् ज्ञः** (१।३।७६) उभयम्, नेह—**अवजानासि मां मूढ ? अपह्नवे ज्ञः** (१।३।४४) तङ्—शतम् अपजानीते। **सम्प्रतिभ्यामनाध्याने** (१।३।४६) संजानीते, प्रतिजानीते। **ज्ञाश्रुस्मृदृशां सनः** (१।३।५७) तङ्—जिज्ञासते। **नानोर्ज्ञः**—(१।३।५८)—पुत्रमनुजिज्ञासति। **ज्ञोऽविदर्थस्य करणे** (१।३।५८) षष्ठी—सर्पिषो जानीते। **वान्यस्य संयोगादेः** (६।४।६८) एत्वम्—ज्ञेयात्। ज्ञायात्। **मारणतोषण** (१।५४८) इति मित्—संज्ञपयति। **सनीवन्तर्ध** (७।२ ४९) इति वेट्—जिज्ञपयिषति, अनिट्पक्षे **आप्ज्ञप्यृधामीत्** (७।४।५५) ज्ञीप्सति। **इगुपधज्ञा** (३।१।१३५) इति कः—ज्ञः। **प्रे दाज्ञः** (३।२।६)—पथिप्रज्ञः। **वा दान्तशान्त** (७।२।२७) इति[1] संज्ञप्तः, सज्ञपितः। **आतश्चोपसर्गे** (३।३।१०६)—प्रज्ञा। ज्ञायते—ज्ञातिर्बन्धुः। ज्ञानं ज्ञाति[2]-रिति नास्ति, प्रसिद्धेनापहृतत्वात् ॥३५॥

३९. **अनुदात्ताः**।

४०. **बन्ध बन्धने**। ४१. **अनुदात्त उदात्तेत्**। बध्नाति। बधान—**हलः श्नः शानज्झौ** (३।१।८९)। अभान्त्सीत्—**एकाचो बशो भष् झषन्तस्य स्ध्वोः** (८।२।३७)। बन्धकी। उलूकादौ (द्र० उ० ४।४१) बन्धूकम्। **शृस्वृस्निहि** (उ० १।११) इति बन्धुः—**इषितिमिमदि**(दश० उ० ८।२६ कपाठः)इति किरच्—बधिरः। **बन्धेर्ब्रधिबुधि च** (दश० उ० ५।३८) इति नः—ब्रध्नः सूर्यः, बुध्नो मूलम्। **अधिकरणे बन्धः** (३।४।४१) णमुल्—हस्तबन्धं बद्धः। **संज्ञायां च**[3] (कातन्त्र कृत् ४५६) कुक्कुटीबन्धं बद्धः ॥३६॥

४२. **वृङ् संभक्तौ**। ४३. **उदात्तः**। संभक्तिः संसेवा। वृणीते।

---

१. इतोऽग्रे 'विज्ञप्तः' इत्यधिक क्वचित्।

२. भावे क्तिन् न भवतीत्यर्थः।

३. लिबिशेनात्र पाणिनीयसूत्रनिर्देश इति मत्वा चकारमाकृष्य मध्येऽष्टाध्यायीसूत्रसंख्या प्रदत्ता। क्षीरस्वामिनाप्यत्र पूर्व पाणिनिसूत्र निर्दिश्य तदनन्तरं स्मृतिभ्रान्त्या कातन्त्रसूत्रमुद्धृतम्। कातन्त्रे त्वित्थं सूत्रपाठः—'बन्धोऽधिकरणे च (४५५) संज्ञायां च' (४५६)। क्षीरस्वाम्यन्यत्रापि पाणिनिसूत्रप्रदर्शनावसरे स्मृतिभ्रान्त्या कातन्त्रसुत्रमुद्धरति।

वरिता वरीता,, **वृतो वा** (७।२।३८) दीर्घः। विवरिता[1] विवरीता। अवृत, अवरिष्ट,अवरीष्ट। वुवूर्षते, विवरिषते, विवरीषते। **जल्पभिक्ष** (३।२।१५५) इति षाकन् - वराकः। **वृङः एन्यः** (तु० दश० उ० ८। ३) वरेण्यः। वर्वरीका। **ग्रहवृदृनिश्चिगमश्च** (३।३।५८) अप्- वरः। स्वादौ **वृञ् वरणे** (५।६)—वृणोति, वृणुते ॥३७॥

४४. **श्रन्थ विमोचनहर्षयोः**[2]। इतो द्वादश[3] सेटः परस्मैपदिनश्च। श्रथ्नाति। श्रथित्वा श्रन्थित्वा[4]। **यक्चिणोः प्रतिषेधे श्रन्थग्रन्थब्रूञात्मनेपदाकर्मकाणाम् उपसंख्यानम्** (तु० ३।१।८९ वा०)—श्रथ्नीते माला स्वयमेव, अश्रन्थिष्ट। **श्रन्थिग्रन्थिदन्भिस्वञ्जीनां**(तु० १।२।६ काशिका) लिटः कित्त्वं, एत्वं चोपसंख्यायते—श्रेथुः। चुरादौ **श्रन्थ ग्रन्थ संदर्भे** (१० २२६) वा णिच्- श्रन्थयति श्रन्थति। ग्रन्थयति ग्रन्थति। भ्वादौ **श्रथि शैथिल्ये, ग्रथि कौटिल्ये** (१।२९,३०)—श्रन्थते, ग्रन्थते ॥३८॥

४५. **मन्थ विलोडने**। मथ्नाति। भ्वादौ (१।३७) मन्थति, तथा **मथे विलोडने** (१।५८४)—मथति ॥३९॥

४६. **ग्रन्थ सन्दर्भे**। संदर्भो बन्धनम्[5]। ग्रथ्नाति। ग्रन्थनम्। श्रथ्नातिवद्[6] उदाहार्यम् ॥४०॥

---

१. सर्वहस्तलेखेषु पठ्यते।

२. 'हर्षनयोः' 'प्रहर्षनयोः' प्रतिहर्षनयो पाठान्तराणि।

३. 'द्वादशः' सर्वहस्तलेखेषु। 'द्वाविंशतिः' इति युक्तः पाठः।

४. 'नोपधात्थफान्ताद्वा' (१।२।२३) किद्विकल्पः।

५. अत्र तरङ्गिण्यां पाठभ्रंशः प्रतीयते। तथा ह्याह पुरुषकारः—'संदर्भे श्रथनक्रियायां श्रन्थग्रन्थधातू वर्तेते इति क्षीरस्वामी' (पृष्ठ ७९) अत्र 'श्रथनक्रियायाम्' इत्यस्य स्थाने ग्रन्थनक्रियायाम्' पाठो द्रष्टव्यः। इद पुरुषकारवचनं सायणोऽप्युदाजहार—'पुरुषकारेऽपि·········सन्दर्भे ग्रथनक्रियायां श्रन्थिग्रन्थिधातू वर्तेते इति क्षीरस्वामीत्युक्तम्' (धातु० पृष्ठ ३७३)। स्वयं क्षीरस्वाम्यपि भ्वादौ "क्र्यादौ श्रन्थ ग्रन्थ संदर्भे" (१।३०) इत्याह। तेनात्र 'श्रन्थ ग्रन्थ सन्दर्भे' इति क्षीरस्वामिनः पाठः स्यात्। अर्थभेदात् श्रन्थिः पुनरत्र पठितः। एवं 'सन्दर्भो बन्धनम्' इत्यस्य स्थाने 'सन्दर्भो ग्रन्थनम्' इति स्यात्।

६. 'श्रन्थिवत्' पाठा०।

४७. **कुन्थ श्लेषणे**[1]। कुथ्नाति। कुन्थित्वा कुथित्वा। कुथो हस्तिपल्याणम्। कुथा। **कुथि** इति **दुर्गः** ॥४१॥

४८. **मृद क्षोदे**। मृद्नाति। मृद्यते—मृत्। **मृदस्तिकन्** (५।४।३९)—मृत्तिका। **मृडमृद** (१।२।७) इति क्त्वा कित्—मृदित्वा।४२।

४९. **मृड सुखने**। मृड्नाति। मृडित्वा। तुदादौ (६।३९) मृडति। मृडः। मृडीकं हिरण्यम् ॥४३॥

५०. **गुध रोषे**। गुध्नाति। गुधित्वा। **गुधेरूमः** (उ० ५।२) गोधूमः। भिदादौ—(द्र० ३।३।१०४) गोधा तलत्राणम्[2]। दिवादौ **गुध परिवेष्टने** (४।१२) गुध्यति ॥४४॥

५१. **कुष निष्कर्षे**। निष्कर्षो बहिष्करणम्। कुष्णाति। कर्मकर्तरि **कुषिरजोः प्राचां श्यन् परस्मैपदं च** (३।१।९०)—कुष्यति पादः स्वयमेव। **निरः कुषः** (७।२।४६) इड् वा—निष्कोषिता निष्कोष्टा, निरकोषीत् निरकुक्षत्। **इण् निष्ठायाम्** (७।२।४७)—निष्कुषितः। **मृडमृद** (१।२।७) इति क्त्वा कित्—कुषित्वा। **हनिकुषि** (उ० २।२) इति क्थन्—कुष्ठम्। **उषिकुषि** (उ० २।४) इति थन्—कोष्ठम् उदरम्। बाहुलकात् (३।३।१) प्रकोष्ठो विस्तृतकरः। **उचिकुसिकुषिभ्यः कितन्**[3] (दश० उ० ६।२१ कपाठः) कुषितम्। **प्लुषिशुषिकुषिभ्यः क्सिः** (दश० उ० १।११) कुक्षिः। **कुठिकुषिभ्यां काकुः** (दश० उ० १।१५० कपाठः) कुषाकुः ॥४५॥

५२. **क्षुभ संचलने**। क्षुभ्नाति, क्षुभ्नादित्वात् (द्र० ८।४।३९) णत्वाभावः। **क्षुब्धस्वान्त** (७।२।१८) इति क्षुब्धो मन्थश्चेत्, क्षुभितोऽन्यः। अक्षोभीत्। दिवादौ (४।१३०) क्षुभ्यति, अक्षुभत्। भ्वादौ (१।४९९) क्षोभते ॥४६॥

---

१. अत्राह पुरुषकारः—'संश्लेषणे संश्लेषणक्रियायाम् इति क्षीरस्वामी' (पृष्ठ ७७)। स्वयं स्वामिना १।३७ धातुसूत्रव्याख्याने 'क्र्यादौ कुन्थ सश्लेषणे' इत्युच्यते। तेनात्र पाठ भ्रंशः संजातः स्यात्।

२. 'गोधातले ज्याघातवारणे इत्यमर. (२।८।८५)।

३. अत्र लिबिशेन मूलोणादिसूत्रसंख्यामनिर्दिश्य हैमोणादिसूत्रसंख्या २१२ तुलनार्थं निर्दिष्टा।

**५३. णभ तुभ हिंसायाम्** । प्रणभ्नाति । दिवादौ (४।१३१) नभ्यति । द्युतादौ (१।५००) नभते । तुभ्नाति । तुभ्यति (४।१३१) । तोभते (१।५००) ॥४७, ४८॥

**५४. क्लिशू विबाधने** । क्लिश्नाति । क्लेष्टा क्लेशिता । **क्लिशः क्त्वानिष्ठयोः** (७।२।५०) वेट्–क्लिष्ट्वा क्लिशित्वा, क्लिष्टः क्लिशितः । दिवादौ (४।५०) क्लिश्यति । क्लेशः, कीनाशः ॥४९॥

**५५. अश भोजने** । अश्नाति । अशिता । **उपेयिवाननाश्वाननूचानश्च** (३।२।१०९) इत्यनाश्वान् साधुः । **आशितः कर्ता** (६।१।२०७) आद्युदात्तः । घञ् (द्र० ३।३।१२१) – **समाशा गोमता जिताः**[1] । **इण्यशिभ्यां तकन्** (उ० ३।१४८)—**अष्टका** । **अशिपणाय्यो रुग्लुकौ च** (दश० उ० १।६१ कपाठः) अश्रि । स्वादौ **अशू व्याप्तौ** (५।२१) —अश्नुते । तत्रैव ग्रहणानि ॥५०॥

**५६. उध्रस उञ्छे** । ध्रस्नाति[2] । ध्रस्त्वा ध्रसित्वा चुरादौ (१०।१९१) ध्रासयति ॥५१॥

**५७. इष आभीक्ष्ण्ये** । आभीक्ष्ण्यं पौनःपुन्यम् । इष्णाति । एषित्वा । प्रेषितः । दिवादौ **इष गतौ** (४।१७) - अन्विष्यति । तुदादौ **इषु गतौ** (६।५८)– इच्छति, इष्ट्वा एषित्वा, **तीषुसह** (तु० ७।२।४८) इत्यस्यैव ग्रहणम्[3] – इष्टः । अतो **यस्य विभाषा** (७।२।१५) इत्यस्य (६।५७) निषेधो नास्ति—प्रेषितः ॥५२॥

**५८. विष विप्रयोगे** । विष्णाति विषम् । जुहोत्यादौ **विष्लृ व्याप्तौ** (३।१४)—वेवेष्टि, अविषत् ॥५३॥

---

१. 'मिष्टाशा गोमता जिता' इति विदुरनीतौ ।

२. यथा तु पुरुषकारे (पृष्ठ ११८, ११९) धातुवृत्तौ (पृष्ठ ३७४) च पाठ उद्धृतस्तथात्र 'उध्रस्नाति उध्रसांचकार' इत्यादि पाठेन भाव्यम् । चुरादौ (१९१) स्वयं वक्ष्यति क्षीरस्वामी—'उः प्रयोगसमवायीत्येके— उध्रासयति, उध्रस्नाति । उभयत्रापि उत्पूर्व इत्यन्ये—उद्ध्रासयति, उद्ध्रस्नाति इति तदप्यत्रानुसन्धेयम् ।

३. 'इषेश्छत्वमहलीति वक्तव्यम् । इह माभूद् इष्यति इष्णाति' इतिभाष्यात् (७।३।७७) । द्र० पुरुषकारः पृष्ठ १०० । एतेन छत्वविधायके सूत्रे (७।२।४८) 'तीषसह' इत्येवार्षः पाठः ।

**५९. प्रुष प्लुष स्नेहसेचनपूरणेषु** । प्रुष्णाति । प्रुषितः । विप्रुट् । प्लुष्णाति । भ्वादौ (द्र० १।४६३) प्रोषति, प्लोषति, दिवादौ **प्लुष दाहे** (४।७,११०) - प्लुष्यति ॥५४,५५॥

**६०. पुष पुष्टौ** । पुष्णाति । पोषिता । दिवादौ (४।७३)पुष्यति; पोष्टा, पुष्करं पुष्कलम् । भ्वादौ (१।४६२) पोषति ॥५६॥

**६१. मुष स्तेये** । मुष्णाति । **रुदविद** (१।२।८) इति मुषित्वा, मुमुषिषति । मुषितः । **मुषेर्दीर्घश्च**(उ० २।४२)इति किकन्—मूषिकः, मूषिका । **सृवृभूशुषिमुषिभ्यः कित्** (दश० उ० ३।१९)—मुष्कोऽण्डः फलं [च] ॥५७॥

**६२. खव भूतप्रादुर्भावे** । अतिक्रान्तोत्पत्तौ । खव्नाति ।[1] **च्छ्वोः शूड्** (६।४।१९) इति खौनातीति[1] **सभ्याः** । खविता । खौः । **खच** इति **दौर्गाः** ॥५८॥

**६३. हेठ च** । खवार्थे । हेठ्नाति । भ्वादौ **हेठ विबाधायाम्** (१।१६९)—हेठते ॥५९॥

**६४. उदात्ता उदात्तेतः** ।

**६५. ग्रह उपादाने** । **६६. उदात्तः स्वरितेत्** । उपादानं स्वीकारः । **ग्रहिज्यावयि** (६।१।१६) इति सम्प्रसारणम्—गृह्णाति, गृह्णीते । **ग्रहोऽलिटि दीर्घः** (७।२।३१)—ग्रहीता । चिण्वदिटो दीर्घो **नेष्यते** (द्र० ७।२।३७ भाष्यम्)—त्वया ग्राहिष्यते । अग्रहीत्, **ह्म्यन्तक्षण** (७।२।५) इति वृद्धिर्नास्ति । **रुदविद**(१।२।८)इति कित्—गृहीत्वा, जिघृक्षति । ग्रहादेर्णिनिः (द्र० ३।१।१३४)—ग्राही । **विभाषा ग्रहः** (३।१।१४३) णः—ग्राहः, ग्रहः । गेहे तु कः (द्र० ३।१।१४४)—गृहम् । **अच्प्रकरणे शक्तितोमरलाङ्गल** (तु० ३।२।९ वा०) इत्यच्—शक्तिग्रहः । **सूत्रे च धार्यर्थे** (३।२।९ वा०)—सूत्रग्रहः । **फलेग्रहि-**

---

१. अत्र धातुरूपे विप्रवदन्ते वैयाकरणा. । तद्यथा-खौनातीति कविकल्पद्रुमटीकायां दुर्गादासः (पृष्ठ १९८)। तत्रैव 'केचित्तु प्वादित्वाद् ह्रस्वे खुनातीत्याहुः । धातुपारायणस्तु खव्नातीत्युदाहरति । काशकृत्स्नधातुटीकायां 'खौनाति' इत्युक्तम् (पृष्ठ १८६; तत्र मुद्रण दोषात् 'खव्नाति' इत्यपमुद्रणम् । धातुवृत्तौ तु स्वामिमते 'खच्नाति' इत्युक्तम् (पृष्ठ ३७५) । तदत्र दौर्गमतेनो च्यते ।

**रात्मंभरिश्च** (३।२।२७)। **पदास्वैरिबाह्या** (३।२।११९) इति क्यप्—प्रगृह्यं पदम्, गृह्यकः पक्षी, ग्रामगृह्या सेना, अर्जुनगृह्या देवाः। **ग्रहवृदृ** (३।३।५८) इत्यप्—निग्रहः। **उदि ग्रहोः** (३।३।३५) घञ्—उद्ग्राहः। **समि मुष्टौ** (३।३।३६)—संग्राहो मल्लस्य। **अवे ग्रहो वर्ष-प्रतिबन्धे** (३।३।५१) वा—अवग्रहः, अवग्राहः। अवग्रहो हस्तिललाटे (तु० अमर० २।८।३८)। **प्रे वणिजाम्** (३।३।५२)—तुलायाः प्रग्राहः, प्रग्रहः। **रश्मौ च** (३।३।५३) प्रग्राहः प्रग्रहः। **आक्रोशेऽवन्योर्ग्रहः** (३।३।४५)—अवग्राहो ह ते वृषल भूयात्, निग्राहः। **प्रे लिप्सायाम्** (३।३।४६)—स्रुवप्रग्राहेण चरति द्विजो भिक्षार्थी। **परौ यज्ञे** (३ ३।४७)—उत्तरपरिग्राहं गृह्णाति। **अक्षेषु ग्लहः** (३।३।७०)। **तितुत्र** (७।२।९) इत्यत्र ग्रहादेर्निषेधात् (द्र० ७।२।९ वा०)—निगृहीतिः। **नाम्न्यादिशिग्रहोः**—(३।४।५८) णमुल्—नामग्राहं वक्ति। **ग्रहेरनिः** (उ० ५।६७)—ग्रहणिः प्रवाहिका ॥६०॥

**भट्टक्षीरस्वाम्युत्प्रेक्षितधातुवृत्तौ**
**क्षीरतरङ्गिण्यां**
**क्र्यादिगणः**
**सम्पूर्णः ॥**[1]

---

१. 'इति क्षीरतरङ्गिण्यां धातुवृत्तौ क्र्यादिर्गणः सम्पूर्णः' पाठा०।

# ॥ अथ चुरादिगणः ॥

व्याख्यातेयं नवगणी कुशकाशावलम्बनात्,
चुरादिरधुनारब्धो यत्र भग्ना महारथाः ।
पाठेऽर्थे [1]चागमभ्रंशान्महतामपि मोहतः[2],
न विद्म· किं नु जहिम[3]; कि वात्रादध्महे[4] वयम्[5] ॥

१. **चुर स्तेये । चुरादिभ्यो णिज्** (३।१।२५) इति स्वार्थे णिच् **स्वरितेत् स्याद् ग्रहिः ऋयादौ, लक्षिश्चैकश्चुरादिषु**[6] इति लक्षेः (१०।५) स्वरितेत्त्वस्मरणाण् **णिचश्च** (१।३।७४) इति – कर्त्रभिप्राये क्रियाफले तङ् नास्ति । **चन्द्रस्त्वत्राप्युभयपदित्वमाम्नासीत्, णिज्-विकल्पं च**[7] । चोरयति । प्रत्ययान्ताद् (द्र० ३।१।३५) आम् – चोरयांचकार, अचूचुरत् । चोरयन्तं प्रयुक्तवानिति ण्यन्तादपि णिच्य-चूचुरदित्येव । **क्वि-लुग्-उपधात्व-चङ्पर-निर्ह्रास-कुत्वेषूपसंख्यानम्** (१।१।५८ वा०) इति स्थानिवत्त्वनिषेधाण् णौ णिलोपे ऽग्लोपित्वा-भावान् **नाग्लोपिशास्वृदिताम्** (७।४।२) इति **णौ चङ्युपधाया** (७।४।१) ह्रस्वनिषेधो नास्ति । पचादौ (गण० ३।१।१३४) चोरट्, चोरी । प्रज्ञादित्वात् (द्र० ५।४।३८) चौरः । छत्रादिपाठात् (गण०

---

१. 'वागम०' पाठा० । 'पाठे चार्थे चात्र संभ्रशा०' इति भूर्जपत्रलिखिते हस्तलेखे पाठः । द्र० भण्डारकरशोधप्रतिष्ठान पूना, सूचीपत्र सन् १९३८, पृष्ठ १७५ । २. अनेन चरणेन चुरादौ पाठभ्रंशबाहुल्य प्रदर्श्यते ।

३. 'किं जहीमोऽत्र किं' पाठान्तरम् पूर्वोक्ते हस्तलेखे ।

४. 'दद्महे' पाठान्तरम् ।

५. 'न विद्म. किञ्जिहीमोऽत्र वा किमुपादद्महे वयम्' पाठान्तरं प्रौढमनो-रमाया (पृष्ठ ६१६), प्रक्रियाकौमुद्या (पृष्ठ २९१) च ।

६. अनुपलब्धमूलमिदम् । अस्य सार्ध चरण सायणोऽपि सस्मार (द्र० चुर धातौ, पृष्ठ ३७७) ।

७. सस्मार धातुवृत्तिकार (पृष्ठ ३७७, ३७८) । काशकृत्स्नधातुकन्नड-टीकायां परस्मैपदमेवोदाह्रियते ।

४।४।६२) णो वा । **णेऽप्यणकृतं क्वचिद्** (तु० परिभाषावृत्ति ७६) इति चौरी, तापसी । भिदादित्वात् (गण० ३।३।१०४) चुरा । **ण्यासश्रन्थो युच्** (३।३।१०७)—चोरणा । **एरज् अण्यन्तानाम्**[१] इति घञ् प्रतिसूयते—चोरः ॥१॥

२. **चिति स्मृत्याम्** । चिन्तयति । **चिन्तिपूजि** (३।३।१०५) इत्यङ्—चिन्ता । इदित्पाठाद् **अनित्यण्यन्ताश्चुरादय** इति ज्ञाप्यते, अन्यथा णिलोपस्य स्थानिवत्त्वाद् **अनिदितां हल उपधायाः क्ङिति** (६।४।२४) इति नलोपस्याप्रसंगाच्चिन्त्यादयो नुमनुषक्ता एव पठ्येरन्, लक्ष्याच्चानित्यत्वं नियतविषयम् । यथा—**महीपतिवचः श्रुत्वा जुघुषुः पुष्यमाणवाः** (तु० ७।२।२३ भाष्यम्) ॥२॥

३. **यत्रि संकोचने** । नियन्त्रयति; यन्त्रणा ॥३॥

४. **स्पुडि परिहासे** । स्पुण्डयति । **स्फुटि** इति **दुर्गः**—स्फुण्टयति । **स्फुडि परिघात** इति **एके** ॥४॥

५. **लक्ष दर्शनाङ्कनयोः** । अङ्कनं चिह्नम् । [२]**लक्षिश्चेष्टश्चुरादिषु**[३] इति स्मृतेः स्वरितेत्—लक्षयते, लक्षयति । लक्षणा, लक्षणम् । **लक्षेर्मुट् च** (उ० ३।१६०) इतीः—लक्ष्मीः । **शम लक्ष आलोचने** (१०।१४३) इत्याकुस्माद् आत्मनेपदार्थः पाठः—लक्षयते ॥५॥

६. **कुद्रि अनृतभाषणे** । कुन्द्रयति । **गादिः पारायणे**—गुन्द्रा भद्रमुस्ता । **ऋदिदित्येके**[४] ॥६॥

७. **लड उपसेवायाम्** । लाडयति, उपलालयति[५] पुत्रम् । लालना[५] । **नान्ये मितोऽहेतौ च** (१०।८०) इति मित्त्वं नास्ति । भ्वादौ **लड विलासे** (१।२५०) त्वनेकार्थत्वाज् **जिह्वोन्मथनयोर्लडिः** (१।५५१) इति मित्—लडयति ॥७॥

८. **मिदि**[६] **स्नेहने** । मिन्दयति । मिन्दः कुष्ठी । **मिद**[६] इति **कौशिकः**—मेदयति ॥८॥

---

१. द्र० पृष्ठ ३८, टि० २ । २. 'लक्षिरेकश्चु०' पाठा० ।

३. पूर्वं स्मृतः (१०।१) । ४. उद्धृतं धातुवृत्तौ (पृष्ठ ३७९) ।

५. डलयोरेकत्वस्मरणात् । द्र० पृष्ठ ६१ टि० २ ।

६. अत्र पुरुषकारे धातुवृत्तौ त्वऽन्यथा स्वामिपाठ उदाह्रियते । तद्यथा—

९. **ओलडि उत्क्षेपे**[1] । ओलण्डयति भारम् । ओलण्डितः । **तथा लण्डिः**[2] इति स्मरणाद् ओदित्त्वं नास्ति । अन्ये त्वनित्यण्यन्तत्वात् निष्ठानत्वार्थम् (द्र० ८।२।४५) ओ इत्यनुबन्धमाहुः—लण्ड्नः । **दौर्गास्तु** क्ते लण्डिन इत्युदाजह्रुः, तच्च पापात् पापीयः, अव्यवहितस्य नत्वाद् । अन्यथा विन्नादिवद् विदितादौ नत्वं स्यात् । **चान्द्रा** लन्दि[3]मप्याहुः—अवलन्दयत्युष्ट्रम् । **इत्थं लक्षणमलक्षयताम् अन्धकुवकुटीन्यायेन लक्ष्यमनुसरतां कियदिव रुष्यामः, कियदिव[4] तुष्यामः ?** ॥९॥

१०. **जल अपवारणे** । जालयति । जालकः । जालम् । **लज** इति **नन्दी**—लाजयति, लाजाः । **चान्द्रा** उभयमप्येतन्नेषुः, **जल घात्ये** (१।५७०), **लज लाजि** (१।१५१,१५२) इत्याभ्यां सिद्धेः । ज्वलादौ **जल घात्ये** (१।५७०)—जलति जालम्, जलम् ॥१०॥

११. **पीड गहने** । गहनं बाधा । पीडयति । क्तिनं बाधित्वा युचि प्राप्ते (द्र० ३।३।१०७) भिदादित्वात् (गण० ३।३।१०४)पीडा । **भ्राजभासभाषदीप** (७।४।३) इत्यपिपीडत् अपीपिडत् । **पीड अवगाहन** इति **दुर्गः**—तिलपीडकः ॥११॥

१२. **नट अवस्यन्दने** । अवस्यन्दनं भ्रंशनम् । **नाटक्राथपिषाम्** (२।३।५६) इति चौरस्योन्नाटयति । नाटकः । भ्वादौ घटादौ **नट नतौ** (१।५२८)—नटयति शाखाम् । **नट नृतौ** (१।२०६)—नटति नाटयति । **नड** इति **नन्दी**—नडः, नाडी प्रणाली[5] ॥१२॥

---

'क्षीरस्वामी तु मिद स्नेहने मेदयति इत्युक्त्वा कैश्चिदिदित् पठ्यत इत्याह' (पुरुषकार पृष्ठ १००) । 'क्षीरस्वाम्यनिदित पठित्वा कैश्चिदिदितं पठ्यत इत्याह' इति (धातुवृत्ति पृष्ठ ३७९) ।

१. 'उत्क्षेपणे' पाठा० ।

२. भ्रष्टोऽयं पाठः । अय सम्पूर्णः श्लोको भूधातौ (पृष्ठ ६) पठ्यते । तत्रापि चतुर्थचरणस्य पाठो महान्. भ्रष्टः । तत्रैव टिप्पण्यामस्माभिः चतुर्थचरणस्य 'स्मर्यते नेत् तथौलडेः' इति शुद्धः पाठ ऊहितः । तदनन्तरमस्मदूहित एव पाठ. पुरुषकारेणोद्धृत उपलब्धः (पुरुष० पृष्ठ ११९) । अत्र षष्ठ (६) पृष्ठस्था प्रथमा टिप्पण्यपि द्रष्टव्या ।

३. मुद्रिते चान्द्रधातुपाठे नोपलभ्यते ।

४. 'कियद्वा' पाठा० ।

५. डलयोरेकत्वस्मरणादिति नियमेन ।

१३. **श्रथ प्रतिहर्षे । श्राधृषाद्वा** (१०।२०१) इत्यत्र **श्रथ हिंसायाम्** (१०।२१६) इति सिद्धिः, इह पाठाद् रूपान्यत्वम्—श्राथयते । **नन्दी क्रथ** इत्याह—**क्राथपिषाम्** (२।३।५६) इति चौरस्योत्क्राथयति ॥१३॥

१४. **बध संयमने ।** बाधयति, अबीबधत् । भ्वादौ **बाधृ रोटने** (१।६)—बाधते, अबबाधत् । **बन्ध** इति **चान्द्राः**[1] –बन्धयति, बन्धति । क्र्यादौ (९।४०) बध्नाति ॥१४॥

१५. **पॄ पूरणे** । पारयति, पार्यते । **अनुपसर्गाल्लिम्पविन्द**(३।१।१३८) इति शः—पारयः । ह्वादौ (३।४) पिपर्ति, क्र्यादौ (९।१८) पृणाति । **पृ** इति **दुर्गः**[2]– पारः॥१५॥

१६. **ऊर्ज बलप्राणनयोः** । प्राणनं जीवनम् । ऊर्जयति । ऊर्जनम्, ऊर्जस्विनि (?, ऊर्जस् इति )[3] प्राप्ते **भ्राजभास** (३।२।१७७) इति क्विप्—ऊर्क्, ऊर्जस्विन् (द्र० ५।२।११४) इति निपातनाद् असन्तोऽप्यस्ति ॥१६॥

१७. **वर्ण वर्णने** । वर्णयति । **पक्ष परिग्रह इत्येके**[3] । पक्षयति ।१७

१८. **चूर्ण प्रेरणे** । प्रेरणं दलनम् । चूर्णयति । **चूर्ण पेषण** इति **चन्द्रः**[4] ॥१८॥

१९. **पर्थ प्रक्षेपणे** । पर्थयति । **पृथ इत्येके**[5] ॥१९॥

२०. **साम्ब**[6] **संबन्धे** । साम्बयति । साम्बः । **चन्द्रः शम्ब** इत्याह[7] —शम्बलम् ॥२०॥

२१. **भक्ष अदने** । भक्षयति । **शीलिकामिभक्ष्याचरिभ्यो णः** (३।२।१ वा०)—मांसभक्षा । भक्षतेर्घञ्—भक्षः ॥२१॥

---

१. मुद्रिते चान्द्रधातुपाठे नास्ति । धातुवृत्तिकारोऽपि चन्द्रनाम्ना उद्धरतीमं पाठम् । २. स्मृतं पुरुषकारे (पृष्ठ ४१) ।

३. द्र० क्षीर० १।४४७ (पृष्ठ ९८) ।

४. नैव पठ्यते मुद्रिते चान्द्रधातुपाठे ।

५. धातुवृत्तौ स्वामिनाम्ना 'पथ इत्येके' इति पाठ उद्ध्रियते(पृष्ठ३८०)।

६. साम्ब इति केचिद्' इत्येवं स्मर्यते धातुवृत्तौ (पृष्ठ ३८०) ।

७. 'शम्ब इत्येके' इति स्वामिनाम्ना पठ्यते धातुवृत्तौ (पृष्ठ ३८०) । चान्द्रधातुपाठे नोपलभ्यते धातुः ।

२२. **कुट्ट छेदनकुत्सनयोः**[1] । कुट्टयति । कुट्टनी । **जल्पभिक्षकुट्ट** (३।२।१५५) इति षाकन् —कुट्टाकः, इक्षुकुट्टाकः ।।२२।।

२३. **चुट्ट अल्पीभावे** । चुट्टयति । **पुट्ट इत्येके** । **दौर्गा** द्वावपि पेठुः, **चन्द्रो** नैकमपि ।।२३।।

२४. **सुट्ट अनादरे** । सुट्टयति । **चन्द्र**[2]**दुर्गौ** षोपदेशान् सुट्टादीन् मन्येते—सुषुट्टयिषति । **अट्ट** इति च **दुर्गः**—अट्टयति । अट्टो मञ्चः, अट्टं सिद्धमन्नम् ।।२४।।

२५. **लुण्ठ स्तेये** । लुण्ठयति । **जल्पभिक्ष** (३।३।१५५) इति लुण्ठाकः । भ्वादेर्लुटि (१।२२५) इत्यादिदर्शनाल् **लुण्ट इत्येके** ।।२५

२६. **शठ श्वठ असंस्कारगत्योः** । शाठयति, श्वाठयति । भ्वादौ **शठ कैतवे** (१।२३६), अस्मात् शठः । **श्वठि** इति **दौर्गाः**—श्वण्ठयति ।।२६, २७।।

२७. **तुजि पिजि लुजि हिंसाबलादाननिकेतनेषु** । निकेतन-मावसथः । तुञ्जयति । तुञ्जः । पिञ्जयति । लुञ्जयति । **पट पुट** १०।१६७) आदाव् **आस्वदः सकर्मकात्** इति सकर्मकार्थमर्थभेदार्थं वैषां पाठः, रूपभेदार्थं वा—तुञ्जयते । भ्वादौ तुञ्जति (१।१५४) । पिजि (२।२० कौशिकमते)[3]—पिञ्जालः ।।२८—३०।।

२८. **पिस गतौ** । पेसयति । भ्वादौ (१।४७३) पेसति ।।३१।।

२९. **सान्त्व सामप्रयोगे** । सान्त्वयति । **साम सान्त्वेति**[4] **चन्द्रः**—सामयति । सान्त्वम् । उणादौ **नामन्सामन्** (दश० उ० ६।७६)।।३२

३०. **श्वल्क वल्क परिभाषणे** । श्वल्कयति । वल्कयति । वल्कलम् । वल्कस्तरुत्वक् ।।३३, ३४।।

---

१. धातुवृत्तौ (पृष्ठ ३८०) स्वामिनाम्ना 'छेदनपूरणयो-' इत्युद्ध्रियते । पुरुषकारे कुट्ट छेदनपूरणयोरिति च चुरादावेवाह (पृष्ठ ६५) ।

२. चान्द्रधातुपाठे 'षट्ट हिंसायाम्' (१०।१७) पठ्यते, न षुट्टेति ।

३. लिबिशेनास्य धातोः संख्या न निर्दिष्टा ।

४ 'साम सान्त्वने' इति मुद्रिते चान्द्रधातुपाठे (१०।८६) पाठः । लिबिशेनास्यापि संख्या नैव लिखिता ।

**३१. स्निट[1] स्नेहने** । स्नेटयति । **स्मिट इत्येके[2]** ।।३५।।

**३२. स्फिट अनादरे** । स्फेटयति । स्फेटकः । संस्फेटस्तुमुलयुद्धम्[3] ।।३६।।

**३३. श्लिष श्लेषणे** । श्लेषयति । भ्वादौ (१।४६३) श्लेषति, दिवादौ (४।७७) श्लिष्यति ।।३७।।

**३४. पथि गतौ** । परिपन्थयति । **परिपूर्वो वैरिवाचकः** ।।३८।।

**३५. पिच्च कुट्टने** । पिच्चयति । पिचुः कर्पासः तुलं च पिचव्यः (द्र० ५।१।२ काशिका) ।।३९।।

**३६. छद संवरणे** । छादयति[4] मुखम् । **छदिर् अर्जने** (१।५५०) मित्—छदयति । **आ धृषाद् वा** (१०।२०१) इति **छद अपवारणे**[5] (तु० १०।२१५)--छादयति, छदति, रूपान्यत्वार्थ वेह पाठः—छादयते । **वा दान्तशान्त**(७।२।२७) इति च्छन्नः, छदितः । **छादेर्घेऽद्व्युपसर्गस्य** (६।४।९६) इति ह्रस्वः—प्रच्छदः, उरश्छदः[6], **पुंसि संज्ञायां घः प्रायेण** (३।३।११८), नेह संप्रच्छादः । **इस्मन्त्रन्क्विप्सु च** (तु० ६।४।९७) इति ह्रस्वः—छदिस् **अर्चिशुचि** (उ० २।१०९) इतीस् । छद्मः, छत्रम्, गृहच्छत् ।।४०।।

**३७. श्रण दाने** । श्राणयति । विश्राणनम् । युचि (३।३।१०७) प्राप्ते **चिन्तिपूजि** (३।३।१०५) इति चकाराद् अङ् इष्यते कुत्सावत् श्राणा, या भिक्षवे दीयते । हेतौ घटादित्वाच्(१।५३८)श्रणयति ।४१

**३८. तड आघाते** । ताडयति । **ताडेर्णिलुक् च** (उ० १।९८)—

---

१. पुरुषकारे क्षीरस्वामिनाम्ना 'स्निह' इत्युद्ध्रियते । (पृष्ठ १२२) । पुरुप्रकार एव २७तमे पृष्ठे 'स्निट स्नेहने । स्नेटयति । स्मिट इत्येके' इत्येवमुदध्रियते । क्षीरस्वामी तु स्वय 'ष्णिह प्रीतौ' इति दैवादिके (९१) धातुसूत्रे 'चुरादौ स्नेहयति' इत्युवाच । इत्थ कतमोऽत्र शुद्धः पाठ इति देवा एव ज्ञातुमर्हन्ति । २. उद्धृत पुरुषकारे (पृष्ठ २७) ।

३. स्मृतमिदं सूत्र व्याख्यान च पुरुषकारे (पृष्ठ २७) ।

४. स्मृतं धातुवृत्तौ (पृष्ठ ३८१) पुरुषकारे (पृष्ठ ८६) च ।

५. उत्तरत्र 'सवरणे' इति पठ्यते । तदेव स्वामिसम्मत प्रतीयते, अन्यथात्र अर्थभेदार्थ वा इत्यत्यप्यवक्ष्यत् । सम्प्रति तु 'छद अपवारणे' इति गणान्ते (१०।३२१) पाठो दृश्यते ।

६. इतोऽग्रे 'दन्तच्छद.' इत्यप्युदाजहारेति पुरुषकारः (पृष्ठ ८६) ।

तडित् । अलीकादौ (द्र० उ० ४।२५) तिन्तिडीकम् । **पिनाकादयश्च** (उ० ४।१५) इति तडाकः, ताडका । तट इत्येके—तात ताडय ताटकाम्[1], तटाकः ॥४२॥

३९. **खड खडि भेदे** । खाडयति, खण्डयति । **कडि इत्येके** । कण्डयति ॥४३,४४॥

४०. **गुडि रक्षणे** । गुण्डयति । **कुडि** इत्येके[2] । अत एव **कुडि दाहे** (१।१७३) **कुडि वैकल्ये** (१।२२०) इति च सिद्धे **चन्द्रो** नैनमध्यैष्ट ॥४५॥

४१. **गुठि वेष्टने** । गुण्ठयति । गुण्ठना । गुण्ठितम् ॥४६॥

४२. **खुडि खण्डने** । खुण्डयति, खुण्डितः ॥४७॥

४३. **वडि**[3] **विभाजने** । वण्डयति, वण्डः । टान्त इत्येके—वण्टयति । भ्वादौ (१।२२४) वण्टति ॥४८॥

४४. **चडि कोपे** । चण्डयति । चण्ड, चण्डा, चण्डी । भ्वादौ (१।१८२) चण्डते, चण्डालः ॥४९॥

४५. **मडि भूषायाम्** । मण्डयति । मण्डना, मण्डनम्, मण्डा एरण्डः । भ्वादौ (१।१७५) मण्डते । एताँश्चन्द्रो[4] नैच्छत्, तच्चासत्, कुडिकडिचडिवडिमडिभडीनां ह्यनित्यण्यन्तत्वान्न्याय्यविकरणे सिद्धे आत्मनेपदं नु कुतः स्यात् ? ॥५०॥

४६. **भडि कल्याणे** । भण्डयति, भण्डना । भ्वादौ **भडि परिभाषणे** (१।१७६)—भण्डते, भण्डः ॥५१॥

४७. **छर्द वमने** । छर्दयति । **अर्चिशुचि** (उ० २।१०८) इतीस् छर्दिः, इदन्तोऽपि ॥५२॥

---

१. अनुपलब्धमूलमिदम् ।

२. 'टान्तमेके इति स्वामी' इति धातुवृत्तौ (पृष्ठ ३८१) पाठः ।

३. अत्र पुरुषकारः (पृष्ठ ६८) द्रष्टव्यः ।

४. 'एतं च०' पाठान्तरम्, तच्चिन्त्यम्, उत्तरत्रानेकेषां धातूनां विषये वचनात् ।

**४८. पुस्त बुस्त आदरानादरयोः**। पुस्तयति । पुस्तकः[1], पुस्तं लेखकर्म । बुस्तयति । बुस्तिः शष्कुली । **बुस्त[2] बन्धने** इति **चन्द्रः** (तु० चा० धा० १०।३५) ।।५३,५४।।

**४९. चुद संचोदने** । संचोदनं प्रेरणम् । चोदयति । चोदना, चोद्यम् ।।५५।।

**५०. णक्क धक्क नाशने ।।५६, ५७।।**

**५१. चक्क चुक्क व्यथने** । चक्कयति । चक्कलकम् । चुक्कयति । चुक्कम् । **चिक्क** इति च **कौशिकः** --चिक्कमं यवपिष्टम्, चिक्कणं सस्नेहम् ।।५८, ५९।।

**५२. क्षल शौचकर्मणि** । क्षालयति ।।६०।।

**५३. तल प्रतिष्ठायाम्** । तालयति, उत्तालयति । ताल, के[3] तालिका, ताली । अनित्यण्यन्तत्वात् तलति, तलम् ।।६१।।

**५४. तुल उन्माने** । तोलयति । तोलना । **चिन्तपूजि** (तु० ३।३। १०५) इति चकारात् तुला । तुलयतीत्यणिच्पक्षे कान्तात् (द्र० ३। १।१३५) तुल-शब्दात् णिच्[4] ।।६२।।

**५५. दुल उत्क्षेपे** । दोलयति । दोला, दोलितः । आन्दोलितः, आन्दोलयति, प्रेङ्खोलयति, वीजयत्येते लोकात्[5] ।।६३।।

---

१. अर्धर्चादित्वात् (२।४।३१) पुंल्लिङ्ग । तथा च प्रयुज्यते कामसूत्रे १।४।७।।

२. 'पुस्त' पाठा० । 'बुस्त वञ्चने' इति मुद्रिते चान्द्रपाठः (१०।३५) ।

३. इतोऽग्रे लिबिशेन 'केऽणः' सूत्रस्य (७।४।१३) सख्या निर्दिष्टा, न च तस्य सूत्रस्यात्र किञ्चित् प्रयोजनम्, ह्रस्वभाव्यभावात् । यदि सूत्रसख्या निर्देष्टव्याऽऽसीत्तर्हि कप्रत्ययविधायकस्य, यद्वा इद्विधायकस्य (७।३।४४) निर्देष्टु युक्ता ।

४. इतोऽग्रे लिबिशेन 'बहुलमेतन्निदर्शनम्' इति सूत्रस्य १०।३२५ सख्या निर्दिष्टा । न च तस्य सूत्रस्यात्र किचित् प्रयोजनम् । इह तु 'प्रतिपदिकाद्धात्वर्थे' (१०।२९६ अस्मत्सख्या) सूत्रेण णिज् भवति ।

५. अत्र पृष्ठ ४० टि० १; तथा पृष्ठ १८७, टि० २ द्रष्टव्या ।

५६. **पुल समुच्छ्राये** । पोलयति । भ्वादौ (१।५७८) तुदादौ[1] च **पुल महत्त्वे**—पोलति, पुलति । अस्माद् एव प्राकृतेऽर्थे णिचि सिद्धे **चन्द्रो** नैनमध्यैष्ट ॥६४॥

५७. **बुल[2] निमज्जने** । बोलयति। वोलितम्, वोलः, बोलनम् ॥६५॥

५८. **मूल रोहणे** । मूलयति । मूलम्, मूलिः । **मूल** इति **नन्दी** मोलयति ॥६६॥

५९. **कल किल पिल क्षेपे** । गाः कालयति । कालः । कथादौ **कल संख्याने** (१०।२५३)—संकलयति, कलः । भ्वादौ (१।३३२) कलते । केलयति, केलिः । तुदादौ **किल श्वैत्यक्रीडनयोः** (६।६०)—किलति । पेलयति, पेलम् । भावकर्मणोरणिच्पक्षे--पिल्यते । **पेलृ गतौ** (१।३६१) इत्यस्मात् पेल्यते इति **चन्द्रः**॥६७—६९॥

६०. **बिल भेदने** । बेलयति । बिलम्, विल्व, बिल्मम् । तुदादौ (६।६६) विलति । **भिल** इति **कौशिकः**—भेलयति, भेलः, भिल्मम्[3] ॥७०॥

६१. **तिल स्नेहने** । तेलयति । तिलाः[4] । तिलकम् । तुदादौ (६।६१) तिलति ॥७१॥

६२. **चल भृतौ** । चालयति । भ्वादौ (१।५४९) कम्पने मित्—चलयति, तुदादौ (६।६३) **चल विलसने**— चलति ॥७२॥

६३. **पल रक्षणे** । पालयति । पलम् । पललं तिलकल्कं, क्रव्यं च । **पाल** इति **चन्द्रः** (१०।५०)—पाली ॥७३॥

६४. **लूष हिंसायाम्** । लूषयति । लूषितः ॥७४॥

६५. **शुल्ब माने** । शुल्वयति । शुल्बं रज्जुः[5] । **शूर्प माने** इति **चन्द्रः**[6] ॥७५॥

---

१. भ्वादौ (१।५७८) अपीत्थमेवाह क्षीरस्वामी, न चाय तुदादिषु पठति । अत्र पृष्ठ १२७ टि० १ द्रष्टव्या ।

२. अस्यैव डलयोरभेदेन 'बूडना' इति प्राच्यजनपदेषु प्रयुज्यते ।

३. तथा च प्रयुज्यते— बिल्म भिल्मं भासनमिति वा । निरुक्त १।२०॥

४. 'तिलः' पाठ० ।

५. ताम्ररजः पाठा० ।

६. मुद्रिते चान्द्रधातुपाठे नैव पठ्यते ।

६६. **छुट छेदने**[1]। आच्छोटयति, छोटिका युच्छा। छोटनम्। **तुदादौ** (६।८२) छुटति। **चुट** इति **चन्द्रः** (चा० धा० १०।५२), **मुट** इति दुर्गः ॥७६॥

६७. **पुट संचूर्णने**। पोटयति। पोटा स्त्रीपुंसलक्षणा। भासार्थोऽपि (१०।१९७)। तुदादौ **पुट संश्लेषणे** (६।७२)—पुटति, पुटः, पुटम् ॥७७॥

६८. **पसि नाशने**। पंसयति। **अर्जिदृशि** (उ० १।२७) इत्युः दीर्घश्च पांसुः। **भदि कल्याणे** इति **दुर्गः** ॥७८॥

६९. **वज मार्गसंस्कारगत्योः**। मार्गसंस्कारे गतौ[2] च। मार्ग गतौ संस्कारगतौ **चेत्येके** द्वौ धातू **इत्यन्ये**[3]। वाजयति। व्रजेति **चन्द्रः**। अत एव भ्वादिना (१।१५८) सिद्धेर्नापाठि। मार्गयति। मार्गः। **वच मार्गणसंस्कारे** इति **दुर्गः** ॥७९॥

७०. **शुल्क सर्जने**। शुल्कयति। **शुल्क असर्जने**[4] **इत्येके** ॥८०॥

७१. **छपि गत्याम्**। छम्पयति ॥८१॥

७२. **क्षपि क्षान्त्याम्**। क्षम्पयति ॥८२॥

७३. **क्षजि कृच्छ्रजीवने**। क्षञ्जयति। घटादौ। **क्षजि गतिदानयोः** (१।५१७) ॥८३॥

७४. **स्वर्त गत्यां च**। चकाराद् कृच्छ्रजीवने च। [1]स्वर्तयति। **गत्यामित्यसत्, स्वर्तशब्दस्यैव सम्भवात्**[5]। षोपदेश इति **नन्दी**—सिष्वर्तयिषति। **श्वभ्र गतौ च** इति **दौर्गाः**—श्वभ्रयति, श्वभ्रम् ॥८४

७५. **ज्ञप मारणतोषणनिशामनेषु मिच्च**। घटादित्वात् (१।५४८)

---

१. 'छोटने' पाठा०। २. स्मृतं धातुवृत्तौ (पृष्ठ ३८३)।

३. स्मृतं पुरुषकारे (पृष्ठ ५६) धातुवृत्तौ (पृष्ठ ३८३) च।

४. 'शुल्ब असर्सजने' पाठा०।

५. गत्या स्वर्तशब्दस्यासंभवादित्यर्थः। धातुवृत्तिकारस्तु 'श्वर्त' इति पपाठ (पृष्ठ ३८३)। वय तु 'गर्त' इति पाठ युक्तं पश्यामः। 'गर्ते वा पत्यते प्रवामीयते' इति दर्शनात्।

सिद्धे स्वार्थणिजर्थः पाठः, कर्त्रभिप्रायक्रियाफले[1] इति परस्मैपदं यथा स्यात्, नियमार्थं वा—ज्ञपयमादिवर्जं नान्ये स्वार्थण्यन्ता मित इति। यमादीनां मित्त्वमवश्यं वाच्यम्, ज्ञपेस्तु सौकर्यार्थमनुवाद **इत्येके**। संज्ञपयति पशुम्, विज्ञपयति गुरुम्, प्रज्ञपयति शस्त्रम्। आज्ञप्तः, आज्ञपितः (द्र० ७।२।२७)। विज्ञप्य गुरुम्, प्रज्ञाप्य[2] धर्मम्, आज्ञाप्य[2] भृत्यमिति यथाकथंचित् तोषणे। एवं जिज्ञपयिषति ज्ञीप्सति। बोधनेऽप्यनेकार्थत्वान् मित्वमि**त्येके**, ज्ञप्तिज्ञानयोरेकार्थत्वात् ॥८५॥

७६. **यम परिवेषणे**। यमयति। **यम च** इति **दुर्गः**, चकारः किलास्यैव मित्वमाकष्टुम्, चमादीना मा भूदिति। **यम चम** इति **चन्द्रः**[3] **पारायणे**[4]। अत एव **न कम्यमिचमाम् यमोऽपरिवेषणे** (१।५५७, ५५९) इति च विरोधान्नाध्यगीष्ट, इहापि **यमोऽपरिवेषणे इत्येके** पठन्ति ॥८६॥

७७. **चह कल्कने**। चहयति। **चप** इति **चन्द्रः**[5] **रह त्यागे इत्येके**, तन्न, कथादिना (१०।२५४) सिद्धेः[6] ॥८७॥

७८. **बल प्राणने**। बलयति। भ्वादौ (१।५७६) बलति ॥८८॥

७९. **चिञ् चये**। चययति। इति प्रमाणवत्वाद् अध्यायानाम्[7], **चिस्फुरोर्णौ** (६।१।५४) आत्वं मित्त्वे किङ्कृतं स्यात्? एतदन्तं मित्त्वानुवृत्तेः—चपयति। ञित्त्वमनित्यण्यन्तत्त्वे लिङ्गम्- चयते, चयति। स्वादौ (५।५) चिनोति, चिनुते। हेतौ। चापयति ॥८९॥

---

१. णिचश्च (१।३।७४) इति हेतुमण्ण्यन्तादेव कर्त्रभिप्राये क्रियाफल आत्मनेपद शास्ति, न स्वार्थणिच इत्युक्त चुर-धातौ स्वामिना। तेन कर्त्रभिप्रायेऽपि परस्मैपद यथा स्यादिति इह पाठ इति स्वाम्यभिप्रायः। लिबिशेन त्वैतदबुध्वा इह आत्मनेपदविधायकसूत्रस्य १।३।७२ सख्या निर्दिष्टा, न तस्यात्र किञ्चित् कार्यम्।

२ विज्ञप्यवत् 'प्रज्ञप्य' 'विज्ञप्य' इति शुद्धः पाठोऽत्र द्रष्टव्य., यथाकथञ्चित् तोषणार्थस्य स्वीकारात्। ३. मुद्रिते चान्द्रधातुपाठे नोपलभ्यते पाठ.।

४. 'पारायणव्याख्यानात्' पाठा०। चान्द्रधातुपाठस्य पारायणनामक व्याख्यान पूर्णचन्द्रकृतमिति बोध्यम्।

५. मुद्रिते चान्द्रधातुपाठे नोपलभ्यते।

६. स्मृत धातुवृत्तौ (पृष्ठ ३८४)। ७. कोऽभिप्राय इति न ज्ञायते।

८०. **नान्ये मितोऽहेतौ च ।** अन्ये ज्ञपादिपञ्चकात् स्यमशमघटनटश्रणादयोऽहेतौ चौरादिके णिचि न मित्संज्ञाः— निशामयते, उद्घाटयति, एतच्चन्द्रो नैच्छत्[1], घटादीनां चेष्टादौ मित्वाद्, योजनादावप्रसङ्गात्— **झटिति घटयति विधिरभिमतमभिमुखीभूत.**[2] ।

८१. **घट्ट चलने ।** घट्टयति । घट्टना । घट्टो नद्यवतरणस्थानम्, अरघट्टः ॥९०॥

८२. **खट्ट संवरणे** । खट्टयति मुखम् ॥९१॥

८३. **सट्ट हिंसायाम् ।** सट्टयति । सट्टकः ॥९२॥

८४. **व्यय क्षये ।** व्याययति । **चन्द्रो** व्येञ (१।७३६) सिद्धिं मन्यते । **व्यप व्यय** इति **कौशिकः, व्युदि व्यय** इति **नन्दी**— प्रव्युन्दयति ॥९३॥

८५. **पूल संघाते** । पूलयति, पूला । **पूर्ण**[3] **इत्येके** ॥९४॥

८६. **पुंस अभिमर्दने** । उत्पुंसयति ॥९५॥

८७. **मुस्त संघाते** । [मुस्तयति] ॥९६॥

८८ **टकि बन्धने** । टङ्कयति । टङ्कना । टङ्कनम् । टङ्कः, विटङ्कः ॥९७॥

८९ **धूष**[4] **कान्तिकरणे ।** धूषयति । तालव्यान्त **इत्येके**, दन्त्यान्त इति **दौर्गाः**—धूसर ॥९८॥

९०. **कीट वरणे**[5] । कीटयति । कीटः ॥९९॥

९१. **चूण संकोचने** । चूणयति । **चूर्ण इत्येके, तूण** इति **चन्द्रः**— तूणीर ॥१००॥

९२ **पूज पूजायाम्** । पूजयति । **चिन्तिपूजि** (३।३।१०५) इति

---

१ इयमनिच्छा तेन स्वधातुव्याख्याने प्रकटीकृता स्यात् ?

२. अनुपलब्धमूलमिदम् ।

३. 'पुर्ण' इति धातुवृत्तौ (पृष्ठ ३८५) पुरुषकारे (पृष्ठ १०८) च पाठः ।

५. स्मृत धातुवृत्तौ (पृष्ठ ३८५) ।

५. सर्वकोशेष्वित्थमेव पठ्यते । 'वर्णे' इति धातुवृत्तौ (पृष्ठ ३८५) ।

पूजा । पूज्यम् । राज्ञां पूजितः ॥१०१॥

९३. **अर्क स्तवने** । अर्कयति । तपन **इत्येके** ॥१०२॥

९४. **शुठ आलस्ये** । शोठयति । **शठ इत्येके** ॥१०३।

९५. **शुठि शोषणे** । शुण्ठयति । शुण्ठी विश्वा । [केचिदेनमकारान्तं पठन्ति, लक्ष्यतस्तदपि प्रमाणम् ।][1] **चन्द्रो** भ्वादिना (१।२।४०) साधयति ॥१०४॥

९६. **जुड प्रेरणे** । जोडयति ॥१०५॥

९७. **गज मर्च[2] मार्ज शब्दार्थाः** । गाजयति । भ्वादौ (१।१५६) गजति । मर्चयति[2] । मार्जयति । मार्जिता ॥१०६—१०८॥

९८. **घृ स्रावणे**[3] । घारयति[4] । भ्वादौ (१।६६९) घरति । ह्वादौ (३।१५) जिघर्ति । **घृ सृ आवरणे** इति **पूर्वे** पेठुः, **घर स्रवणे** इति **दुर्गः** ॥१०९॥

९९. **पचि विस्तारवचने** । प्रपञ्चयति प्रपञ्चः । भ्वादौ पचि व्यक्तीकरणे (१।१०७) पञ्चते, पञ्चिका, विपञ्ची, पङ्क्तिः ॥११०॥

१००. **तिज निशाने** । तेजयति तेजना, तेजनी । भ्वादौ (१।६९७) क्षमायां सन्—तितिक्षते, निशाने तेजत **इत्याहुः** ॥१११॥

१०१. **कृत संशब्दने** । संशब्दनमुद्घोषः । कीर्तयति । **ऊतियूति** (३।३।९७) इति कीर्तिः ॥११२॥

१०२. **वर्ध छेदनपूरणयोः** । वर्धयति । भ्वादौ (१।५०५) वर्धते ॥११३॥

---

१. अय पाठः पुरुषकारे (पृष्ठ ६९) धातुवृत्तौ (पृष्ठ ३८५) च स्वामिनाम्नोद्धृत उपलभ्यते । कदाचिदत्र नष्टः स्यात् ।

२. 'मर्ज – मर्जयति' पाठा० ।

३. उद्धृत पुरुषकारे (पृष्ठ ३७,३९) धातुवृत्तौ (पृष्ठ ३८५) च ।

४. 'अभिघारयति' इति स्वामिनाम्नोदाजहार सायणः (धातुवृत्ति पृष्ठ ३८५) । भ्वादौ (१।६६९) तु 'चुरादौ घृ स्रावणे तङानी,–अभिघारयते' इत्याह क्षीरस्वामी (पूर्व पृष्ठ १५९) ।

५. 'घृ सृ' इत्यारभ्य 'दुर्गः' पर्यन्तः पाठः पुरुषकार उद्धृतः (पृष्ठ ३७)।

१०३. **कुपि**[1] **छादने**। कुम्पयति। **चिन्तपूजि** (तु० ३।३।१०५) इति कुम्पा। **कुबि** इति **कौशिकः**--कुम्बा **सुगहनावृतिः**--(अमर० २। ७।१८) ॥११४।

१०४. **लुबि तुबि अर्दने**। लुम्बयति। **प्रवासफललुम्बिभिः**। तुम्बयति। तुम्बी, तुम्बकः। **तुपि** इति **दौर्गाः**। **चान्द्रे** त्रयोऽपि भ्वादौ सिद्धाः ॥११५, ११६॥

१०५. **ह्लप व्यक्तायां वाचि** ॥११७॥

१०६. **चुट छेदने**। चोटयति। तुदादौ (६।८२) चुटति। **चुटि** इति **नन्दी**—चुण्टयति। **चुडि**[2] इति **दुर्गः** ॥११८॥

१०७. **इल प्रेरणे**। एलयति। भ्वादौ—एलति[3] ॥११९॥

१०८. **म्रक्ष म्लेच्छने**। म्रक्षयति ॥१२०॥

१०९. **म्लेछ अव्यक्तायां वाचि**। म्लेच्छयति। भ्वादौ (१। १२५) म्लेच्छति। **म्रक्ष रोषे**[4], **म्लेछ अव्यक्ते शब्दे**[5] इति सिद्धे **चन्द्र** एतौ नैच्छत्। **बहुलमेतन्निदर्शनम्** (१०।३२५) इति सर्वे चुरादौ पाठ्याः इति चान्द्रोऽभिप्रायः[6] ॥१२१॥

११०. **ब्रीस बर्ह हिंसायाम्**। ब्रीसयति। **ब्रूस इत्येके**। बर्हयत्यरिम्। भ्वादौ **बर्ह प्राधान्ये** (१।४२३) बर्हते ग्राम्यः। ॥१२२, १२३॥

१११. **गर्द शब्दे**। गर्दयति। भ्वादौ (१।४७) गर्दति। **गर्ज इत्येके** ॥१२४॥

---

१. अत्राह सायण.—'स्वामिकाश्यपमैत्रेयादयो बशन्त पठन्ति' (धातु० पृष्ठ ३८६) इति। बशन्त बकारान्तमित्यर्थः। अत्र तु स्वामिमते पकारान्तः पाठः, कौशिकमते तु बान्तः।

२. 'चुडि इति नन्दी-चुण्डयति। चुटि इति दुर्गः' इति पाठान्तरम्। अयमेव पाठो युक्तः प्रतिभाति, कातन्त्रधातुपाठे 'चुटि छेदन' इति पाठदर्शनात्।

३. भ्वादौ 'इल' न क्वचित् स्वामिना पठ्यते। तुदादौ ६।६५ तु पठ्यते। तौदादिके तु न भौवादिक निर्दिश्यते।

४. मुद्रिते चान्द्रधातुपाठे 'म्रक्ष सघाते' (१।३१७) पठ्यते।

५. 'म्लेच्छ अव्यक्ते वचने' इति मुद्रिते चान्द्रधातुपाठे (१।५३) पठ्यते।

६. 'चान्द्रभिप्राय.' पाठा०।

१२५. **दाशृ दाने ।** दाशयते । भ्वादौ (१।६२१) दाशति, दाशते ॥१४३॥

१२६. **दशि दंशने ।** दंशयते । भासार्थः (१०।१९७) दंशयति । भ्वादौ **दन्श दशने ।** (१।७१६) दशति ॥१४४॥

१२७. **दसि दर्शनदंशनयोः ।** दंसयते दंसितः । भासार्थः (१०।१९७) दंसयति ॥१४५॥

१२८. **तत्रि कुटुम्बधारणे ।** कुटुम्बं परिवारः, उपलक्षणञ्चैतत् । तन्त्रयते । तन्त्रम् । स्वतन्त्रः । **अवितॄस्तॄतन्त्रिभ्य ईः** (उ० ३।१५८) —तन्त्रीः । **अच इः** (उ० ४।१३९) तन्त्रिः । तन्द्रा तन्द्रीति पृषोदरादित्वात् (द्र० ६।३।१०९) । द्वौ धातू मत्वा **चान्द्राः** कुटुम्बयत इत्यप्युदाहरन्ति[१] ॥१४६॥

१२९. **मत्रि गुप्तभाषणे ।** मन्त्रयते । मन्त्रः ॥१४७॥

१३०. **स्पश ग्रहणसंश्लेषणयोः ।** स्पाशयते । **अत्स्मृदॄत्त्वर** (७।४।९४) इत्यपस्पशत् । **वा दान्त** (७।२।२७) इति स्पष्टः स्पाशितः । भ्वादौ **स्पश बाधने** (तु० १।६२६) स्पशति । स्पशश्चरः ॥१४८॥

१३१. **भर्त्स तर्ज संतर्जने ।** भर्त्सयते, [तर्जयते] । लक्ष्ये भर्त्सयति तर्जयतीति दृश्यदे । एवं 'निशामयति, भालयति, कोटयति, वञ्चयति, निवेदयति' इत्यादि । अत एव **चुरादिभूतान्स्वरान्वितान्नाकरोत्**[२] । भ्वादौ **तर्ज भर्त्सने** (१।१४०) तर्जति ॥१४९,१५०॥

१३२. **बस्त गन्ध अर्दने ।** वस्तयते । वस्तः, वस्तिः । गन्धयते, गन्धः । गन्धर्वो घोटकः ॥१५१,१५२॥

१३३. **किष्क हिंसायाम् ।** किष्कयते । **किष्कुर्हस्ते वितस्तौ च**

---

नुदात्तेत्त्वात् 'तास्यनुदात्तङिददुपदेश' (अ० ६।१।१८६) इत्यादिना शानचोऽनुदात्तत्वे धातुस्वरो भवति ।

१. 'उदाजह्रुः' पाठा०, मुद्रिते चान्द्रधातुपाठे 'तत्रि कुटुम्बधारणे' इत्येवमेकधातुरूपं सूत्रं पठ्यते, स चापपाठः ।

२. उदात्तानुदात्तस्वरितविशिष्टान् इत्संज्ञकानित्यर्थः । काश्यपोऽप्याह—'कार्याभावादेकश्रुत्या पठ्यन्ते' । चुरादय इति शेषः (द्र० धातु० पृष्ठ ३७०) ।

(अमर० ३।३।७) किष्किन्धा। **ह्ष्कि** इति **दुर्गः**, हिष्कितं लक्ष्यते। भ्वादौ (१।६०४) हिक्कति ॥१५३॥

**१३४. निष्क परिमाणे**। निष्कयते। निष्कः ॥१५४॥

**१३५. लल ईप्सायाम्**। लालयते। कु[1] लालयते—कुलालः। भ्वादौ **लड विलासे** (१।२५०) लडति ॥१५५॥

**१३६. कूण संकोचने**। मुखं विकूणयते ॥१५६॥

**१३७. तूण पूरणे**। तूणयते। तूणः, तूणीरः। **तूल** इति **चन्द्रः**[2] ॥१५७॥

**१३८. भ्रूण आशायाम्**। भ्रूणयते। भ्रूणो गर्भः। आशङ्कायामित्येके ॥१५८॥

**१३९. शठ श्लाघायाम्**। शाठयते। शाठः। **शट** इति **नन्दी**, **शल** इति **कौशिकः** ॥१५९॥

**१४०. यक्ष पूजायाम्**। यक्षयते। यक्षः। मनिन् (द्र० दश० उ० ६।७३) यक्ष्मा ॥१६०॥

**१४१. स्यम वितर्के**। स्यामयते। भ्वादौ **स्यमु स्वन** (१।५६५) इति मित्—स्यमति, स्यमयति ॥१६१॥

**१४२. गूरी उद्यमे**। उद्गूरयते। आगूरणः। तुदादौ **गुरी उद्यमे** (६।६५) उद्गुरते। **अपगुरो णमुलि** (६।१।५३) इत्यसावात्वं वा—अपगारम्, अपगोरम् ॥१६२॥

**१४३. शम लक्ष आलोचने**। निशामयते। **वा दान्तशान्त** (७।२।२७) इति शान्तः। अनालोचने—निशामितः। दिवादौ (४।९४) शाम्यति। **शमोऽदर्शने** (१।५५८) इति मित्त्वम्—शमयति रोगम्। लक्षयते लक्षणम्, लक्षते। अन्यत्र लक्षयति घटम् ॥१६३,१६४॥

**१४४. कुत्स अवक्षेपणे**। कुत्सयते। कुत्सना। **चिन्तिपूजि** (३।३।१०५) इति कुत्सा ॥१६५॥

**१४५. त्रुट छेदने**। त्रोटयते रज्जुम्। तुदादौ (६।८०) त्रुटयति,

---

१. 'कुं भूमिम्' इत्यर्थः। २. नोपलभ्यते मुद्रिते चान्द्रधातुपाठे।

**वा आश** (३।१।७०) इति त्रुटति, **त्रुड इत्येके**[1] उत्त्रोडयते तणम् ॥१६६॥

१४६. **गल स्रावणे**। गालयते, उद्गालयते। भ्वादौ (१।३६४) गलति ॥१६७॥

१४७. **भल आभण्डने**। आभण्डनं निरूपणम्। निभालयते। ॥१६८॥

१४८. **कुट प्रतापने**। कोटयते।[2] तुदादौ (६।७१) कौटिल्ये—कुटति। **त्रुट इति चन्द्र**[3]:, अत एव च **त्रुट छेदने** (१०।१४६) इत्यनेनैव सिद्धम्। **कूट आप्रदान** इति **दुर्गः** ॥१६९॥

१४९. **वन्चु प्रलम्भने**। प्रलम्भनं मिथ्याफलाख्यानम्। **एवमादीनामनुबन्धः प्रत्यभिज्ञानार्थम्, स एवायमर्थान्तरे चुरादिरिति**[4]। **गृधिवञ्च्योः प्रलम्भने** (१।३ ६९) तङ्—वञ्चयते बालम्, अन्यत्रार्हि वञ्चयति। भ्वादौ **वञ्चु गतौ** (तु० १।१२०)—वञ्चति ॥१७०॥

१५०. **वृष शक्तिबन्धने**। शक्तिबन्धनं प्रजननसामर्थ्यम्।[5] वर्षयते। वर्षधरः। भ्वादौ वृषु (१।४६४) [वर्षति]। तवर्गचतुर्थादिः सामर्थ्यधारणार्थं **इत्येके**—धर्षयतेऽरिम् ॥१७१॥

**१५१. मद तृप्तिशोधने**। शोधनं सम्पत्तिः[6]। **तृप्तियोग** इति **नन्दी**। मादयते। दिवादौ **मदी हर्षे** (४।१०१) माद्यति। घटादौ **मदी हर्षग्लापनयोः** (१।५५२) मदयति ॥१७२॥

**१५२. दिवु परिकूजने**। देवयते गन्त्री। दिवादौ (४।१) दीव्यति।

---

१. धातुवृत्तौ (पृष्ठ ३८८) 'कुट इत्येके इति स्वामी' पाठ उद्ध्रियते।

२. पुरुषकारे (पृष्ठ ६५) धातुवृत्तौ (पृष्ठ ३८८) प्रौढमनोरमायां (पृष्ठ ६१८) च 'कुट्ट प्रतापने—कुट्टयते' इति पाठ उपलभ्यते। स तु नेह दृश्यते।

३. मुद्रिते चान्द्रधातुपाठे नोपलभ्यते।

४. धातुवृत्तिकारस्तु 'क्त्वायामिड्विकल्पार्थमनित्यणिचि लिङ्गमुकारानुबन्ध' इत्याह (पृष्ठ ३८८)।

५. धातुवृत्तौ (पृष्ठ ३८९) केशवस्वामिनाम्नोद्ध्रियतेऽयं पाठः।

६. पुरुषकारे (पृष्ठ ८५) धातुवृत्तौ (पृष्ठ ३८९) च 'तृप्तिशोधने तर्पणशुद्धौ' इति स्वामिनाम्नोद्ध्रियते पाठः।

भ्वादौ [देवृ] देवने (१।३३४) परिदेवने ॥१७३॥

१५३. **गॄ विज्ञाने** । गारयते । तुदादौ निगरणे (६।११२)—निगिरति । क्र्यादौ शब्दे (९।२७) गृणाति । कॄ **विज्ञान** इति **चन्द्रः** ॥१७४॥

१५४. **विद चेतनाख्यानविवादेषु** । वेदयते सुखम्, आवेदयते कथाम्, प्रवेदयते वादिनम् । अदादौ (२।५९) वेत्ति दिवादौ (४।६२) विद्यते । तुदादौ (६।१३६) विन्दति, विन्दते । रुधादौ (७।१७) विन्ते ॥१७५॥

१५५. **मन स्तम्भे** । स्तम्भो गर्वः । मानयते वृषलः[1] । पक्षे मनतीति **चन्द्रः**[2] । दिवादौ (४।६६) मन्यते, तनादौ (८।९) मनुते । ॥१७६॥

१५६. **यु जुगुप्सायाम्** । यावयते ब्राह्मणान् जाल्मः । याव्यम् । अदादौ मिश्रणे (२।२५) यौति । क्र्यादौ बन्धने (९।७) युनाति । **युजु कुत्सायामित्येके**—योजयते[3] ॥१७७॥

१५७. **कुस्म नाम्नो वा । कुस्ममिति दृष्टम्**[4] । कुस्मेत्यस्मान् नाम्नः प्रातिपदिकाण्णिज् वा भवति । यद्वा—कुस्ममिति प्रकृत्यन्तरं

---

१. वृषलशब्दो हि द्व्यर्थकः—धर्मात्मवाची अधर्मात्मवाची च । तथा चोक्तं निरुक्ते— 'वृषलो वृषशीलो वृषाशीलो वा' (३।१६) । धर्मात्मवाची 'वृषादिभ्यश्चित्' इत्यौणादिकेन (१।१०६)सूत्रेण सिद्ध्यति । मुद्राराक्षसेऽसकृत् चाणक्येनोच्चार्यमाणं वृषलपद धर्मात्मवाच्येव, न निन्दार्थकः । को हि नाम बुद्धिमान् राजानं निन्द्यपदेन संबोधनमुचितं मन्यते ।

२. चन्द्रेण स्वीयधातुपाठव्याख्यायामेतल्लिखितं स्यात् ।

३. उद्धृतं पुरुषकारे (पृष्ठ ३३) ।

४. इदम्, अग्रे च स्थूलाक्षरेषु मुद्रितानि वचनानि धातुपाठस्य सूत्राणि पूर्ववृत्तेर्वचनानि वा प्रतीयन्ते । इत्थ च कृत्स्नः पाठः–"कुस्म नाम्नो वा, कुस्ममिति दृष्टम्, कुस्मयतिरकारितः, उपसर्गस्य बाह्यत्वमिष्यते, तस्मात् कारित एव ।" धातुवृत्तौ त्वेव पठ्यते—"कुस्म नाम्नो वा, कुस्ममिति दृष्म्, कुस्मयतिरकारितमिति, कोर्नित्यसमासत्वात् उपसर्गस्य च बाह्यत्वात् करितमेव ।" धातुप्रदीपे त्वित्थं पठ्यते– "कुस्म कुस्मयने, कुस्मनाम्नो वा, कुस्ममिति दृष्टमेव, कुस्मयतिरकारितः ।" सिद्धान्तकौमुद्यां नैतानि वचनानि व्याख्यायन्ते ।

दृष्टम्, कुपूर्वात् स्मयतेः—(१।६७८) परिखादिवद्[1] **अन्येष्वपि दृश्यते** (३।२।१०१) इति डप्रत्ययः, कुस्मयते, कुस्मयति। ननु स्मिङः कुपूर्वात् कुस्मयत इति सिद्धम्, कुस्माच्च नाम्नः सर्वप्रातिपदिकेभ्यः क्विपि (द्र० ३।१।११ भा०) कुस्मतीति सेत्स्यति तत्किमर्थं कुस्म नाम्नो वेत्युच्यते? इति चोदित्वा परिहरति—**कुस्मयतिरकारितः** इति। कोर्नाम्ना सह नित्यसमासोऽस्ति (द्र० २।२।१८), न तु कुत्सितं स्मयते इति तिङा **उपपदमतिङ्** (२।२।१९) इति। ततश्च स्मयते कु इत्यपि प्रयोगानियमः, स्यात्, स च नेष्यते। अथाण्यन्तेऽपि प्रकृत्यन्तरे भाषायामेतद्रूपं भवेत्, केन निवार्यत इत्याह——**उपसर्गस्य बाह्यत्वमिष्यते** प्रकुस्मयते, विकुस्मयत इति[2]·········**ते प्राग्धातोः** (१।४।८०) इति, कुस्मयत इत्युपसर्गस्य इत्यपव्याख्या[3]। अपि च सार्वधातुके यकि णिलोपे कुस्म्यत इतीष्यते, कुस्मीयत इति स्यात्, कुस्मयाञ्चक्रे इत्यपि कुस्मियाञ्चक्रे इति वा, कुसिष्मिया इति वा, अचुकुस्मतेति वा, चुकुस्मयिषते कुसिस्मयिषते इति, कुस्मनेति कुस्मितिः, कुस्मयित्वेति प्रकुस्म्येति, **तस्मादकारित एव**। न तु स्वार्थनिर्देशं विना क्रियावाचित्वाभावात् क्रियानिबन्धनाः कारकप्रत्ययाः कर्तव्याः। अथ तत्करोत्याद्यर्थे सूत्रयत्यादिवद् (द्र० ३।२।२६ वा०) अपि णिज् इष्यते, तर्हि प्रातिपदिकाद् धात्वर्थे (१०।२९५) इत्यनेन सिद्धः? सत्यम्, किन्त्वात्मनेपदप्रवृत्तिर्धातुरूपनिवृत्तिश्च पृथक्पाठेऽस्य प्रयोजनम्। दुर्गस्तु कुस्मयन इत्यपाठीत्। कुस्मेति धातुर्मतिदृष्टं बुद्ध्योत्पादितमर्थमाहेति च ॥१७८॥

**चतुस्त्रिंशतिसूत्रेषु[4] सप्तत्रिंशताधातुभिराकुस्मीयपर्यष्टकः।**

१५८. **चर्च अध्ययने**। चर्चयति वेदम्। **चिन्तिपूजि** (३।३।१०५) इति चर्चा ॥१७९॥

१५९. **बुक्क भाषणे**। बुक्कयति श्वा। भ्वादौ (१८७) बुक्कति ॥१८०॥

---

१. यथा परिखाशब्दे डस्तथैव कुस्म इत्यत्रापीत्यर्थः।

२. इतोऽग्रे कश्चित् पाठस्त्रुटितः। ३. कस्येयं व्याख्येति न ज्ञायते।

४. अस्मान्निर्दिष्टा धातुसूत्रसंख्या तु पञ्चत्रिंशद् भवति। एषु कतमत्

१६०. **शब्द उपसर्गादाविष्कारे**[1] । प्रतिशब्दयति गिरिः—'प्रतिश्रुत्कामा[2]ऽऽविष्करोति' इत्यर्थः । विशब्दयति । **योगविभागादाविष्कारे चेत्यनुपसर्गादपीति नन्दी**—शब्दयति । **दौर्गाणां शब्द** इत्येकं सूत्रम्, शब्दक्रियायामित्यर्थः, तत **उपसर्गाद् आविष्कार** इति **चन्द्रः**[3] **प्रातिपदिकाद्धात्वर्थे** (१०।२६५) इत्यनेनैव साधयति ।।१८१।।

१६१. **कण निमीलने** । काणयति चक्षुः । काणः । भ्वादौ (१।३०२) कणति । मित्त्वात् (द्र० १।५३७) कणयति ।।१८२।।

१६२. **जभि नाशने** । जम्भयति, जम्भयते । भ्वादौ **जभ जभि जम्भने** (१।२७३)—जम्भते, जभ्यते । **चन्द्रो जभ**[4] इत्याह । **रधिजभोरचि** (७।१।६१) इति नुम्—जम्भयितुम् ।।१८३।।

१६३. **षूद आस्रवणे**[5] । सूदयते । **घाते च केचित्**—निसूदयति । भ्वादौ क्षरणे (१।२१)—सूदते, सूदः, निसूदितः ।।१८४।।

१६४. **जस ताडने । जासिनिप्रहण** (२।३।५६) इति चौरस्योज्जासयति । दिवादौ [मोक्षणे] (४।१०५) जस्यति । जसि (१०।१४४) इत्युक्तम्—जंसयति ।।१८५।।

१६५. **पश बन्धने** । पाशयति । भ्वादौ पशति[6], पशते । उभयत्रापि मूर्धन्यान्त इति **दुर्गः** ।।१८६।।

---

सूत्र क्षीरस्वामिनोऽनिष्टमिति न ज्ञायते । धातुसख्यायाः समानत्वाद् इह 'पञ्चत्रिंशत् सूत्रेषु' युक्तः पाठः स्याद् अन्यथा धातुसंख्याप्येका ह्रसीयेत् । धातूनां सख्या तु सप्तत्रिंशदेव ।

१. धातुवृत्तौ त्वेवं पाठ उद्ध्रियते 'अत्र स्वामी शब्द उपसर्गादाविष्कारे चेति पठित्वा उपर्सगपूर्वाच्छब्द इत्यस्मादाविष्कारे चकाराद् भाषणे च······' (पृष्ठ ३६०) । इह तु भिन्नः पाठः ।

२. धातुवृत्तौ 'प्रतिश्रुतमाविष्करोतीत्यर्थः' इति पाठ उद्ध्रियते (पृष्ठ ३६०) । अयमेव शुद्धः पाठः ।

३. इदं चन्द्रेण स्वोपज्ञे धातुव्याख्यान एवोक्त स्यात् ।

४. मुद्रिते चान्द्रधातुपाठे नोपलभ्यते ।

५. 'आप्रवणे' पाठा० ।

६. स्वामी भ्वादौ (१।६२६) तालव्यान्तं न पपाठ, एकेषां मते 'पष' इति त्वाह ।

१६६. **अम रोगे**। आमयति। भ्वादौ **अम गत्यादिषु** (१।३१२) अमति। घटादौ **अम रोगे**[1] अमयति। अतिशब्दाद् गुणादेशो द्रष्टव्यः[2]। आमयः, आमयते ॥१८७॥

१६७. **चट स्फुट भेदे**[3]। उच्चाटयति। स्फोटयति। भ्वादौ (१।२२६) स्फोटति। तुदादौ (६।७८) स्फुटति ॥१८८॥

१६८. **घट च**। १६९. **हन्त्यर्थाः**। **चट स्फुट घट च हन्त्यर्थाः**, एते हन्त्यर्थे णिचमुत्पादयन्ति।[4] उच्चाटयति, आस्फोटयति, विघाटयति। **अन्ये**[5] तु **चट** इति **आस्फुटौ**—आस्फोटने चुरादिरिति व्याख्यन्, अन्यत्र भ्वादिः उच्चटयति। **केचित्तु** हन्त्यर्थाः स्वार्थे चेत्याहुः—घाटयति, तोडयति, गणान्तरपाठाद् वेति—तुदति (६।१)। इत्थं तु दौ हिंसार्थपाठ आत्मनेपदार्थं **घट संघाते** इति **दुर्गः**—संघाटयति। घटेर्भ्वादौ (१।५१०) द्युतार्थस्तङर्थो मित्संज्ञार्थश्च पाठः ॥१८९॥

१७०. **दिवु अर्दने**। परिदेवयति। अन्यत्र दीव्यति (४।१) **चन्द्रो दिवु परिकूजने**[6] इत्येव सिद्धिमाह[7] ॥१९०॥

१७१. **अर्ज प्रतियत्ने**। प्रतियत्नः संस्कारः। अर्जयति। भ्वादौ **अर्ज सर्ज अर्जने** (१।१३८)—अर्जति ॥१९१॥

---

१. घटादौ 'न कम्यमिचमाम्' (१।५५६) सूत्रे निर्दिश्यते, 'अम रोगे' इत्येवं न क्वचिद् घटादौ पठ्यते।

२. अस्याभिप्रायो न ज्ञायते। 'अतिशब्दाद्'इत्यस्य स्थाने अमिशब्दाद्' इति शुद्धः पाठो भवितुमर्हति ?

३. 'भेदने' इत्युद्ध्रियते पुरुषकारे(पृष्ठ ६२)।

४. अत्र पुरुषकारे क्षीरस्वामिनाम्नोद्धृते पाठे भूयान् पाठभेद् उपलभ्यते। तथाहि— 'क्षीरस्वामी तु चट स्फुट भेदने। चाटयति, स्फोटयति। घट च— घटधातुश्च भेदने वर्तते। हन्त्यर्थाः हन्त्यर्थाश्च धातवो णिचमुत्पादयन्ति' इत्युक्त्वा दर्शनान्तरमप्याह—'घट च हन्त्यर्थाः। चट स्फुट धातू द्वौ घट च धातुस्त्रयः, एते हन्त्यर्था हन्तिना समानार्थाः णिचमुत्पादयन्ति' इति (पृष्ठ ६२)।

५. वक्ष्यमाणः पाठः शाकाटयनस्येति पुरुषकारः (पृष्ठ ६२)।

६. 'परित्यक्तजन' ? पाठा०।

७. चन्द्रस्तु 'दिवु परिकूजने' इत्यपि धातुपाठे न पठति, कुतस्ततः सिद्धिः ? अयं क्षीरतरङ्गिण्याम् (१०।१५२) सूत्रे पठ्यते।

१७२. **घुषिर् विशब्दने ।** विशब्दनं विशिष्टशब्दकरणम् । उद्घोषयति । **अविशब्दन इत्येके ।** अपघोषयति पापम्, अपह्नुत इत्यर्थः। **इरित्त्वमनित्यण्यन्तत्वे लिङ्गम्**—अघुषत्, अजूघुषत् । **घुष विशब्दने** इति **कौशिकः** । भ्वादौ (१।४३४) घोषति ॥१९२॥

१७३. **आङः क्रन्दसातत्ये ।** चुरादिः[1], आक्रन्दयति । अन्यत्र (१। ५८) क्रन्दति ॥१९३॥

१७४. **लष[2] शिल्पोपयोगे ।** लाषयति । भ्रमादिना तक्ष्णोतीत्यर्थः । अन्यत्र लषति, लष्यति (१।६२७) । **तालव्यान्त** इति **कौशिकः**—लाशयति ॥१९४॥

१७५. **भूष अलंकारे ।** भूषयति । भ्वादौ (१।४५५) भूषति । **तसि भूषेति दुर्गः**[3]—उत्तंसयति । अवतंसयति, उत्तसः, अवतंसः ।१९५

१७६. **मोक्ष असने**[4] । मोक्षयति शरान् । अन्यत्र (६।१३३) मोक्षते ॥१९६॥

१७७. **अर्ह पूजायाम्** । अर्हयति, आर्जिहत्, अर्हितम्, अर्हणा । भ्वादौ (१।४८८) अर्हति ॥१९७॥

१७८. **ज्ञा नियोजने ।** आज्ञापयति भृत्यान् । ज्ञापित; ज्ञापना । अन्यत्र (९।३८) जानाति ॥१९८॥

१७९. **भज विश्राणने ।** विश्राणनं दानम् । विश्राणे विवेचन **इत्यन्ये ।** भाजयति, भाजी[5] (द्र० ४।१।४२) अन्यत्र (१।७२५) भजति, भजते ॥१९९॥

१८०. **शृध अप्रसहने ।** अप्रसहनम् अमर्षः । प्रसहने अभि-

---

१. अत्राह धातुवृत्तिकार.—'स्वामी तु आङ्पूर्वो घुषिः क्रन्दसातत्ये चुरादि., आघोषयतीत्युक्त्वा मैत्रेयाद्युक्तमपरमाहुरित्याह' (पृष्ठ ३९१) । क्षीरतरङ्गिण्या त्वय पाठो नोपलभ्यते । पाठोऽत्र भ्रष्टः स्यात् ।

२. अत्र पुरुषकारधातुवृत्तिकारप्रौढमनोरमाकारादयः स्वामिमते 'लस' इति दन्त्यं पठित्वा 'लष' इति मूर्धन्यान्तमिति केचित्' इति पटन्ति (पृष्ठ—पुर० ११९, धा० ३९१, प्रौ० ६१८) ।

३. इत्थमेव भ्वादौ (१।४५५) अप्याह स्वामी ।

४. 'सहने' पाठा० ।

५. 'अभिलाषी' इत्यधिकं क्वचित् ।

भवे इत्येके । शर्धयत्यरिम् । अशशधत् अशीशृधत् । भ्वादौ **शृधु शब्दकुत्सायाम्** (१।५०६)—शर्धति, तथा **शृधु मृधु उन्दे** (१।६१३)—शर्धते, शर्धति ॥२००॥

१८१. **यत निकारोपस्कारयोः**[2] । निकारः[1] स्वेदनम् । यातयत्यरिम् । यातना तीव्रवेदना । यातयति राजा छिद्रम्, छादयतीत्यर्थः । प्रतियातयति—प्रतिबिम्बयति, प्रतियातना=प्रतिबिम्बम् । भ्वादौ **यती प्रयत्ने** (१।२६) यतते । **निरश्च धान्यधनयोः प्रतिदाने**—निर्यातयत्यृणम्, शोधयतीत्यर्थः, धान्यधने उपलक्षणम् ॥२०१॥

१८२. **वस स्नेहच्छेदापहरणेषु**[3] । वासयति, वासना, वासयति वृक्षम्, वासयत्यरिम्, हन्ति इत्यर्थः । भ्वादौ (१।७३३) वसति, अदादौ (२।१६) वस्ते, वस्त्रम् ॥२०२॥

१८३. **चर संशये** । विचारयति । विचारणा हि सति संशये भवति । **चर असंशय** इति **दुर्गः** । अन्यत्र (१।३७१) चरति ॥२०३॥

१८४. **च्यु सहने** । च्यावयति । भ्वादौ (१।६८२) च्यवते । **च्युस सहन**[4] इति **एके**, **हसने च** इति **एके**—च्योसयति ॥२०४॥

१८५. **भुवोऽवकल्कने** । अवकल्कनम् मिश्रीकरणम्[5] । भावयति दध्नौदनम्[6] । **अनित्यण्यन्तत्त्वार्थम्पञ्चमी** । विकल्कने इति **नन्दी**—भावयेद् ब्राह्मणन्तपः, भावितम् । **भू प्राप्तावात्मनेपदी** (१०।२३१) विभाषा णित्—भावयते, भवते । **भू सत्तायाम्** (१।१) भवति ॥२०५॥

१८६. **कृपेस् तादर्थ्ये** । तादर्थ्यम् उद्देशविषयम्[7] । कल्पयति

---

१. 'निराकार इति तु पाठो दृश्यते, निराकारः परिभव इति च क्षीरस्वामी' इति पुरुषकारोद्धृतः पाठः (पृष्ठ ७६) । दीक्षितोऽपि प्रौढमनोरमायां 'स्वामी तु निकारस्थाने निराकारेति पठित्वा निराकारः परिभव इति व्याख्यद्' इत्याह (पृष्ठ ६१८) । एवं धातुवृत्तिकारोऽपि (पृष्ठ ३६१) । अत्र तु सर्वथैवान्यः पाठ उपलभ्यते । २. 'निकारोपसंस्कारयोः' पाठा० ।

३. 'स्नेहच्छेदावहननेषु' पाठा० । ४. 'हानौ' पाठा० ।

५. उद्धृतम्—धातुवृत्तौ (पृष्ठ ३६२) पुरुषकारे (पृष्ठ १२) च ।

६. 'भावयति क्षीरेण घृतम्' इति पुरुषकारे पाठः (पृष्ठ १२) ।

७. अत्र पुरुषकार इत्थमुद्ध्रियते—'स्वामी तु कृपेर्योऽर्थस्तदर्थभाव इति

देवताभ्यो हविः, संकल्पयति । भ्वादौ **कृपू सामर्थ्ये** (१।५०८)—कल्पते । **तादर्थ्येऽवकल्कन** इत्येके । अत एव **भू कृप अवकल्कने** इति **दुर्गः । चन्द्रो** द्वावप्यवकल्कने=चिन्तन इति व्याख्यत्[1]—सम्भावयति, अवकल्पयति ॥२०६॥

१८७. **रग लग आस्वादने**[2] । रागयति, लागयति । अन्यत्रार्थे घटादी **रगे शङ्कायाम्, लगे सङ्गे** (१।५३२,५३३)—रगति, लगति, रगयति, लगयति । **रक लकेति चन्द्रः**[3], **आसादने**[4] इति **दुर्गः** ॥२०७॥

१८८. **अन्चु विशेषणे** । विशेषणम्—अतिशयः अञ्चयत्यर्थान्, व्यक्तीकरोत्यर्थः । भ्वादौ **अन्चु गतौ** (१।११९)—अञ्चति ॥२०८।

१८९. **लिगि चित्रीकरणे** । लिङ्गयति, उल्लिङ्गयति, लिङ्गम् । भ्वादौ लिगि गत्यर्थः (१।९१)—आलिङ्गति ॥२०९॥

१९०. **मुद संसर्गे** । मोदयति सर्पिषा सक्तून् । मोदकः । भ्वादौ **मुद हर्षे** (१।१६)—मोदते ॥२१०॥

१९१. **उध्रस उञ्छे** । क्र्यादिः (९।५६) एवायं स्वार्थणिजर्थः पठित इत्युदित्त्वम्—ध्रासयति, ध्रस्नाति । प्रयोगसमवायीत्येके—उद्ध्रासयति, उद्ध्रस्नाति ॥२११॥

१९२. **मुच प्रमोचने** । मोचयति शरान् । भ्वादौ **मुच कल्कने** (१।१०५)—मोचते, तुदादौ । **मुच्लृ मोक्षणे** (६।१३४)—मुञ्चते, मुञ्चति ॥२१२॥

१९३. **आस्वदः सकर्मकात्** । **ष्वद संवरणे** (१०।२००) इति

---

व्याख्यामवकल्पयति इत्युदाहरणं च समर्थो भवति इति व्याचष्ट' (पृष्ठ १२, १३) । धातुवृत्तौ (पृष्ठ ३९२) प्रौढमनोरमायां (पृष्ठ ६१९) चेत्थं स्वामिपाठो निर्दिश्यते—'क्षीरस्वामी तु कृपेस्तादर्थ्ये इति पठित्वा तादर्थ्ये इति प्रस्तुतस्य भुवोऽर्थे मिश्रीकरणे, अथवा तच्छब्देन क्लृपिः परामृश्यते । तस्य योऽर्थः सामर्थ्यलक्षणः, तस्मिन्निति द्वेधा व्याख्यद्' इति ।

१. चान्द्रधातुपाठे नैवेमौ धातू पठ्येते । कुत्र चन्द्रेणैतद् व्याख्यातमित्यपि विचारार्हम् ।

२. 'आच्छादने' पाठा० ।     ३. चान्द्रधातुपाठे नैव पठ्यते ।

४. 'आस्वादने' पाठा० । दौर्गधातुपाठस्यास्मद्धस्तलेखे नाय धातुः पठ्यते । अतः पाठशुद्धिः कीदृशीति न ज्ञायते ।

वक्ष्यति, आ एतस्मात् इत ऊर्ध्वं सकर्मकाण्णिच् क्रियते[1]। **शाकटायन**स्त्वाङ्पूर्वात् स्वादेराह[2]—आस्वादयति दधि, अन्यत्र भ्वादित्वात् (१।१८) **स्वदते**, स्वादमनुभवतीत्यर्थः।

**१९४. ग्रस ग्रहणे**। ग्रासयति [फलम्]। **त्रस वारणे** इति **दुर्गः**—त्रासयति मृगान्। **धारण** इति **नन्दी, ग्रहण** इत्येके। अन्यत्र (४।९) त्रसति त्रस्यति ॥२१२॥

**१९५. पुष धारणे**। पोषयत्याभरणान्। भ्वादौ (१।४६२) पोषति, दिवादौ (४।७३)पुष्यति, क्र्यादौ (९।६०) पुष्णाति।२१३

**१९६. दल विदारणे**। दालयति दारु। दालपः, दाल्मिः। भ्वादौ **दल विशरणे** (१।३६६) दलति, मित्त्वाद् (द्र० १।५५२ व्याख्यानम्) दलयति ॥२१४॥

**१९७. पट पुट रुट लुट तुजि पिजि लजि लुजि अजि कुसि कुशि त्रसि दसि दशि घटि रघि लघि अहि बहि महि गुपू धूप विच्छ चीव बर्ह बल्ह पुथ लोकृ लोचृ णद कुप तर्क वृतु वृधु भासार्थाः**। एते सकर्मका भासार्था[3] णिचमुत्पादयन्ति। पाटयति, **फलिपाटि** (उ० १।१८) इति पटुः। भ्वादौ (१।१९८) पटति। एषां गणान्तरे पाठः सकर्मकत्त्वेऽपि णिज्विकल्पार्थः, इहैव पठितांस्तु न्याय्यविकरणान् प्रत्युदाहरन्ति—त्रंसति, कुंसतीति। पोटयति, तुदादौ (६।७२)पुटति। रोटयति, लोटयति, भ्वादौ (१।४९७ पाठा०)रोटते, लोटते, दिवादौ **लुट प्रतिघाते** (तु० ४।११६) लुट्यति। तुञ्जयति, भ्वादौ (१।१५४) तुञ्जति। पिञ्जयति अदादौ (२।२० पाठा०) पिङ्क्ते। लञ्जयति,[4]

---

१. अत्र पुरुषकारधातुवृत्तिकारप्रौढमनोरमाकारा स्वामिपक्षे 'आङ्पूर्वात् स्वदेः सकर्मकाण्णिज् भवति। पय आस्वादयति' इति पाठमुद्दधिरे (पृष्ठ पु० ४४, धा० ३९२, प्रौ० ६१९)। अत्र तु न तथोपलभ्यते।

२. काशकृत्स्नः 'स्वद आस्वादने, आस्वादः सकर्मकात्तु' इति पठन् (पृष्ठ २०८) नायमभिविधावाङ् इति स्पष्टमुद्घोषयति। तथैव शाकटायनोऽपि व्याचष्टे।

३. अत्राह धातुवृत्तिकारः—'तथा च क्षीरस्वामी—भाषा दीप्तिरर्थो येषां भाषार्थाः इति' (पृष्ठ ३९३)। नात्रायं पाठ उपलभ्यते।

४. सस्मार पुरुषकारः (पृष्ठ ६१)।

लञ्जति । लुञ्जयति, लुञ्जति । अञ्जयति, रुधादौ (७।२६) अङ्क्ते, व्यनक्ति । कुंसयति, कुंसति, भ्रुकुंस, भ्रुकुंशः । कुंशयति, कुंशति । त्रंसयति, त्रंसति । दंसयति, दंसति । दंशयति, भ्वादौ **दन्श दशने** (१।७१६) दशति । घण्टयति, घण्टति, घण्टा । रङ्घयति, लङ्घयति, भ्वादौ (१।७५) रङ्घते, लङ्घते । अंहयति, बंहयति, मंहयति, भ्वादौ **अहि गतौ, बहि महि वृद्धौ** (१।४२१, ४२०)—अंहते, बंहते, मंहते । **गोप**यति, धूपयति, विच्छयति, भ्वादौ (१।२८०, २८१॥६।१२७) गोपायति, धूपायति, विच्छायति, **गुपूधूपविच्छ** (३।१।२८) इत्यायः । चीवयति, भ्वादौ **चीव आदाने** (तु० १।६१८)—चीवति । बर्हयति, बल्हयति, भ्वादौ **बर्ह बल्ह प्राधान्ये** (१।४२३)–बर्हते, बल्हते । पोथयति, दिवादौ **पुथ हिंसायाम्** (४।११)—पुथ्यति । विलोकयति, आलोचयति, भ्वादौ (१।६३, १००) लोकते, लोचते । नादयति, भ्वादौ (१।४५) नदति । कोपयति, दिवादौ (४।१२६) कुप्यति । तर्कयति, वितर्कः । तर्कितः । वर्तयति, वर्धयति, भ्वादौ (१।५०४, ५०५) वर्तते, वर्धते । **अन्ये भजिपिसिलडिबृहितडिनटादीन् पठन्ति**—भञ्जयति, रुधादौ (७।२१) भनक्ति । पिंसयति, पिंसति । लण्डयति, लण्डति । बृंहयति, भ्वादौ (१।४८५) बृंहते[1] । ताडयति, तडति । नाटयति, नटति, भ्वादावात्मनेपदीति **नन्दी**–नटते । **पटादयः सकर्मकाः स्वार्थे णिचमुत्पादयन्ति भासार्थाश्चेति पारायणम्**—भासयति दिशः—दीपयति, इन्धयति, प्रकाशयति । **गणान्तरपाठस्त्वेषां कार्यान्तरार्थः** ॥ २१५,२१६—२४६॥

१९८. **पूरी आप्यायने** । पूरयति, दिवादौ (४।४२) पूर्यते ॥२५०

१९९. **रुज हिंसायाम्** । रोजयति । तुदादौ **रुजो भङ्गे** (६।१२१) —रुजति ॥२६१॥

२००. **ष्वद संवरणे**[2] । स्वादयति, सिस्वादयिषति (द्र० ८।३।६२) । भ्वादौ **ष्वद आस्वादने** (१।१८) स्वदते ॥२५२॥

**सकर्मकपर्यट्टकः । अत्र च द्विचत्वारिंशतिसूत्रेषु सप्तसप्ततिर्धातवः।**

२०१. **आ धृषाद्वा । धृष अप्रसहने** (१०।२३६) इति वक्ष्यति, आ एतस्माद् इत उत्तरेभ्यो णिज् वा भवतीत्यधिक्रियते । पक्षे न्याय्यो

१. भ्वादौ परस्मैपदिषु पठ्यते तेन 'बृंहति' इति साधु स्यात् ।

२. उद्धृत धातुवृत्तौ (पृष्ठ ३९४) ।

विकरणः शप् । इह नियमेन णिचो विकल्पः । अनित्यण्यन्तत्वं तु यथालक्ष्यम्, क्वचिद् विकल्पार्थम् ।

२०२. **युज पृची सम्पर्चने**[1] । योजयति, योजति । दिवादौ **युज समाधौ** (४।६७) युज्यते, रुधादौ **युजिर् योगे** (७।७)—युनक्ति । सम्पर्चयति, रुधादौ (७।३०) सम्पृणक्ति, अदादौ **पृची सम्पर्के** (२। २१) संपृक्ते ॥२५३, २५४॥

२०३. **अर्च पूजायाम्**[2] । अर्चयति, अर्चति ॥२५५॥

२०४. **षह मर्षणे** । साहयति, सहति । यथा—**स एवायं नागः सहति कलभेभ्यः परिभवम्** (सुभाषित—६३१) भ्वादौ (१।५६०) सहते ॥२५६॥

२०५. **ईर क्षेपे** । क्षेपः प्रेरणम् । ईरयति, ईरति । अदादौ (२। ११) ईर्ते ॥२५७॥

२०६. **ली द्रवीकरणे** । विलालयति,[3] विलापयति । विलाययति, विलयति, विलयः विलायितम् । **लियो वा**[4] इति व्यवस्थितविभाषात्वाद् विलम्भनपूजाभिभवेभ्योऽन्यत्रात्वं नास्तीत्यैत्वायौ, विलम्भनादावेवात्त्वं पुक् च—कस्त्वमुल्लापयते ? आलापयति, अपलापयते, **लियः संमाननशालीनीकरणयोश्च** (१।३।७०) इति तङ्, **स्नेहविपाटने**[5] **नुक्** (तु० ७।३।३९) घृतं विलीनयति । दिवादौ **लीङ् श्लेषणे** (४।२९)—लीयते क्र्यादौ (९।३२)लिनाति ॥२५८॥

२०७. **वृजी वर्जने** । वर्जयति, वर्जति । अदादौ (२।२० व्याख्याने) वृक्ते, रुधादौ (७।२९) वृणक्ति ॥२५९॥

२०८. **वृञ् आवरणे** । [6]आवारयति; आवरति, आवरते ।

---

१. 'सबन्धने इति क्षीरस्वामी' इति पुरुषकारः (पृष्ठ ५२) ।

२. अत्र बालमनोरमा द्रष्टव्या, चुरादि १८०९ ।

३. 'विलीनयति' पाठा० ।

४. सर० कण्ठा० ६।१।५६॥ पाणिनीयं तु 'विभाषा लीयतेः' (६।१। ५१) द्रष्टव्यम् ।

५. 'विपातने' पाठान्तरम् ।

६. 'आवारयति········वृणीते' पुरुषकारे (पृष्ठ ३९) उद्धृतः । तत्रैव चेतोऽग्रे 'तुदादौ वृङ् संभक्तौ व्रियेत इति' इत्यधिकं पठ्यते, तदत्र नास्ति ।

स्वादौ (५।९) वृणुते, वृणोति, क्र्यादौ **वृङ् सम्भक्तौ** (९।४२) वृणीते[1] ॥२६०॥

२०९. **जॄ वयोहानौ** । जारयति, जरति, जारणा । दिवादौ (४।२०) जीर्यति, जीर्णः । क्र्यादौ (९।२३) जृणाति । **ज्रि** इति च **नन्दी**—ज्राययति, ज्रयति, क्र्यादौ ज्रिणाति[2] ॥२६१॥

२१०. **रिच वियोजन-सम्पर्चनयोः** । रेचयति, रेचति । रुधादौ (७।४) रिणक्ति[3] ॥२६२॥

२११. **शिष असर्वोपयोगे** । असर्वोपयोगोऽनुपयुक्तत्त्वम् । शेषयति, शेषति । विपूर्वोऽतिशये । अतिशय उत्कर्षः । विशेषयति, विशेषति, व्यशेषीत् । रुधादौ **शिष्लृ विशेषणे** (७।१९) विशिनष्टि, व्यशिषत् ॥२६३॥

२१२. **तप दाहे** । तापयति, तपति ॥२६४॥

२१३. **तृप दृप संदीपने**[4] । तर्पयति, तर्पति । दिवादौ **तृप प्रीतौ** (४।८६) तृप्यति । स्वादौ तृप्नोति[5] । दर्पयति, दर्पति । दिवादौ (४।८७) दृप्यति । **चृत छृदेत्येके**—चर्तयति, चर्तति; छर्दयति, छर्दति ॥ २६५,२६६॥

२१४. **दृभी भये** । दर्भयति, दर्भति । क्र्यादौ **दृभी ग्रन्थे**—दृम्णाति[6] ॥२६७॥

---

१ द्र० पूर्वपृष्ठस्था टि० ६ ।

२. उद्धृतोऽयं पाठः पुरुषकारे (पृष्ठ २) ।

३. इतोऽग्रे 'रिङ्क्ते' इत्यधिकम् ।

४. उद्धृतं धातुवृत्तौ (पृष्ठ ३९४) । पुरुषकारकृत्तु 'क्षीरस्वामिमैत्रेयरक्षितौ छदअपवारणे इति यौजादिकस्यैव छदेरूर्जने छादयतीतिमित्त्वार्थो पाठ इत्याहतुः (पुरुषकार, पृष्ठ ८६) ।

५. क्षीरस्वामी स्वादौ तृपधातुं न पठति । काशकृत्स्ने (पृष्ठ १५५)दौर्गे च धातुपाठे 'धिवि तृप प्रीणने' इति पठ्यते । पाणिनिः क्षुम्नादिषु (गण० ८।४।३९) तृप्नोतिशब्दं पठति । तेनास्य स्वादिपाठो युक्तः प्रतिभाति ।

६. क्षीरतरङ्गिण्यां क्र्यादौ दृभी ग्रन्थे न पठ्यते । तुदादौ (६।३५) पठ्यते, तेन दृभति इति युक्तम् ।

२१५. **छद संवरणे**[1] । छादयति, छदति । ऊर्जने घटादिः (१।५५०)—छदयति ।।२६८।।

२१६. **श्रथ हिंसायाम्** । श्राथयति, श्रथति । **श्रन्थेत्येके**—श्रन्थयति, श्रन्थति ।।२६९।।

२१७. **मी गतौ**[2]; **मनने** । माययति, मयति । दिवादौ (४।२७) मीयते, क्र्यादौ (९।४) मीनाति ।।२७०।।

२१८. **क्रथ हिंसायाम्** । क्राथयति, क्रथति । भ्वादौ (१।५३९) मित्—क्रथयति ।।२७१।।

२१९. **शीक आमर्षणे** । शीकयति, शीकति, अशीशिकत् । भ्वादौ **शीकृ सेचने** (१।६२) –शीकते, अशिशीकत् ।।२७२।।

२२०. **अर्द हिसि हिंसायाम्** । अर्दयति, अर्दति । हिंसयति, हिंसति । रुधादौ (७।२४) हिनस्ति ।।२७३,२७४।।

२२१. **आङः षद पद्यर्थे** । पद्यतेरर्थो गतिः । आसादयति, आसदति,[3] **आसीदतीत्येके** । अन्यत्र (१।५९४) सीदति ।।२७५।।

२२२. **शुन्ध शौचकरणे** । शुन्धयति, शुन्धति ।।२७६।।

२२३. **जुष परितर्पणे**[4] । जोषयति, तुदादौ **जुषी प्रीतिसेवनयोः** (६।१०)—जुषते ।।२७७।।

२२४. **धूञ् कम्पने** । धूनयति, 'धावयति' इत्येके[5] । धमते, धवति, धूनितः । स्वादौ (५।१०) धुनोति, धूनोति । तुदादौ (६।९८) धुवति, क्र्यादौ (९।१६) धुनाति ।।२७८।।

---

१. अत्र १०।३६; पृष्ठ २९५, टिप्पणी ५ द्रष्टव्या ।

२. पुरुषकारे (पृष्ठ २७) 'मतविति क्षीरस्वामी' इत्येवमुद्ध्रियते । तथा सति क्षीरस्वामिन इहस्थ. शुद्ध. पाठः 'मी मतौ । मनने ।' इत्येवं स्यात् । 'मतौ' इत्यस्य 'मनने' इत्यर्थनिर्देशः ।

३. द्र० 'अभिषदेत्' कश्यपसंहिता (पृष्ठ ४१) ।

४. 'परितर्पणे परितृप्तिक्रियायाम् इति क्षीरस्वामी' इति पुरुषकारे (पृष्ठ ११७) धातुवृत्तौ (पृष्ठ ३९५) च पाठ उद्ध्रियते, स चात्र न दृश्यते ।

५. उद्धृतं पुरुषकारे (पृष्ठ ३४) ।

२२५. **प्रीञ् तर्पणे**। प्रीणयति,[1] **प्रीञ्धूञोर्नुक् च साहचर्यात्** (तु० ७।३।३७ वा०) प्राययति **इत्येके**, प्रयते, प्रयति, प्रीणितः दिवादौ **प्रीङ् प्रीतौ** (४।३४)—प्रीयते, क्र्यादौ (९।२) प्रीणाति, प्रीणीते ।।२७९।

२२६. **श्रन्थ ग्रन्थ संदर्भे**। संदर्भो बन्धनम् । श्रन्थयति, ग्रन्थयति । श्रन्थति, ग्रन्थति। भ्वादौ **श्रथि शैथिल्ये, ग्रथि कौटिल्ये** (१।२९,३०) श्रन्थते, ग्रन्थते । क्र्यादौ (९।४४,४६) श्रथ्नाति, ग्रथ्नाति ।।२८०, २८१।।

२२७. **आप्लृ लम्भने**। लम्भनं प्राप्तिः । आपयति, आपति, आपितम् । स्वादौ व्याप्तौ (५।१७) आप्नोति । आप्तम् ।।२८२।।

२२८. **तनु श्रद्धोपकरणयोः**। तानयति, तनति, तत्त्वा, तनित्वा, नितान्तम् । तनादौ **तनु विस्तारे** (८।१) तनुते, तनोति, ततः ।

२२९. **उपसर्गाच्च दैर्घ्ये । चकारं भिन्नक्रममाहुः**[2]—प्रतानयति, आतानयति, प्रतनति । **वन श्रद्धोपहिंसनयोरिति चान्द्रं पारायणम्**—वानयति, उपसर्गात्तूद्वानयति, तच्च भ्वादौ **वन शब्दे** (१।३११) इत्येव सिद्धम् ।।२८३।।

२३०. **वद संदेशने**। वादयति, वदति[3], वद्यते। भ्वादौ (१।७३९) वदति, वदते,[4] यजादित्वात् (६।१।१५) संप्रसारणम्—उद्यते। **चन्द्रो वचे**त्यपाठीत्[5] ।।२८४।।

२३१. **मान पूजायाम्**। मानयति, मानति । भ्वादौ[6] (१।६९८) मीमासते ।।२८५।।

---

१. स्मृत पुरुषकारे (पृष्ठ ३०) धातुवृत्तौ (पृष्ठ ३८५) च ।

२. 'चकाराद् विभाषामाह' पाठा० । अत्र 'चकारो भिन्नक्रमः, प्रत्ययार्थं समुच्चिनोति' इति काशिकापाठो (४।४।३६) द्रष्टव्यः । यथा 'पक्षिमत्स्यमृगान् हन्ति, परिपन्थं च तिष्ठति' (४।४।३५, ३६) इति श्लोकानुरोधेन चकारः क्रमं भित्त्वा तिष्ठतेः प्राक् पठ्यते, तथैव 'उपसर्गाच्च दैर्घ्ये' इत्यपि कस्यचिच्छ्लोकबद्धधातुपाठस्यांशः प्रतीयते, तदनुरोधेनैव चात्र चकारो दैर्घ्ये' इत्यतः प्राक् पठ्यते ।

३. 'संवादयति, संवदति' पाठा०।

४ भ्वादौ परस्मैपदिषु पठ्यते । तेन 'वदति' इत्येव युक्तम् । काशकृत्स्ने धातुपाठे तूभयपदिषु पठ्यते (पृष्ठ १६१) ।

५. क्वापाठीदिति न ज्ञायते । ६. इतोऽग्रे 'विचारे' इत्यधिकम् ।

२३२. **भू प्राप्तावात्मनेपदी वा**[1] । सम्भावयते, सम्भवते, इत्थम्भूतः । **भुवोऽवकल्कने** (१०।१८५)—भावयति, भ्वादौ (१।१) भवति पाठादेव सिद्धे वावचनमणिच्संनियोगेऽपि तदर्थम्—**याचितारश्च नः सन्तु दातारश्च भवामहे**[2] ।।२८६।।

२३३. **वच भाषणे** । वाचयति, वचति, वाच्यते, वच्यते । **चन्द्रः** संदेशे चुरादिमाह । अदादौ (२।५७) वक्ति, उच्यते, स्वपिसाहचर्याद् (६।१।१५) आदादिकस्य सम्प्रसारणम् ।।२८७।।

२३४. **गर्ह विनिन्दने** । गर्हयति, गर्हति । भ्वादौ (१।४२२) गर्हते ।।२८८।।

२३५. **मार्ग अन्वेषणे** । मार्गयति, मार्गति[3] । मृग अन्वेषणे (१०। २८३)—मृगयते ।।२८९।।

२३६. **कठि शोके** । उत्कण्ठयति, उत्कंठति । भ्वादौ (१।१६७) उत्कंठते ।।२९०।।

२३७. **मृजूष्**[4] **शौचालंकारयोः** । मार्जयति, मार्जति, मार्जना, मार्जिता, रसाला[5] चेति लोकः । अदादौ (२।६१) संमार्ष्टि, न **लुमताङ्गस्य** (१।१।६१) इत्यस्यानित्यत्वात् मृजेरात् ।।२९१।।

२३८. **मृष तितिक्षायाम्** । मर्षयति, मर्षति । दिवादौ (४।५४) मृष्यति । **केचिद्** अमुमदन्तत्वौपजीवनार्थं व्यत्यस्य पठन्ति[6]—मृषयति, मृषति ।।२९२।।

२३९. **धृष अप्रसहने** । अप्रसहनमभिभवः, अत एव **प्रसहन इति**

---

१. सर्वकोशेषु विद्यमान, क्षीरस्वामिना च व्याख्यायमानं 'वा' पद लिबिशेन भ्रान्त्या निष्कासितम् ।

२. आत्मनेपदं महता प्रपञ्चेन निराकृतं पुरुषकारे (पृष्ठ १२) ।

३. इतोऽग्रे 'संस्कारे च—मार्गयति वाससी' इत्यधिकं क्वचित् ।

४. 'मृजूष् इति क्षीरस्वामी, षकारोऽनर्थ इति च' इत्युद्धृत्य प्रत्याख्यातवान् पुरुषकारः—'तच्चिन्त्यम्—मृजेति भिदादिपाठात् सिद्धेः' इति (पृष्ठ ५७) । 'षकारोऽनर्थः' इति पाठोनेहोपलभ्यते ।

५. द्र० 'रसाला तु मार्जिता' । अमरकोश २।९।४४।। न्यायसंग्रहे तु 'मर्ज शब्दे—मर्जयति । मर्जिता रसाला' इति पठ्यते (पृष्ठ १३९) ।

६. 'अथादन्ताः' इत्युत्तरसूत्रानन्तरमित्यर्थः ।

**युक्तम्**[1]। धर्षयति, धर्षति, प्रधृष्टः, प्रधर्षितः । स्वादौ **ञिधृषा प्रागल्भ्ये** (५।२६) धृष्णोति ॥२६३॥

**सप्तत्रिंशतिसूत्रेषु चत्वारिंशताधातुभिराधृषीयपर्यंट्टकः ।**

२४०. **अदन्ताः** । इत आ गणान्ताद् इत्संज्ञानिषेधार्थमदन्तत्त्वं विधीयते, ततश्च **अतो लोपः** (६।४।४८) इत्यल्लोपस्य स्थानिवत्वाद् वृद्ध्याद्यभावः—कथयति, कथकः, **बहुवचनाद्**[2] **वटिलजिप्रभृतीनाम्** (१०।३०५, ३०६) **अकारान्तागमो भवतीति द्रमिडाः**- वण्टापयति, लज्जापयति ।

२४१. **कथ वाक्यप्रतिबन्धे** । प्रतिबन्धो विच्छेदोदीरणात्,अत एव **वाक्यप्रबन्ध इत्येके** पेठुः । कथयति । अल्लोपात्परापि वृद्धिर्नास्ति, परशब्दस्येष्टवाचित्वात् (१।४।२ भाष्ये) **चिन्तपूजि**(तु० ३।३।१०५) इत्यङ्—कथा—**णेरनिटि** (६।४।५१) इति लोपः, कथकः, संकथय्य, **ल्यपि लघुपूर्वात्** (६।४।५६) इत्यत् । अचकथत् **सन्वल्लघुनि** (७।४।९३) इति नास्त्यग्लोपित्वात् । कथमचीकथत् ? **प्रकृत्यन्तरं**[3] **अन्वेष्यम्** ॥२६४॥

२४२. **वर ईप्सायाम्** । कन्यां वरयति, वरः चुरादिवृञो (१०।२०८) वारयति, वरति, वरते, स्वादौ **वृञ् वरणे** (५।६)—वृणोति, वृणुते, क्र्यादौ **वृङ् सम्भक्तौ** (९।४२) वृणीते ॥२६५॥

२४३. **गण संख्याने** । गणयति । **ई च गणः** (७।४।९७) अजीगणत्, अजगणत् । गणकः, गणिका, गणः, गणना, गणनम् ॥२६६॥

२४४. **शठ श्वठ असम्यगाभाषणे**[4] । शठयति, श्वठयति ।

---

१. 'इत्युक्तम्' पाठा० ।

२. 'अथादन्ताः' इति सूत्रे । नादन्तात् सन् इति काशकृत्स्नाः प्रतिजानते । (का० धातु० ९।१९३; पृष्ठ २०९) ।

३. स्मृतं प्रक्रियाकौमुद्याम् (पृष्ठ २९५) ।

४. अत्र पुरुषकारः 'सम्यगाभाषणे सम्यग्वचनक्रियायामिति क्षीरस्वामी' इति क्षीरपाठमुद्धरति (पृष्ठ ६९)। न च तथात्र पाठो दृश्यते । युक्तश्चायमेव पाठः । काशकृत्स्नदुर्गावपि 'शठ श्वठ सम्यगाभाषणे' इति पेठतुः (काश० धातु० पृष्ठ २०९) ।

भ्वादौ **शठ कैतवे** (१।२३६)—शठति, हेतौ शाठयति, **श्वठ गतौ** (१०।२६) इतीहत्यस्य श्वाठयति ।।२९७, २९८।।

२४५. **पट वट ग्रन्थे।** ग्रन्थो वेष्टनम्[1] । पटयति रज्जुम्, वटयति । पटादिदण्डके (१०।१९७) पाटयति । भ्वादौ **अट पट गतौ वट वेष्टने** (१।१९८, २०२) पटति, वटति, हेतौ—पाटयति, वाटयति ।।२९९, ३००।।

२४६. **रह त्यागे।** रहयति । विरहः । (१।४८३) रहति, हेतौ राहयति ।।३०१।।

२४७. **रहि गतौ।** रंहयति, रंहापयति । भ्वादौ (१।४८४) रंहति ।।३०२।।

२४८. **स्तन-गदी[2] देवशब्दे।** देवोऽभ्रम् । गदिर् **इक्श्तिपौ धातुनिर्देशे** (३।३।१०२ वा०), इदित्त्वन्त्वयुक्तम्, अणिच्पक्षे गत्तादिरूपादर्शनात् । अत एव स्तन[3] **गद शब्दे** इति **चन्द्रः**(तु०चा०धा०१०।८३) । स्तनयति, गदयति, अजगदत् । **स्तनिहृषिपुषिगदि**(उ० ३।२९) इति णेरित्नुच् स्तनयित्नुः, गदयित्नुः । भ्वादौ (१।३१०; ४३) स्तनति, गदति, हेतौ स्तानयति, गादयति, अजीगदत् ।।३०३, ३०४।।

२४९. **पत गतौ वा।** पतयति, पततिः अपपतत्, अपातीत् । **स्पृहिगृहिपति**(३।२।१५८) इत्यालुच् पतयालुः । भ्वादौ(१।५८०) पतति, अपप्तत् । **अन्ये पत ऐश्वर्ये इति पेठुः, वाशब्दस्तूत्तरैकदेशार्थ**[4]**: 'वावृतुवत्** ।।३०५।।

---

१. स्मृत पुरुषकारे (पृष्ठ ६७) धातुवृत्तौ (पृष्ठ ३९७) च ।

२. द्विवचनस्य रूपम् । श्लोकात्मक एव पाठे द्विवचनत्व सम्भवति । तस्मात् कस्यचिच्छ्लोकात्मकस्य धातुपाठस्येयं प्रतिच्छाया । नान्यत्र क्वचिदप्येवं द्विवचनेन वा धातोः पाठ उपलभ्यते ।

३. मुद्रिते चान्द्रधातुपाठे 'ष्टन' षोपदेशः पठ्यते । अत्राह पुरुषकारः 'न चास्यापि दन्त्यपरसादित्वात षोपदेशत्वम् ? स्म्याछेकाच्साहचर्यादनेकाचा नैतदित्याहुः' (पृष्ठ ९२) ।

४. स्मरति धातुवृत्तिकार (पृष्ठ ३९७),निराचष्टे च । अत्रेदमवधेयम्—यथा 'तपऐश्वर्येवावृतुवरणे' (४।४८, ४९) इति संहितापाठे पठ्यमानो 'वा' शब्द विगृहीतपाठे पूर्वसूत्रस्यान्त्यावयवयो भवति, पक्षान्तरे च वृतुना संयोज्य

२५०. **पश अनुपसर्गात्** । **गतावित्येव, अर्थानिर्देशात्** । **अनार्षो-ऽयमिति चन्द्रः** । **भ्वादेश्चुरादेश्चानुपसर्गस्य पशेर्णिच्यदन्तत्वविधिरि-त्येके**– पशयति । उपसर्गान्नास्ति प्रपशति । **पशोऽनुपसर्गाद् वादन्त इत्येके**–पशयति, पाशयति । मूर्धन्यान्तोऽयमिति **नन्दी** ॥३०६॥

२५१. **स्वर आक्षेपे** । स्वरयति । भ्वादौ **स्वृ शब्दोपतापयोः** (१। ६६४)—स्वरति, हेतौ स्वारयति ॥३०७॥

२५२. **रच प्रतियत्ने** । रचयति । रचना ॥३०८॥

२५३. **कल गतौ संख्याने च** । कलयति[1] । भ्वादौ **कल शब्दसंख्या-नयोः** (१।३३२)– कलते, हेतौ कालयति, क्षेपार्थात् (१०।५९)— कालयति गाम् ॥३०९॥

२५४. **चह कल्कने** । कल्कनं दम्भनम् । चहयति, अचचहत् । भ्वादौ(१।४८२) चहति, अचीचहत् ॥३१०॥

२५५ **मह पूजायाम्** । महयति, भ्वादौ[2] महति, कण्ड्वादौ (गण० ३।१।२७) महीङ्– महीयते । **अविमह्योष्टिषच्** (उ० १।५)— महिषः । **महेरिनश्च** (तु० उ० २।६६) महिनः । **श्वन्नुक्षन्** (उ० १।१५९) इति मघवन् । **वर्तमाने पृषद्बृहद्** (उ० २।८४)—महत् । **पुंसि संज्ञायां घः** (३।३।११८)—मही ॥३११॥

२५६. **शार कृप श्रथ दौर्बल्ये** । शारयति, अशशारत् । ऋचादौ शॄ (९।१७)—शृणाति, अशीशरत् । **शर** इति **नन्दी,** अदन्तपाठो **नाग्लोपि** (७।४।२) इत्यर्थः– अशशरत् । **सारेति दुर्गः** । कृपयति, अचकृपत्, [कृपणः], कृपणा । अडिवधौ (द्र० २।३।१०४) कृपा, **कृपेस्तादर्थ्ये**[3] लः— कल्पयति । भ्वादौ **कृपू सामर्थ्ये** (१।५०८)—

---

'वावृतु' धातुः स्वीक्रियते, सहितापाठस्थो 'वा' शब्दः पक्षान्तरे उत्तरधातुना सयुज्यते 'वा पश' इति । सायणस्त्वत्र 'वा' निपातः पृथगेव विकल्पार्थ इति ब्रवीति । तस्माद् 'वावृतुवत्' इति स्वामिवचनमयुक्तम् इत्याह (पृष्ठ ३९७) ।

१. 'दिश ताराश्च' इत्यधिकं क्वचित् ।

२. नोपलभ्यते क्षीरतरङ्गिण्याम् ।

३. अत्र लिबिशेन चौरादिकस्य सूत्रस्य(१०।१८६)संख्या निर्दिष्टा । यथा त्वत्र पाठस्तथाऽनेन लत्व विधीयते । इदं लत्वविधायक सूत्रं क्वस्त्यमिति न ज्ञायते ।

कल्पते। श्रन्थयति। **कपिरिकादित्वात्** (तु० ८।२।१८ भा०) श्लथयति। **श्रथ प्रतिहर्षे** (१०।१३)—श्राथयति ॥३१२—३१४॥

२५७. **स्पृह ईप्सायाम्। स्पृहेरीप्सितः** (१।४।३६) सम्प्रदानम्—पुष्पेभ्यः स्पृहयति। **स्पृहिगृहि** (३।२।१५८) इत्यालुच्—स्पृहयालुः ॥३१५॥

२५८. **भाम क्रोधे।** भामयति, अबभामत्। भ्वादौ (१।२९८) भामते, अबीभमत् ॥३१६॥

२५९. **सूच पैशुन्ये।** सूचयति, असुसूचत्। सूचकः। **सूचट्** (गण० ३।१।१३४)—सूची, सूचिः। **सूचेः क्ष्मन्**[1] (तु० उ०४।१७७) सूक्ष्मम्। **सूचिसूत्रि** (३।१।२२ वा०) इति यङ्—सोसूच्यते। **एकाचाम् एव षोपदेशत्वं स्मि**[2]**प्रभृतिभिः साहचर्यादाहुः**,[3] अतः सूच-सूत्र-संग्राम-सान्त्व-साम-समाज-स्थूल-स्तन-स्तोमानां षत्वं नास्ति। विषूचिका सुषामादौ (गण० ८।३।९८) ॥३१७॥

२६०. **खेट भक्षणे।** खेटयति, अचिखेटत्। खेटो ग्रामः। भ्वादौ **खिट उत्रासे** (१।२०३)—खेटति, अचीखिटत्। आखेटः। **खोड**[4] इति **दौर्गाः** ॥३१८॥

२६१. **खोड क्षेपे।** खोडयति। खोट खोडेति **पाठभेदः** ॥३१९॥

२६२. **गोम उपलेपने।** गोमयति क्ष्माम्। गोमयम्। **प्रकृतिप्रत्ययविभागस्य काल्पनिकत्वात्कस्मिंश्चित्काले गोमाद् गोमयसिद्धिः, अद्यत्वे तु 'गोश्च पुरीषे'** (४।३।१४५) **मयट्। एवं कुमारादावनुमन्तव्यम्** ॥३२०॥

२६३. **कुमार क्रीडायाम्।** कुमारयति। कुमारयतीति कुमारः, कुत्सितो मारो यस्य वा ॥३२१॥

२६४. **शील उपधारणे।** उपधारणमभ्यासः परिचय **इत्येके।** शीलयति, अशिशीलत्। भ्वादौ **शील समाधौ** (१।३४८)—शीलति, अशीशिलत् ॥३२२॥

---

१. 'स्मन्' इत्येव युक्तः पाठः, तेनैव 'सूक्ष्म' पदनिष्पत्तेः।

२. स्मिङ् प्रभृतिभिः' पाठा०।

३. द्र० पूर्व पृष्ठ १८ टि० ४।

४. 'खोट' पाठान्तरम्। अस्मद्दौर्गधातुपाठकोशे 'खेट भक्षणे खोट क्षेपे' इत्येव पठ्यते।

२६५. **साम सान्तने** । सान्तनं प्रीणनम् । सामयति, अससामत् । **साम सान्त्वप्रयोगे** (१०।२६ चान्द्रमते) इत्यस्यासीसमत् । **नामन्-सामन्** (दश० उ० ६।७६) ॥३२३॥

२६६. **वेल कालोपदेशे** । वेलयति, अविवेलत् । भ्वादौ **वेलृ गतौ** (तु० १।३६०)—वेलति, वेला, तस्याप्यृदित्त्वाद् (द्र० ७।४।२) अविवेलत् । तेनात्रैनं **चन्द्रो** नाध्यैष्ट ॥३२४॥

२६७. **पल्यूल लवनपवनयोः** । **लवनपतनयोरिति दुर्गः**[1] । पल्यूलयति क्षेत्रम्, कूलं पल्यूलयति वायुः । **वल्यूलेति दौर्गाः**[2] ॥३२५॥

२६८. **वा गतिसुखसेवनयोः** । वापयति[4] । आदन्तत्त्वात् दीर्घे[5] अय् लुक् ल्यपि (द्र० ६।४।५६)— निर्वाप्य । अदादौ (२।४३) **वा गतिगन्धनयोः**—वाति । **वातेत्येके** वातयति, अववातत् ॥३२६॥

२६९. **गवेष मार्गणे** । गवेषयति, गवेषणा ॥३२७॥

२७०. **वास उपसेवायाम्** । वासयति, अववासत् । वासकः, वासना । भ्वादौ (१।७३३) वसति, अवीवसत्, अदादौ (२।१६) वस्ते इह वस स्नेहादौ (१०।१८२)—वासयति ॥३२८॥

२७१. **निवास आच्छादने** । निवासयति, **निवासयित्वा,[6] अनिनिवासत्[6]; न्यवासदित्येव युक्तम्[6],** उपसर्गस्य

---

१. अस्मद्दुर्गधातुपाठकोशे 'लवनपवनयोः' इत्येव पाठः, तथैव तदुपजीव्ये काशकृत्स्नधातुपाठेऽपि ।

२. अस्मद्दुर्गधातुपाठकोशे 'पल्यूल' इत्येय पाठः । काशकृत्स्ने तु 'पल' इत्येव धातुः पठ्यते । ३. गतौ सुखसेवने चेत्यर्थः ।

४. स्मृतं पुरुषकारे (पृष्ठ २२) ।

५. अत्र 'दीर्घे' इत्यस्य स्थाने 'पुकि' इति युक्तः पाठः । 'अय्लुक्' अय्=णिच् ।

६. इह संग्रामयतेरिव निवासयित्वा अनिनिवासत् इत्येव युक्तं रूपम्, न तु 'न्यववासत्' इति । यत्तु स्वामिना 'उपसर्गस्य बाह्यत्वात्' इति हेतुरुक्तः, सोऽपि चिन्त्यः, संग्राम इव निवाससमुदायस्य धातुसंज्ञत्वात् । सन्ति चान्येऽपि 'व्यय वीर' आदयो धातवो येषूपसर्गा धात्वेकदेशा एव । येषां चैकदेश उपसर्गस्तेष्वड् उपसर्गात् प्रागेव भवति, न परः । तस्मात् 'अवश्य सग्रामयतेः सोपसर्गाद्रुत्पत्ति-

बाह्यत्वात्[1] ॥३२९॥

२७२. **भाज पृथक्कर्मणि** । विभाजयति, अबभाजत् । भाजितम्, विभाज्य । भ्वादौ **भज सेवायाम्** (१।७२५)—भजते, भजति, अबीभजत्, **भज विश्राणने** (१०।१७९)—भाजयति ॥३३०॥

२७३. **सभाज प्रीतिदर्शने** । सभाजयति, सभाज्यते । सभाजनम्, सभाजना, सभाजकः, सभाजः ॥३३१॥

२७४. **ऊन परिहाणे** । ऊनयति, मा भवानूनिनत् । ऊनितम्, ऊनोऽचि (द्र० ३।१।१३४) ॥३३२॥

२७५. **ध्वन शब्दे** । ध्वनयति । भ्वादौ (१।३१०)—ध्वनति, ध्वनिः, ध्वानयति ॥३३३॥

२७६. **कूट दाहे**[2] । कूटयति, अचुकूटत् ॥३३४॥

२७७. **केत विश्रावणे** । निमन्त्रण इत्येके । केतयति, अचिकेतत् । केतितः, संकेत्य, संकेतः । भ्वादौ **कित निवासे** (१।७२०)—केतति, अचीकितत् ॥३३५॥

---

र्वक्तव्या' इति भाष्यवचनमुपलक्षणमेव । वस्तुतस्तु सर्व एव द्विविधा धातवः सोपसर्गाः, निरुपसर्गाश्च । तदुक्त परिभाषाकृता—'पूर्व हि धातुरुपसर्गेण युज्यते पश्चात् साधनेन इति' । अस्मिन् दर्शने उपसर्गत्वेन स्वीकृतांशसयुक्ता एव पूर्णा धातवः संभू, विभू, पराभू इत्येवमादयः । तेभ्यः उपसर्गयोगे सति पश्चात् यदा साधनेन=कारकेण योगो भवति तदा तेभ्यः उत्पद्यमानः 'अट्' सोपसर्गरूपात् प्राक्प्रयुज्यते, उपसर्गांशस्यापि धात्ववयवत्वात्, । तेन असम्भवत्, अविभवत्, अपराभवत् इत्यादीन्यपि रूपाणि सम्पत्स्यन्ते । अत एव निवासयित्वा, प्रार्थयित्वा इत्यादौ समासाभावात् ल्यबपि न भवति । यदा तु 'पूर्व धातुः साधनेन युज्यते पश्चादुपसर्गेण' इति पक्षस्तदा अभवत् इत्येव रूपे निष्पन्ने सोमादय· संयुज्यन्ते, तदा 'समभवद्' इत्यादिरूपाणि च भवन्ति। धातूनां द्विविधत्वमस्माभिः स्वीये 'सं० व्या० शास्त्र का इतिहास' नाम्नि ग्रन्थे (भाग १,पृष्ठ २४—२५, स० २०४१) विस्पष्टीकृतम् ।

१. उपसर्गस्य बाह्यत्वे पार्थकत्वे वा पूर्वाद् वासयतेरेव धातो रूपसिद्धौ कि धात्वन्तर कल्पनया ।

२. 'परिदाहे इत्यन्ये' इति धातुवृत्तिकारः (पृष्ठ ३९९) ।

२७८. **कुण गुण चामन्त्रणे** । चकारात्केतोऽपि । आमन्त्रणं गूढोक्तिः। संकेतयति, कुणयति, गुणयति, अचुकुणत्, अजुगुणत् । तुदादौ (६।४६) कुणति, अचूकुणत्, **कूण संकोचने** (१०।१३६)——विकूणयते मुखम् ।।३३६, ३३७।।

२७९. **स्तेन चौर्ये** । स्तेनयति, अतिस्तेनत् । 'स्तेनोऽचि' (द्र० ३। १।१३४) ।।३३८।।

**स्तेनान्ते पर्यट्टके चतुर्विंशे सूत्रशते षट्षष्टं धातुसूत्रशतम्** ।

२८०. **आ गर्वादात्मनेपदी** । गणः इति शेष ।

२८१. **पद गतौ** । पदयते । दिवादौ (४।६१) पद्यते, हेतावुपपादयति, भ्वादौ **पद स्थैर्ये** (१।४२ मतान्तरे)—पदति ।।३३९।।

२८२. **गृह ग्रहणे** । गृहयते, अजगृहत । **स्पृहिगृहि** (३।२।१५०) इत्यालुच्—गृहयालुः, गृहितम् ।।३४०।।

२८३. **मृग अन्वेषणे** । मृगयते । **मृगिकम्प्योः शविधिः**[1]—मृगया, मृगितम्[2] ।।३४१।।

२८४. **कुह विस्मापने** । कुहयते । कुहेयम्[3], कुहकः, कुहना ।३४२

२८५. **शूर वीर विक्रान्तौ** । शूरयते, अशुशूरत । दिवादौ **शूरी हिंसायाम्** (४।४६)—शूर्यते, हेतौ शूरयति, अशूशुरत् । वीरयते—वीरः ।।३४३।।

२८६. **स्थूल परिबृंहणे** । परिबृंहणं पीनत्वम् । स्थूलयते, अतुस्थूलत । 'स्थूलोऽचि' (द्र० ३।१।१३४) ।।३४४।।

२८७. **अर्थ उपयाच्ञायाम्** । अर्थयते, आर्तिथत, अर्तिथयिषते[4] ।।३४५।।

२८८. **सत्त्र**[5] **सन्तानक्रियायाम्** । सत्त्रयते, असससत्त्रत, सिसत्त्रयिषते[4] ।।३४६।।

---

१. अत्र पूर्वं ६३ पृष्ठस्था टिप्पणी २ द्रष्टव्या ।

२. इतोऽग्रे 'मृगः' इत्यधिकम् ।

३. कुहा+इयम् इति च्छेदः । द्र० वर्णनेयम् धा० १०।३२४ सूत्रे ।

४. नादन्तात् सन् इति काशकृत्स्नसूत्रेण (पृष्ठ २०९) अदन्तेभ्यो धातुभ्यः सन् न भवति ।

५. सर्वकोशेषु 'सत्र' एकतकारवान् पाठ. ।

२८९. **गर्व माने** । गर्वयते । भ्वादौ **गर्व दर्पे** (१।३८४)—गर्वति ।।३४७।।

**आगर्वीयपर्यन्तके दश धातवः ।**

२९०. **सूत्र विमोचने** । विमोचनं मोचनाभावः, ग्रन्थनम् । सूत्रयति । असुसूत्रत् ।।३४८।।

२९१. **मूत्र प्रस्रवणे**[1] । मूत्रयति । अमुमूत्रत्[2] ।।३४९।।

२९२. **रूक्ष पारुष्ये** । रूक्षयति, अरुरूक्षत् । विरूक्ष्य, रूक्षः ।३५०

२९३. **पार तीर कर्मसमाप्तौ** । पारयति, अपपारत् । **अनुपसर्गाल्लुम्पविन्द** (तु० ३।१।१३८)इति शः—पारयः । पारितम्, पारणा । तीरयति, अतितीरत्, तीरम् ।।३५१,३५२।।

२९४. **श्लेष्क दर्शने** । श्लेष्कयति ।।३५३।।

२९५. **कर्तृ शैथिल्ये** । कर्त्रयति[3], कर्त्रितम् । **कर्तुरगाढत्वेऽपि श्लेष्को वर्तना**[4] **इत्येके । चन्द्र** ऋदितन्धातुं मन्यते—कर्तयति । अदन्तमध्येऽनार्षोऽयमित्येके । **दुर्गः**— **कर्त्रे**त्याह—कर्त्रयति ।।३५४।।

२९६. **प्रातिपदिकाद्धात्वर्थे, बहुलमिष्ठवच्च** । यतस्ततः प्रातिपदिकान्नाम्नो यथादर्शनं[5] धात्वर्थे, क्रियाविशेषणे, णिज् भवति । कूलमुल्लङ्घयति उत्कूलयति । कूलप्रतीपङ्गच्छति—प्रतिकूलयति । कूलमनुगच्छति - अनुकूलयति । लोष्टान्यवमर्दयति—अवलोष्टयति । तृणान्युत्पूल्य शातयति—उत्तृणयति । पुत्रं सूते—पुत्रयति । वृक्षं रोहति —वृक्षयति ।

**तत्रैव निदर्शनार्थमाह**—

२९७. **तत्करोति** । २९८. **तदाचष्टे** । २९९. **तेनातिक्रामति** । ३००. **धातुरूपञ्च** ।

---

१. इतोऽग्रे 'मूत्रणे' इत्यधिकम् । २. इतोऽग्रे 'मूत्रमचि' इत्यधिकम् ।

३. 'कर्तृ' इत्यस्यानृदित्वे 'कर्तारयति, कर्तारितम्' इत्यादीनि रूपाणि स्युः । ऋदित्वे तु कर्तयति, यथाह चान्द्रमते । 'कर्त्रयति' इत्यत्र वृद्ध्यभावः कथमिति न ज्ञायते ।

४. अर्थात् 'श्लेष्को दर्शने कर्तृ शैथिल्ये' इत्येकं सूत्रम् । तथा सति अर्थद्वयसमुच्चयाय चकारेण भाव्यम् । ५. 'यथादर्शनात्' पाठा० ।

तदिति द्वितीयासमर्थात् प्रातिपदिकात् करोत्यर्थे आचष्टेऽर्थे च णिज् भवति, तथा तेनेति तृतीयासामर्थ्याद् अतिक्रामत्यर्थे णिज् भवति ।

तीक्ष्णं करोति—तीक्ष्णयति, सूत्रयति । वाक्यमाचष्टे—वाक्ययति, वेदयति । हस्तिनाति[1] क्रामति—हस्तयति, अश्वयति । स च णिज् **इष्टवद् बहुलं भवति** । कानि पुनरिष्ठवत्वे प्रयोजनानि ? **णाविष्ठवत्प्रातिपदिकस्य इति पुंवद्भावो रत्वं टिलोपो यणादिलोपपूर्वगुणौ प्राद्यादेशा विन्मतोर्लुक् च** (द्र० महा० ६।४।१५५) हरिणीमाचष्टे—हरितयति, पृथुमाचष्टे—प्रथयति, पटुमाचष्टे—पटयति, दूरं नयति—दवयति, युवानमीक्षते-यवयति, क्षिप्रं भुङ्क्ते—क्षेपयति, क्षुद्रं भाषते[2] —क्षोदयति, युवानमल्पमाचष्टे—कनयति, स्रग्विणमाचष्टे—स्रजयति, धनवन्तमाचष्टे—धनयति, बहुलमिति प्रियमाचष्टे—प्रापयति । **प्रकृत्यैकाज्** (६।४।१४६) इति टिलोपो नास्ति, बहुलमिति एकाच् प्रकृतिवत्त्वाद् वा—सुखापयति, दुःखापयति, नेष्ठवत्त्वम्, न च भवति—प्रयति, सुखयति, दुःखयति । एवं प्रथयतीत्यादौ उपधावृद्धि[3]रपि नास्ति । धातुरूपञ्च प्रातिपदिकस्य भवतीत्यनेन **कात्यायनोक्तं** स्मरयति— **आख्यानात्कृतस्तदाचष्ट इति कृल्लुक्, प्रकृतिप्रत्यापत्तिः,प्रकृतिवच्च कारकम्** (३।१।२६ वा०) इति । कंसवधमाचष्टे—कंसं घातयति, न तु कंसं वधयतीति, बलिं बन्धयति । आख्यानादिति न वाच्यम् इहापि दर्शनात्—राजागमनमाचष्टे—राजानमागमयति । आचष्ट इत्यपि न वाच्यम्, चित्रपुस्तेष्वपि दर्शनात् । **आलोपश्च कालात्यन्तसंयोगे मर्यादायाम्** (तु० ३।१।२६ वा०)—आरात्रि विवासमाचष्टे—रात्रिं विवासयति । **चित्रीकरणे प्रापि** (३।१।२६ वा०)—उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमनं प्राप्नोति—सूर्यमुद्गमयति । **नक्षत्रयोगे ज्ञि** (३।१।२६ वा०)—पुष्येण योगं जानाति, पुष्येण योजयति चन्द्रम् । प्रातिपदिकपरिगणनं छिद्रकर्णान्धदण्डादिभिः (१०। ३१०, ३११, ३१२) इति न वाच्यम्, निदर्शनार्थत्वात् यद् वक्ष्यति—**बहुलमेतन्निदर्शनम्** (१०।३२५) ।

---

१. 'हस्तेनातिक्रामति' पाठा० ।

२. 'भीषयते' पाठा० । ३. 'रपरा वृद्धिः' पाठा० ।

३०१. **कर्तृकरणार्थे** । कर्तुः सम्बधिन्यर्थे करणवाचिनो यथा-दर्शनं णिज् भवति, कर्तृकरणयोरर्थे वा । आलानेन बध्नाति—आलानयति हस्तिनम् । दात्रेण लुनाति—दात्रयति व्रीहीन्, छन्दसोपसान्त्वयति—उपच्छन्दयति । वारिणा सिञ्चति—वारयति । **प्रियैः सलीलं करवारिवारितः,**[1] हस्तेनापनयति[2]—अपहस्तयति । तिलकेन मण्डयति—तिलकयति इयं सूक्तिरचना ।

३०२. **चित्र चैत्रस्य करणे** । चित्रयति, वैचित्र्यं संपादयतीत्यर्थः । विचित्रितम्, विचित्रणा **चित्रस्यालेख्यस्य करण** इति **दौर्गाः** ॥३५५॥

३०३. **कदाचिद्दर्शने** । स एव चित्रशब्दः कदाचिद्दर्शने आकस्मिकोत्पत्तौ चुरादिः । चित्रयति, अद्भुतम्पश्यतीत्यर्थः । यथा **चित्रङ आश्चर्ये,** क्यच्, **नमोवरिबश्चित्रङः** (३।१।१९) इति—चित्रीयते । **चन्द्रः कदाचि**दिति धातुं मत्त्वाऽनदन्तत्त्वान्नापाठीत् ।

३०४. **अंश समाघाते** । समाघातो विभाजनम् । अंशयति **चन्द्रो** दन्त्यान्तमाह—अंसयति, मयूरव्यंसकः ॥३५६॥

३०५. **वटि विभाजने** । वण्टयति, भ्वादौ (१।१७४ नन्दिमते) वण्टति ॥३५७॥

३०६. **लजि प्रकाशने** । लञ्जयति । भासार्थोऽपि दृष्टः (१०।१९७) भ्वादौ **लज लजि भर्त्सने** (१।१५१) लञ्जयति हेतौ ॥३५८॥

३०७. **मिश्र सम्पर्चने** । सम्पर्चनं श्लेषः । मिश्रयति 'मिश्रोऽचि' (द्र० ३।१।१३४) ॥३५९॥

३०८. **संग्राम युद्धे** । संग्रामयति[3], संग्रामयित्त्वा । सिसंग्रामयिषति, असंग्रामयत् । संग्रामोऽचि (द्र० ३।१।१३४) । पूर्वेण (१०।२९७) सिद्धे ग्रामयतेरेव सोपसर्गान् नियमार्थं सूत्रम् ॥३६०॥

---

१. 'वारितः' कोशपाठः । अनुपलब्धमूलमिदम् ।

२. 'हस्तेनाक्षिपति' पाठा० ।

३. कैयटोऽनुदात्तेत्त्वमाह (प्रदीप ३।१।१२) । मैत्रेयोऽप्यात्मनेपदमुदाजहार । महाभाष्ये 'अवश्य संग्रामयतेः सोपसर्गादुत्पत्तिर्वक्तव्या—असङ्ग्रामयत शूर इत्येवमर्थम्' । ३।१।१२ । अत्रात्मनेपदनिर्देशात् 'संग्रामयति' इति चिन्त्यम् ।

३०९. **स्तोम श्लाघायाम्** । स्तोमयति, स्तोमः, अतुस्तोमत् ।३६१

३१०. **छिद्र कर्ण भेदे** । द्वौ धातू । छिद्रयति, कर्णयति, आकर्णयति, **करणभेद** इति **गुप्तः** ॥३६२॥

३११. **अन्ध दृष्ट्युपसंहारे** । अन्धयति, अन्दिधयिषति ॥३६३॥

३१२. **दण्ड दण्डनिपातने** । दण्डयति ॥३६४॥

३१३. **अकि लक्षणे** । अङ्कयति गाम् । भ्वादौ (१।६९) अङ्कते । **केचिद्** एकादिपदे ॥३६५॥

३१४. **अङ्ग पदलक्षणयोः** । अङ्गयति, अङ्गितः । **अङ्घेत्येके**—अञ्जिघयिषति, पूर्वस्याञ्जिगयिषति । **अङ्केत्यन्ये**—अञ्चिकयिषति ॥३६६॥

३१५. **सुख दुःख[1] तत्क्रियायाम्** । सुखनं दुःखनं च तत्क्रिया । सुखयति,[1] सुसुखयिषति । दुःखयति[1] ॥३६७, ३६८॥

३१६. **रस आस्वादन-स्नेहनयोः** । रसयति, रसना, रसः । भ्वादौ **रस शब्दे** (१।४६९)—रसति, हेतौ रासयति ॥३६९॥

३१७. **व्यय गतौ** । व्यययति । अवव्ययत् । भ्वादौ (१।६२०) व्ययति, व्ययते, अव्ययीत्, हेतौ व्याययति, व्ययोऽचि (द्र० ३।१।१३४) ॥३७०॥

३१८. **वित्त समुत्सर्गे** । समुत्सर्गस्त्यागः । वित्तयति, वित्तितम्, वित्तित्वा । **व्यय वित्तसमुत्सर्गे** इति**सभ्याः** ॥३७१॥

३१९. **रूप रूपक्रियायाम्** । **रूपक्रिया राजमुद्रादिरूपस्य करणम्**[2] । रूपयति, रूपकम् । **रूपदर्शनं वा**[2]— निरूपयति, निरूपणा ॥३७२॥

३२०. **छेद द्वैधीकरणे** । छेदयति, अचिच्छेदत् । छेदितम् । अविच्छेद्यम्, विच्छेद्य । रुधादौ (७।३) छिनत्ति, अचिच्छिदत् ॥३७३॥

३२१. **छद अपवारणे** । छदयति । **छद संवरणे** (१०।३६, २१५)—छादयति, उणादौ छत्वर (द्र० उ० ३।१), छत्रम् (द्र० उ० ४।

---

१. 'तत्करोतीत्येवंसिद्धे सोपसर्गसमुदायाण्णिजर्थमिदम्' इति मैत्रेयः तेन असुखयत् अदुःखयत् इत्यादिरूपाणि ।

२. स्मृतं धातुवृत्तौ (पृष्ठ ४०१) ।

१५९), छद्म (द्र० उ० ४।१४५) छदिस् (द्र० उ० २।१०८) ॥३७४॥

३२२. **लाभ प्रेरणे**। लाभयति। अललाभत्। लभेति **सभ्याः**[1] लभितम्, विलभना। भ्वादौ (१।७०१)—लभते—अलीलभत्[2]।३७५

३२३. **व्रण गात्रविचूर्णने**। व्रणयति, अवव्रणत्। भ्वादौ (१। ३०२)—व्रणति, हेतौ व्राणयति, अविव्रणत् ॥३७६॥

३२४. **वर्ण वर्णक्रियाविस्तारगुणवचनेषु**। वर्णक्रिया = वर्णनं वर्णकरणं वा। कथां वर्णयति, सुवर्णं वर्णयति। विस्तारे—वर्णनेयम्। गुणवचनं स्तुतिः शुक्लाद्युक्तिर्वा—राजानमुपवर्णयति, वर्णकः ॥३७७॥

**अदन्तपर्यट्टकः।**

३२५. **बहुलमेतन्निदर्शनम्**[3]। यदेतद् भवत्यादिधातुपरिगणनं तद् बाहुल्येन निदर्शनत्वेन ज्ञेयम्। तेनापठिता **मिलि-क्लविप्रभृतयो लौकिकाः** (द्र० वामनीयः काव्यालङ्कारः ५।२।२) **स्तम्भुस्तुम्भादयश्च** (३।१।८२) **सौत्राश्चुलुम्पादयश्च** (३।१।३५ वा०) **वाक्यकारीया धातव उदाहार्याः**। वर्धते हि धातुगणः। तथा च **श्रीभोजः**—

**मिलन्त्याशासु जीमूताः, विक्लवन्ते दिवि ग्रहाः।**
**तपः क्षपयति प्रावृट्, क्षीयन्ते कामिविग्रहाः ॥१॥**

**अतस्तुनीहि मासर्तुं न् वसन्तो मानघ स्मरः।**
**दूतिद्रूतिमृतीयस्व जिजावयिषति स्मरः ॥२॥**

**मुषलक्षपहुंकारस्तोमैः कलमखण्डिनि।**
**कुचविष्कम्भमुत्तभ्नन् निष्कुभ्नातीव ते स्मरः ॥३॥**

**नयन्नान्दोलयन्नेष प्रेङ्खोलयति मे मनः।**

---

१. स्मृतं पुरुषकारे (पृष्ठ ६९)।

२. 'अललभत्' इत्यपपाठः सर्वकोशेषु।

३. इदं सूत्रमनार्षमिति नागेशः (द्र० शब्देन्दुशेखरः)। 'बहुलमेतन्निदर्शनम्' इत्यपि यदि प्रामाणिकं तर्हि णिच एव तत्, न गणपाठस्येति भावः। प्रदीपोद्योते (१।३।१। पृष्ठ ११२) नागेशः। वय भाष्यमेतदेकदेश युक्तिरिति मन्यामहे।

**पवनो वीजयन्नाशा ममाशामुञ्चुलुम्पति ॥४॥**[1]
**तावत्खरः प्रखरमुल्ललयाञ्चकार** (शिशुपालवध ५।७)।

**भूवादिनवगणोक्ताः स्वार्थे णिजन्ता अपि भवन्ति, चुरादिपाठस्तु निदर्शनार्थ इत्येके। राज्यमकारयत्**—(रामा० युद्ध १२८।१०५) वाहयति, वाचयति, भेदयति कृत्यम्, रञ्जयति वस्त्रम्, तापयति घातयति। आह च—

**निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिष्यते**[2]।
**हेत्वर्थानुप्रवेशोऽपि, बुद्धयारोपाण्णिचं विना ॥**

**जजान गर्भं महिमानमिन्द्रः** (अथर्व० ३।१०।१२) अजीजनदित्यर्थः। **षड्भिर्हलैः कृषति** (द्र० ३।१।२६ भाष्ये)।[3]

**वान्ति पर्णशुषो वाताः वान्ति**[4] **पर्णशुचोऽपरे।**
**वान्ति पर्णरुहोऽप्यन्ये,**[5] **ततो देवः प्रवर्षति।**[6]

अन्ये तु **प्रातिपदिकाद् धात्वर्थे** (१०।२९६) इत्येव सिद्धे सूत्र-मूत्र- छिद्रान्धदण्डादय (१०।३१०, ३११, ३१२) उदाहरणार्थ निदर्शिता इति व्याख्यन्[7] तेन **पर्ण हरितीभावे, अघ पापे, स्कन्ध समाहारे, पक्ष परिग्रहे, तसि अलंकारे, ऊष छुरणे, क्षप प्रेरणे**—[8]क्षपयति, क्षपा,

---

१. भोजकृतशृङ्गारप्रकाशस्था इमे श्लोका.। यदाह पुरुषकारकृत् 'शृङ्गारप्रकाशे तु 'मिलन्त्याशासु जीमूता. इत्यपठित धातुषु मिलतिः प्रदर्शितः (पृष्ठ १०६)।

२. 'णिजुच्यते' वाक्यपदीये (३।७।६०) पाठः।

३. अत्र ७।४।६५ सूत्रस्थ भाष्यं तदीयं प्रदीप चानुसन्धेयम्।

४. 'वातास्ततः' पाठान्तरं दशपाद्युणादिवृत्तौ ८।४०॥

५. 'ततः पर्णरुहो वान्ति' पाठा० दश० उणादिवृत्तौ ८।४०॥

६. श्लोकोऽयमुज्ज्वलदत्तेनाप्युणादिवृत्तावुद्धृतः (पृष्ठ ६९)।

७. यथा पुरुषकारवचनं (पृष्ठ ६५) तथाऽय व्याख्याता भीमसेनः प्रतीयते। तेन काचिद्धातुवृत्तिरपि विहितेति प्रतीयते।

८. अत्र पुरुषकारः (पृष्ठ ९५) देवराजयज्वकृता निघण्टुटीका (पृष्ठ ४३, १०९) च द्रष्टव्या।

**स्फुट प्रकटभावे**—स्फुटयति, तथा **तडित् खचयतीवाशः । पांशुर्दिशां मुखमतुत्थयदुत्थितोऽद्रेः** (शिशुपालवध ५।११) ।

**चुरादिणिचो बहुलं निदर्शनं वेत्यपरे** । तेन पक्षे चोरति, चिन्ततीत्यादि सिद्धम् ।

**धातूनामर्थनिर्देशोऽयं निदर्शनार्थमिति सौनागाः । यदाहुः—**

**क्रियावाचित्वमाख्यातुमेकैकोऽर्थो निदर्शितः ।**
**प्रयोगतोऽनुमातव्याः अनेकार्था हि धातवः**[1] ॥

३२६. **णिङ् अङ्गनिरसने** । प्रातिपदिकार्थाद् अङ्गविक्षेपेऽर्थे णिङ् भवति । ङकारस्तङर्थः (द्र० १।३।१२) । हस्तं निरस्यते—हस्तयते, पादयते ।

३२७. **श्वेताश्वाश्वतरगालोडिताह्वरकाणामश्वतरेतकलोपश्च** । श्वेताश्वादीनाञ्चतुर्णां यथासंख्यं णिङ्सङ्गेऽश्वस्य तरस्येतस्य कस्य च लोपो भवति । श्वेताश्वमाचष्टे—तेनातिक्रामति वा—श्वेतयते । अश्वतरम्—अश्वयते । गालोडितम्—गालोडयते । कालोडित इति गुप्त; **गालोडितस्य प्रकृतिप्रत्ययविभागालाभात्** । आह्वरकम्—आह्वरयते । **पारायणिका** अर्थानुवृत्तिवद् अत्रापि णिचमनुवर्तयन्ति—श्वेतयति, अश्वयति, गालोडयति, आह्वरयति ।

३२८. **पुच्छादिषु धात्वर्थ इति सिद्धम्**[2] । **पुच्छभाण्डचीवराण् णिङ्** (३।१।२०) इति पुच्छादिभ्यो धात्वर्थ उदसनादौ णिङ् प्रत्ययः सिद्धः, **पाणिनिनैवोक्तत्त्वात्** । पुच्छमुदस्यति—उत्पुच्छयते, परिपुच्छयते, भाण्डानि समाचिनोति—सम्भाण्डयते । चीवरमर्जयति, परिदधाति वा—संचीवरयते भिक्षुः । एवं मुण्डादिभ्यः सत्यापपाशादिभ्योऽपि (द्र० ३।१।२१,२५) णिच् सिद्धः । **नपुंसकेन निर्देशो**[3] **मङ्गलार्थः** ।

---

१. अत्र पूर्व ४ पृष्ठस्था टि० ४, ५ द्रष्टव्या ।

२. धातुपाठरचयितुर्भीमसेनस्य वाक्यमिदमित्याहुरिति बालमनोरमाकाराः । तच्चिन्त्यम् । नहि भीमसेनो धातुपाठकारः, किन्तर्हि ? तद्वृत्तिकारः । अत्र पुरुषकारवचनम् (पृष्ठ ९५) अनुसन्धेयम् ।

३. 'सिद्धम्' इत्यत्रेति शेषः ।

**ण्यन्तनामपर्यट्टकः ।**

**भट्टक्षीरस्वाम्युत्प्रेक्षितधातुवृत्तौ क्षीर-
तरङ्गिण्यां चुरादिगणः
सम्पूर्णः समाप्तः ।**

कश्मीरमण्डलभुवं[1] जयसिंहनामनि
विश्वम्भरापरिवृढे दृढदीर्घदोष्णि ।
शासत्यमात्यवरसूनुरिमां लिलेख
भक्त्या स्वयं द्रविणनानपि धातुपाठम् ॥१॥
पदार्थजनका क्षीरस्वामिनः क्षीरधेरिव ।
वृत्तिः प्रसूता रम्येयं नाम्ना क्षीरतरङ्गिणी[2] ॥२॥

---

## विशिष्टः पाठः

**पुण्यपत्तनस्थे भण्डारकरप्राच्यविद्याशोधप्रतिष्ठाने विद्यमानायाः क्षीरतरङ्गिण्या भूर्जपत्रेषु लिखिते हस्तलेखे** (संख्या २८७/१८७५-७६) **ग्रन्थसमाप्तावित्थं पाठ उपलभ्यते**—

भट्टक्षीरस्वाम्युत्प्रेक्षितधातुपाठे क्षीरतरङ्गिण्यां चुरादिगणस्संम्पूर्णः समाप्तः । श्रीगुरुवे नमो नमः ।

[3]ॐ समुच्चितास्त्वाकृतिमच्चुरायः स्मृतैः (स्मृतेः) । एते चुरादयः सम्यगुद्वत्य (?, सम्यगुद्धृत्य) चित्ता ढौकिताः संचिता (इ)त्येके आकृतितः प्रायेणेति आकृतिशतकुपर्यट्टकसामान्यं गत्येके वेदेतिहासपुराणादिलोके वेत्याकारात्लक्षा(क्ष्या)दित्यन्यैस्स्मृतेः पूर्वाचार्य-

---

१. प्रतिलिपिकर्त्तुरिदं पद्यम् ।

२. 'पदार्थजनका क्षीरस्वामिनः क्षीरवारिधेः । इव प्रसूता पुण्येयं वृत्तिः क्षीरतरङ्गिणी' इति पाठा० ।

३. इत आरभ्यागणान्तं सर्वोऽपि पाठो लेखकप्रमादेन भ्रष्टो वर्तते । अत्र केचन श्लोका व्याख्यायन्ते अन्ते च पुंस्त्रीनपुंसलिङ्गैर्धात्वर्थनिर्देशैरुदात्तेदनुदात्तेत्स्वरितेतां व्यवस्था निर्दिशिता ।

स्मरणाच्च ।। स्वतर्कानुमितोऽत्र णित् क्वचित्स्मृते क्वचित्स्वतर्केणा-त्मोत्प्रे(प्रेक्ष्य)राणिज (?) नुमितः उल्लिङ्गितः अनुमत इष्टो वा ।। समर्थनात्वागमयेति वृत्तिजां समेत्य वृद्धै[ः] समुदाहरेदपि ।। किञ्च निजो भावाभावत्यर्थो वृत्तिकारायुक्तां समर्थनां युक्तार्थाना प्रगमयेत् । अभियुक्तोऽधिगच्छेत् तथेदानींतनैर्वृद्धैरपि सह समुदा-हरेत् लक्ष्ये दर्शयेदन्यच्च ।।

समीक्ष्य लक्ष्यं क्वचिदत्र हेतुमद् विचारणादिषु नामदर्शनात् ।।

णिजं भजेत् क्वचिल्लक्ष्यदर्शनाद्धेतुमद्विचारणार्थादिषु प्रयोजनकादि-व्यापा[र]विशेषेषु नामतो णिचमुत्पादयेत् नामत एवेति निपातो-ऽनुपसर्गादिभ्योऽतिवृत्तिकृता संगमयतेरनियमात् नामत एव णिज्भावे तु तथैव पुच्छादिषु चोत्तरेषु णित् पुनर्भ्रमत्य एव तथा पुच्छादिभ्य उत्तरेभ्य एव णिच् ।। इति शुभम् ।। श्रीरामचन्द्राय नमः ।।

कश्मी(र)मण्डलभुवं जयसिंहनाम्नि
विश्वम्भरापरिवृढे दृढदीर्घदोष्णि ।
शासत्यमात्यवरसूनुरिमं लिलेख
भक्त्या स्वयं द्रविणनानपि धातुवृत्तिम् ।।

पदार्थजनकात् क्षीरस्वामिनः क्षीरधेरिव ।
वृत्तिः प्रसूता रम्येमं(यं)नाम्ना क्षीरतरङ्गिणी ।।

।। शुभम् ।। पुंल्लिङ्गेनार्थनिर्वचनं येषां ते उदात्तेतः ।। परस्मै-पदिनः ।। स्त्रीलिङ्गेनार्थनिर्वचन येषां ते अनुदात्तेतः ।। आत्मनेपदिनः।। ।। स्त्री ।। नपुंसकलिङ्गेनार्थनिर्वचनं येषां ते स्वरितेतः ।। उभय-पदिनः ।। नपुं ।। येषा प्रथममर्थः पश्चाद्धातुः ते अनुदात्ताः । अनिटः । येषां पूर्व धातुः पश्चादार्थः ते उदात्ता सेटः । अदन्ताश्चुरादिगणपठिता कथादयः ।।

---

# क्षीरतरङ्गिणीस्थ-धातूनां वर्णानुक्रम-सूची

इह धातुवर्णानुक्रमसूच्यां प्रतिधातु गणसंख्या धातुसूत्रसंख्या च निर्दिश्यते ।

धातुगणाः

| | |
|---|---|
| १—भ्वादयः | ६—तुदादयः |
| २—अदादयः | ७—रुधादयः |
| ३—जुहोत्यादयः | ८—तनादयः |
| ४—दिवादयः | ९—क्र्यादयः |
| ५—स्वादयः | १०—चुरादयः |

**धातुभेदाः**—१—धातुसूत्रोपात्ताः, २—पाठान्तरोपात्ताः, ३—व्याख्यात्राऽन्यमतेन साक्षादुपात्ताः, ४—अन्यदीया असाक्षान्निर्दिष्टास्तदीयवाक्येनोहिताः । एते चतुर्विधा ऽपि धातवोऽत्र सूच्यां यथास्थानं निर्दिष्टाः । ते क्षीरतरङ्गिण्यां निर्दिष्टधातुसूत्रव्याख्यायां यथायथं द्रष्टव्याः ।

**टिप्पणी**—१—इह पाठे अनुनासिकोपधा धातवो नकारोपधाः पठ्यन्ते । यथा—अन्चु, अन्जू, उन्भ, तृन्फ इत्यादि । अन्यत्रैषु परसवर्णत्वं निर्दिश्यते । यथा—अञ्चु, अञ्जू, उम्भ, तृम्फ इत्यादि ।

२—धातोराद्याननुबन्धानुत्सृज्येह धातोर्निर्देशः कृतः ।

| धातुः | गणः | सूत्रसं० | धातुः | गणः | सूत्रसं० | धातुः | गणः | सूत्रसं० |
|---|---|---|---|---|---|---|---|---|
| **अ** | | | अकि | १० | ३१३ | अघि | १ | ७७ |
| अंश | १० | ३०४ | अक्षू | १ | ४३५ | अङ्क | १० | ३१४ |
| अंस | १० | ३०४ | अग | १ | ५३६ | अङ्ग | १० | ३१४ |
| अक | १ | ५३६ | अगि | १ | ९१ | अङ्घ | १० | ३१४ |
| अकि | १ | ६९ | अघ | १० | ३२५ | अचि | १ | ६०५ |

१. अन्यवृत्तिषु नकारो परसवर्णत्वेन निर्दिष्टः। यथा—अञ्चु, अञ्जू। इह सर्वत्र नकार एव निर्दिश्यते।

१. अत्र २८७ पृष्ठस्थ २ टिप्पण्यां निर्दिष्टः पाठो द्रष्टव्यः।

| धातुः | गणः | सूत्रसं० | धातुः | गणः | सूत्रसं० | धातुः | गण | सूत्रसं० |
|---|---|---|---|---|---|---|---|---|
| क्लीबृ | १ | २६७ | क्षीव | १ | ३७७ | खडि | १० | ३९ |
| क्लेश | १ | ४०० | क्षु | २ | २८ | खद | १ | ४१ |
| क्वण | १ | ३०२ | क्षुदिर् | ७ | ६ | खनु | १ | ६१७ |
| क्वथे | १ | ५८२ | क्षुध | ४ | ८१ | खर्ख | १ | ८८ |
| क्षज | १ | ५१७ | क्षुभ | १ | ४९९ | खर्ज | १ | १४१ |
| क्षजि | १ | ५१७ | क्षुभ | ४ | १३० | खर्द | १ | ५० |
| क्षजि | १० | ७३ | क्षुभ | ९ | ५२ | खर्ब | १ | २८९ |
| क्षणु | ८ | ३ | क्षुर | ६ | ५२ | खर्व | १ | ३८४ |
| क्षप | १० | ३२५ | क्षै | १ | ६५१ | खल | १ | ३६३ |
| क्षपि | १ | ५५२ | क्ष्णु | २ | २९ | खव | ९ | ६२ |
| क्षपि | १० | ७२ | क्ष्मायी | १ | ३२५ | खष | १ | ४५८ |
| क्षमू | ४ | ९९ | क्ष्मील | १ | ३४५ | खादृ | १ | ४० |
| क्षमूष् | १ | २९९ | क्ष्विडा | १ | ४९३ | खिट | १ | २०३ |
| क्षमूष् | ४ | ९९ | क्ष्विदा | १ | ४९३ | खिद | ४ | ६१ |
| क्षर | १ | ५८७ | क्ष्विदा | १ | ७०५ | खिद | ६ | १४१ |
| क्षल | १ | ५८८ | क्ष्विदा | ४ | १३४ | खिद | ७ | १६ |
| क्षल | १० | ५२ | क्ष्वेलृ, | १ | ३६० | खुजु | १ | १२१ |
| क्षि | १ | १४९ | ख | | | खुडि | १ | १८८ |
| क्षि | १ | ६७७ | खक्ख | १ | ८८ | खुडि | १० | ४२ |
| क्षि | ५ | ३३ | खच | १ | १०३ | खुर | ६ | ५२ |
| क्षि | ६ | १०८ | खच | ९ | ६२ | खुर्द | १ | २० |
| क्षिप | ४ | १३ | खच | १० | ३२५ | खेट | १० | २६० |
| क्षिप | ६ | ५ | खज | १ | १४५ | खेलृ | १ | ३६० |
| क्षिरि | ५ | ३३ | खजि | १ | १४६ | खेवृ | १ | ३३५ |
| क्षिवु | १ | ३७७ | खट | १ | २०८ | खै | १ | ६५० |
| क्षिष् | ९ | ३७ | खट्ट | १० | ८२ | खोट | १० | २६१ |
| क्षीज | १ | १५० | खड | १० | ३९ | खोड | १० | २६१ |
| क्षीबृ | १ | २६८ | खडि | १ | १८७ | खोडृ | १ | ३६८ |

| धातुः | गणः | सूत्रसं० | धातुः | गणः | सूत्रसं० | धातुः | गणः | सूत्रसं० |
|---|---|---|---|---|---|---|---|---|
| ग्लसु | १ | ४१८ | घुर | ६ | ५४ | चदि | १ | ५६ |
| ग्लहू | १ | ४३१ | घुष | १० | १७२ | चदे | १ | ६०८ |
| ग्ला | १ | ५५६ | घुषि | १ | ४३२ | चनु | १ | ५४० |
| ग्लुचु | १ | १२१ | घुषिर् | १ | ४३४ | चन्चु | १ | १२० |
| ग्लुन्चु | १ | १२२ | घुषिर् | १० | १७२ | चप | १ | २८४ |
| ग्लेपृ | १ | २५७ | घूरी | ४ | ४४ | चप | १० | ७७ |
| ग्लेपृ | १ | २५९ | घूर्ण | १ | २९५ | चम | १ | ५५७ |
| ग्लेवृ | १ | ३३५ | घूर्ण | ६ | ४९ | चम | १० | ७६ |
| ग्लै | १ | ६४२ | घृ | १ | ६६९ | चमु | १ | ३१५ |
| | घ | | घृ | ३ | १५ | चमु | ५ | ३२ |
| घग्घ | १ | ९५ | घृ | १० | ९८ | चय | १ | ३१८ |
| घट | १ | ५१० | घृणि | १ | २९४ | चर | १ | ३७१ |
| घट | १० | १६८ | घृणु | ८ | ६ | चर | १० | १८३ |
| घटि | १० | १९७ | घृषु | १ | ४६७ | चर्च | १ | ४७२ |
| घट्ट | १ | १६४ | घ्रा | १ | ६५८ | चर्च | ६ | २१ |
| घट्ट | १० | ८१ | | ङ | | चर्च | १० | १५८ |
| घर | १० | ९८ | ङुङ् | १ | ६८१ | चर्छ | ६ | २२ |
| घर्ब | १ | २८९ | | च | | चर्ब | १ | २८९ |
| घषि | १ | ४३२ | चक | १ | ७४ | चर्व | १ | ३८२ |
| घसि | १ | ४३२ | चक | १ | ५२९ | चल | १ | ५५५ |
| घस्लृ | १ | ४७१ | चकासृ | २ | ७४ | चल | १ | ५६९ |
| घिणि | १ | २९४ | चक्क | १० | ५१ | चल | ६ | ६३ |
| घुङ् | १ | ६८१ | चक्षिङ् | २ | ९ | चल | १० | ६२ |
| घुट | १ | ४९५ | चट | १० | १६७ | चलि | १ | ५४९ |
| घुट | ६ | ८७ | चडि | १ | १८२ | चष | १ | ६२८ |
| घुण | १ | २९५ | चडि | १० | ४४ | चषध | ५ | २५ |
| घुण | ६ | ४९ | चण | १ | ५३८ | चह | १ | ४८२ |
| घुणि | १ | २९४ | चते | १ | ६०८ | चह | १० | ७७ |

